**मूलं- कर्मा विद्यादिचक्रे प्रतिपुरुषमिहानादि चित्रप्रवाहे ...**

(सा.दी.) अनादिकालं இன்னளவில் பிறவாத आनुकूल्यं இன்றுபிறக்கும்படியெங்ஙனே? பிறக்குமாகில் எல்லாருக்கும் பிறக்கவேண்டாவோ வென்ன அருளிச்செய்கிறார். कर्मेति. वासनारुचि प्रकृति सम्बन्धங்கள் आदिशब्दार्थम्. अनादीत्यनवस्थापरिहार: - प्रतिपुरुषं चित्रप्रवाहமென்கை யாலே ஒருவருக்கு வருகிற आनु कूल्यादिகள் மத்தைய வனுக்குவரவேணு ...

(सा.स्वा.) यादृच्छिकसुकृतादि களுமிப்போது ஒருவனுக்குண்டாகிற தென்னக்கூடுமோ வென்கிற चोद्यத்துக்கு परिहारं मणिवर: என்கிற श्लोकत्तिलति संक्षिप्तमाயிருக்கையாலே அவ் अंशத்தை विस्तरिக்கைக்காக, பின்னை யுமொரு श्लोक மருளிச்செய்கிறார். कर्मेति. இங்கு अविद्यै देहात्म भ्रमादि विपरीतज्ञानं. आदिशब्देन वासनारुचि प्रकृति सम्बन्ध सङ्ग्रह:. इह चक्रेயென்று अन्वयं. इहपरिदृश्यमाने चित्रप्रवाहत्वेन संप्रतिपन्न इत्यर्थ: -

(सा.प्र.) कस्यचिद्विलम्बासहाच. अयमपिभेद: कथमितिशङ्कायां यथानादिकर्म रूप सामग्रीतौल्येपि, ऐश्वर्य स्वर्गादेस्तारतम्येन प्राप्तिहेतु कर्मपरिपाक: कस्यचित्पूर्वं; कस्यचित्पश्चात्; कस्यचित्सुकृत विशेषादधिक फलेच्छा; कस्यचिच्चाल्प फलेच्छा दुष्कृत विशेष सहितसुकृत विशेषादिति फलबलात्सर्वैरपि कल्पनीयं, तद्वत् ''समोहं सर्वभूतेषु नमेद्वेष्योस्ति न प्रिय:। येभजन्तितुमां भक्त्यामयिते तेषुचाप्यह'' मित्युक्त प्रकारेण समानयापि प्रथम गुरुकृपया विचित्रकर्म परिपाकलब्ध स्वावसरयाकश्चिदेव; कदाचिदेव; केनचिदेवोपाय विशेषेणमुक्तैश्वर्यादिफल सम्पन्नोभवर्तीति युज्यत इत्यभिप्रायेणाह - कर्माविद्यादीति. हि यस्मात्कारणात् इहलोके प्रति पुरुषमनादि चित्रप्रवाहे कर्मा विद्यादिचक्रे तत्तत्काले विविधाविपक्तिस्सर्व सिद्धान्त सिद्धाभवति - तस्मात्कारणात् कश्चिद्विपश्चित्तल्लब्ध स्वावकाश प्रथम गुरु कृपागृह्यमाण स्सन्नित्थंमुक्तैश्वर्यान्ति सम्पन्निधिरपि भविते त्यन्वय:. प्रतिपुरुष मनादि भूतो विचित्रसुखदुःख हेतुप्रवाहो व्यापारोयस्य तत्तस्मिन्न विद्याकर्म वासनारुचि प्रकृति सम्बन्धा ...

(सा.वि.) विपाक: कथं? किंच, सुकृत परिपाकेनेश्वर प्राप्तीच्छाकस्य चिद्विलंबसहा. कस्यचिद्विलंबासहा. अयमपिभेद: कथमिति शङ्कायां यथानादि कर्मरूप सामग्रीतौल्येप्यैश्वर्य स्वगदिस्तारतम्येनप्राप्ति हेतुकर्म परिपाक: कस्यचित्पूर्वं; कस्यचित्पश्चात्; कस्चचित्सुकृत विशेषादधिकफलेच्छा: कस्यचिच्चाल्पफलेच्छा; दुष्कृत विशेषसहितसुकृत विशेषादिति फलबलात्सर्वैरपिकल्पनीयं. तद्वत्सर्व समानयापि भगवत्कृपया विचित्रकर्म परिपाकलब्धस्वावसरयाकश्चिदेव कदाचि देव केनचिदुपाय विशेषेणमुक्तैश्वर्यान्ति फल सम्पन्नोभवतीति युज्यत इत्यभिप्रायेण, अधिकार सङ्ग्रहश्लोकमाह. कर्माविद्येति. प्रतिपुरुषमनादि चित्रप्रवाहे, अनादिनानाप्रकारसन्ततौ. कर्मा विद्यादिचक्रे, आदि शब्दाद्वासनारुचि प्रकृतीनांग्रहणं. अविद्यया देहात्मादि भ्रमेणकर्म; कर्मणादेह सम्बन्ध:. ततोवासना. तयारुचि:; तत:कर्म; कर्मणाविद्येति प्रकारेण कुलालचक्रवत्परि वर्तमानत्वाच्चक्र इत्युक्तं.

(सा.सं.) शीलस्य कथमद्य मुमुक्षोद्यम: - उद्यमेच सर्वेषामपि साकिन्नस्यादित्यत्राह - कर्माविद्या ...

**मूलं- तत्तत्कालेविपक्तिर्भवतिहि विविधा सर्वसिद्धान्तसिद्धा - तल्लब्धस्वावकाश ...**

(सा.दी.) மென்கிறअति प्रसङ्गம் परिहृतமாய்த்து - विविधा, विपक्तिः. அதாவது, ஒருவனுக்கு ऐश्वर्य हेतुकर्मं पक्वமாகிறது. ஒருவனுக்கு दारिद्र्यकर्मं. ஒருவனுக்கு स्वर्गहितुकर्मं. ஒருவனுக்கு मोक्षोपयोग्यानु कूल्य हेतुकर्मं. सर्वसिद्धान्त सिद्धा, வென்று இப்படி अङ्गीकरिயா விடில் तत्तत्सिद्धान्त सिद्धமான मोक्षமன்றிக்கே யொழியுமென்று கருத்து. तत्, तस्मात्. कालविशेषे पुरुष विशेषे कर्मविशेष विपाकंகூடு

(सा.स्वा.) इहचक्रे प्रति पुरुषंतत्तत्काले विविधाविपक्तीर्भवति हीत्यन्वयः - चित्र प्रवाहत्वं हेतुगर्भ विशेषणं. प्रवाहस्य चित्रत्वात् ஒருவனுக்கொரு कालविशेषத்திலே யிவ்வனுकूलावस्थैகள் கூடுமென்றுகருத்து. तत्तदित्यादि वाक्ये कस्य चित्कर्मिणः प्रागलब्ध प्रजापति प्रभृति पदनिदर्शनमपि विवक्षितं. विपक्तिः, कर्मणां सहकारिलाभः. फलविशेषोद्गतिर्वा. विविधाविपक्तिः, कस्य चित्प्रजापतित्व प्राप्ति हेतुकर्म विपक्तिः. कस्यचिद्रुद्रत्वप्राप्ति हेतुकर्म विपक्तिः. अन्यस्येन्द्रत्व प्राप्ति हेतुकर्मविपक्तिः - अपरस्यमोक्षोपयोग्यानुकूल्य हेतुकर्म विपक्तिरित्यर्थः. प्रतिपुरुषमित्यनेन ஒருவனுக்குவருகிற आनुकूल्यादिகள் மத்தையவனுக்கு வரவேணுமென்கிற अतिप्रसङ्गம் परिहृतம் - तथाच कर्मा विद्यादि चक्र प्रवाहस्य विचित्रत्वात्कस्मिंश्चित काले कस्यचित्कर्मिणः प्रागलब्ध प्रजापति प्रभृति पदप्राप्ति हेतूपनिपात वत्இவனுக்கும்முன்பில்லாத मुक्ति हेतूप निपातமொருकाल विशेषத்திலே संभविக்கத்தட்டில்லை யென்று கருத்து. चार्वाकव्यतिरिक्तास्सर्वे संसरतां सामग्रीप्रवाह वैचित्र्यान्मुक्ति हेतूप निपात मिच्छन्ति - अतो नात्र केनापि विमन्तव्यमित्यभिप्रायेण सर्वसिद्धान्त सिद्धत्वोक्तिः - हिशब्दोहेतौ - यस्मादेवं तस्मात्तल्लब्धे त्यादिना वक्ष्यमाण मुपपद्यत इतिभावः. तच्छब्देन मोक्षानुकूल विपाकः परामृश्यते. स्वशब्दः कृपा विषयः - तेनविपाक विशेषेण लब्ध स्स्वावकाशो यस्या इतिविग्रहः. सम्पदिह विवेकवैराग्यादि रूपा - ...

(सा.प्र.) त्मके चक्रे. तत्तत्काले. विविधा, नानारूपा. विपक्तिः, तदातदा तत्तत्फलोत्पत्ति स्सर्वैस्सिद्धान्ति भिरङ्गीकृता भवति. हीत्यनेन विषमविपाकस्य सर्वैः परिदृश्यमानत्वं सूच्यते - तल्लब्धेत्यादि, तया विपक्त्यापरिपाकेन. लब्धः स्वस्यावकाशो ययासातथाविधया. प्रथमस्यगुरोर्भगवतः. कृपया ...

(सा.वि.) अनवस्थादोष परिहारायानादीत्युक्तं. बीजाङ्कुरवदनाद्यनवस्थायान दोषत्वमितिभावः. चित्रप्रवाह इतितत्तत्काल विपक्ति हेतुतयोक्तं. तत्तत्काले विपक्तिर्भवति, कालतारतम्येन परिणामो भवतीत्यर्थः, साच; विविधा, नाना प्रकारा. कस्यचिदैश्वर्य हेतुकर्म विपाकः. कस्यचिद्दारिद्र्यहेतुकर्म विपाकः. कस्य चित्स्वर्गहितुकर्म विपाकः. कस्य चिन्मोक्षोपायानुकूल्य हेतुकर्मपरिपाक इतिवैविध्यं. इयंसर्वसिद्धान्त सिद्धा, सर्वैरपिइयं स्थिति रङ्गीकर्तव्या. अन्यधातत्तन्मत सिद्धमोक्षोनस्यात्. तत्, तस्मात्कारणात्. कदाचिल्लब्ध स्वावकाशया, लब्धयादृच्छिकादि सुकृताद्यवसरया. प्रथम गुरुकृपयागृह्य ...

(सा.सं.) दीति - आदिशब्देन वासनारुच्यादयोगृह्यन्ते - कर्माविद्यादि रूपेचक्रे प्रतिपुरुषमनादितया विचित्रतयाच प्रवहतिसति - इह, जगति. तत्तत्काले कर्मणः फलौन्मुख्यदशायां. विविधा, भोग मोक्षाद्यनुगुणा. विपक्तिः, फलप्रदस्य भगवतः कृपाकृत परिपाक विशेषोभवतिहीति आस्तीकैस्सिद्धान्तिभि रेवंवाच्येति भावः - तत्, तस्मात्, लब्धस्वावकाशया - प्रथमगुरोर्भगवतः कृपया विषयी ...

**मूलं- प्रथम गुरुकृपागृह्य माणः कदाचिन्मुक्तैश्वर्यान्त सम्पन्निधिरपि भविता कश्चिदित्थं विपश्चित् ॥७॥**

इति कवितार्किकसिंह्यस्य सर्वतन्त्र स्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य

कृतिषु - श्रीमद्रहस्यत्रयसारे - उपोद्घाताधिकारः प्रथमः.

श्रीमतेनिगमान्तमहादेशिकाय नमः

---

(सा.दी.) கையால் - अवकाशः, यादृच्छिकाद्यवसरः. प्रथम गुरुकृपा गृह्यमाणः, என்று जायमान कालकटाक्षं विवक्षितமாகிறது. मुक्तैश्वर्यान्तिसम्पत्, सात्विक संभाषण प्रभृतिயாக உண்டாமது - इत्थम्, उक्तप्रकारத்தாலே - विपश्चित्ताय्, ज्ञानவானாய்க்கொண்டு मुक्तैश्वर्य भाக்காம். अपिயென்கையாலே எப்படிतत्तत्कर्म विपाकத்தாலே ऐश्वर्यादिभाக்காகிறான் அப்படியே யென்றபடி ॥७॥

इति सारदीपिकाया मुपोद्घाताधिकार व्याख्यासमाप्ता.

---

(सा.स्वा.) अपिशब्दस्संभावनार्थः - यथाप्राजापत्याद्यैश्वर्य भाग्भवति तथाविवेकवैराग्यादि संपन्निधिर पीत्येवं समुच्चयार्थोवा - इत्थं, पूर्वोक्त यादृच्छिक सुकृतादि मूल सदाचार्योपदेशेन - यद्वा, इत्थं, प्राजापत्याद्यैश्वर्य विपाकवन्मुक्तैश्वयान्त सम्पन्निधिरपीत्यन्वयः - विपश्चित् - சிலधार्मिक ரடியாக हेयोपादेय विभागक्षम ஞானவன் என்றபடி.

इति सारास्वादिन्यामुपोद्घाताधिकारः प्रथमः.

---

(सा.प्र.) गृह्यमाणो विषयीक्रियमाणोर्विपश्चित् स्वस्वरूप परस्वरूप, उपाय स्वरूप, फलस्वरूप, विरोधि स्वरूपाणां विविच्यज्ञानवान् पुरुषः. इत्थं, न्यूनातिरित्तैश्वर्यादि प्राप्तिन्यायेन "पराचिख्या निव्यतृणत्स्वयम्भूस्त स्मात्परां पश्यति नांतरात्मन् कश्चिद्धीरः प्रत्यगात्मान मैक्षता व्यक्तचक्षुर मृतत्व मिच्छन्तीत्यादि" श्रुत्यानुगुण्यान्मुक्तै श्वर्यादि पर्यन्तसम्पदां विवेक निर्वेदादीनां निधिरपिभवितै वेत्यर्थः. सर्वंवाक्यं सावधारण मिति न्यायात् यतोविद्याकर्म वासनारुचि प्रकृति सम्बन्धाः प्रति पुरुषं विचित्राः प्रवर्तन्ते. अतः कस्यचित्पूर्वं मुमुक्षा. कस्यचिच्च पश्चादिति युज्यत इत्यभिप्रायेणोक्तं तत्तत्काले विपक्ति रिति. अत एव विळम्बासहत्व तदभावा वप्युप पद्येत इत्यभिप्रायेणोक्तं. विविधेति सर्वसिद्धान्ते त्यनेन दृष्टान्त स्सूचितः -

इति सारप्रकाशिकायां उपोद्घाताधिकारः प्रथमः.

---

(सा.वि.) माणः, जायमानकटाक्ष विषयीकृतः. "ईश्वरस्यच सौहार्दं यदृच्छासुकृतंतथा विष्णोः कटाक्षं" इत्युक्त प्रकारेण. कश्चिद्विपश्चित्, कश्चिदिति दौर्लभ्यं सूच्यते. मुक्तैश्वर्यान्त सम्पन्निधिरपिभविता, भविष्यति - अतोनात्रविप्रतिपतिः कार्येतिभावः ॥७॥

इति सारविवरिण्यामुपोद्घाताधिकारः प्रथमः.

---

(सा.सं.) क्रियमाणः. कदाचित्, यादृच्छिकादेः फलौन्मुख्यदशायां. मुक्तस्ययदैश्वर्यं तत्पर्यन्त सम्पदां विवेकनिर्वेदादीनां निधिर्निलयः. विपश्चिदपि, मुक्तोपिभवितैव - एतादृशयादृच्छिकादेस्सर्वेष्वप्य भावात्कश्चिदित्युक्तं. अतो नोक्त शङ्कावकाश इतिभावः

इति सार प्रकाशिका सङ्ग्रहे उपोद्घाताधिकारः प्रथमः.

श्रियै नमः

श्रीमतेरामानुजाय नमः

श्रीमते निगमान्त महादेशिकाय नमः

# अथ सारनिष्कर्षाधिकारः

मूलं- श्रुतिपथ विपरीतं

(सा.दी.) श्रीशानुकम्पा जुष्टस्य मुमुक्षोरधिकारिणः। ज्ञातव्यार्थ प्रमाणेषु सारोग्राह्य इतीर्यते॥

(सा.स्वा.) இப்ரபந்தத்துக்கு रहस्यत्रयं विषयமென்றும் स्वामिकैङ्कर्यं प्रयोजन மென்றும் அடியிலே निर्दिष्टங்களான இவ்விரண்டில் இந்த स्वामि कैङ्कर्यं प्रयोजनமாக க்கூடு மென்னுமிடம் இப்படி उपपन्नமானாலும் रहस्यत्रयத்தையே இप्रबन्धத்துக்கு विषयமாக்குகைக்கு नियामक முண்டோ? अध्यात्म विषयशब्दराशिயில் सारतमமாய்க்கொண்டு मुमुक्षूपादेय மாயிருக்கை नियामक மென்னில் व्यापक मन्त्रान्तरादिகளும் मुमुक्षूपादेयங்களாக அவ்வோशास्त्रங்களிலே प्रतिपन्नங்களாயிருக்கையால் அவைகளைத்தானிங்கு विषयங்களாக் கொள்ளலாகாதோ? मुमुक्षुவைப்பற்ற प्रबन्धं பண்ணுமிடத்தில் सांख्ययोगादि शास्त्र विषय

(सा.प्र.) गुरुपरिषदुपज्ञं प्राप्येत्यनेन ''परीक्ष्यलोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्. नास्त्यकृतः कृतेन. तद्विज्ञानार्थं सगुरुमेवाभिगच्छेत् - सचाचार्यवंशोज्ञेयः. आचार्याद्धैव विदिता विद्यासाधिष्टं प्राप'' दित्यादिश्रुत्यानुगुण्येन गुरु परम्परोपसर्पति पूर्वकं तत्वज्ञानं संपादनीय मित्युक्तं. मुक्तैश्वर्यान्ति सम्पन्निधिरपि भवतीत्यनेनतादृश ज्ञानवतां मोक्षस्स्यादित्युक्तं; तन्नोपपद्यते ''अनन्तपारं बहुवेदितव्य मल्पश्चकालो बहवश्च विघ्नाः। सूक्ष्मः परमदुर्ज्ञेयस्सतांधर्मः प्लवङ्गम॥ शास्त्रज्ञानं बहुक्लेशंबुद्धेश्चलनकारण'' मित्यादिभिस्तत्व ज्ञानस्य दुस्संपादत्वावगमात्केनापि मोक्षस्यसाधयितु मशक्यत्वादित्यत्र ''यत्सारभूतं तदुपाददीत हंसोयथा क्षीरमिवाम्बु मिश्रं। उपदेशाद्धरिंबुध्वाविरमेत्सर्वकर्मस्वि'' त्याद्युक्त प्रकारेण सारतमांशस्य रहस्य त्रयोपदेशतोज्ञानं संपाद्योपायानुष्ठानेन मोक्षस्यप्राप्तुं शक्यत्वं प्रदर्शयन्त्याज्यात्ल्पसार सारतर सारतमांशानिदमिति निर्दिश्य सारतमांशेप्युत्कृष्टांशस्य...

(सा.वि.) पूर्वत्र रहस्यत्रयத்திலே प्रतितन्त्र सारोद्धारेण सङ्ग्रहिக்கப்படுகிறது. इति अपेक्षित सर्वार्थ सङ्ग्रहत्वा द्रहस्यत्रयं सारभूतमिति सारभूतत्व मुपक्षिप्तं. तदेव सारतमत्वमुप ...

(सा.सं.) इत्थं अस्मिन्नधिकारे तत्वहित पुमर्थसत्तासिद्धा. अधिकारान्तेच मुमुक्षुज्ञेयार्थानां रहस्यत्रये प्रतितन्त्रसारोद्धारेण सङ्ग्रहीतत्व मुक्तं. अथोक्तार्थ निर्णायक प्रमाणेषु किं सारतममिति जिज्ञासायां रहस्यत्रयस्यैव तथात्वमिति निरूपयितु मधिकारान्तर मारभमाणः...

**मूलं- क्ष्वेळकल्पं श्रुतौच प्रकृति पुरुष भोग्यप्रापकांशो ...**

(सा.दी.) இந்தसारनिष्कर्षाधिकारार्थத்தை सङ्ग्रहिக்கிறார் - श्रुतीति - இதுமுந்தர (முன்னம்) कुतर्कங்களால் अविचाल्यமாகப்பெற்றோமிறே, என்கிறஉகப்புத்தோன்ற श्रुति என்று निर्देशिக்கிறார். श्रूयतेनित्यमिति श्रुतिः. श्रुतिमार्गवैदेशिक மென்றபடி - ஒருவன் ஒன்றிலேअत्यन्त विमुखனானால் அவன் இதன்வழியும் போகானென்னக்கடவதிறே - बाह्यशत्रुக்களாயும் आन्तरशत्रुக்களாயு முள்ள बाह्यकुदृष्टि களுடையகு ग्रन्थங்களை श्रुतिपथ विपरीत மென்கிறது - क्ष्वेळकल्पं, ''क्ष्वेळस्तु गरळंविष'' मिति निघण्टुः - मथन समय संभूत वासुकी मुखोद्गत विषज्वालातुल्यं - सद्योमारकங்களாகையாலவற்றின் அருகும் செல்லவொண்ணா தென்றபடி - ''கலையரக்க த்தமாந்தர் காண்பரோகேட்பரோதான்'' श्रुतौच, श्रुतावपि என்றதனுடைய गौरवம்தோற்றுகிறது - श्रुति विपरीतं வேணுமாகில் கழிக்கிறது - नित्य निर्दोषமான वेदंकात्स्र्येनोपादेय மிறேயென்ன அதுनित्य निर्दोषमाயிருந்ததே யாகிலும் அது தன்னிலும் अनुपादेयांशம் உண்டென்கிறார் - श्रुताविति - प्रापकांशश्च என்று மேலேयोजिக்கவுமாம் - மேலே उपनिषत्तै अमृतமாக निरूपिக்கையாலே श्रुति समुद्रस्थानीय மென்றுதோற்றுகிறது - प्रकृतीत्यादि, प्रकृतिभोग प्रापकांश மாவது,

(सा.स्वा.) மாகத்தான் பண்ணலாகாதோ? इत्यादि चोद्यங்களை இவ்अधिकारத்தாலே परिहरित् தருளக் கோலி இதன் அர்த்தங்களை ''इष्टं हिविदुषा'' மென்று முன்பு சொன்ன கணக்கிலே संग्रहिக் கிறார் - श्रुतिपथेत्यादिயால். क्ष्वेळकल्पं, विषतुल्यं. प्रयोजनமில்லாதவள வன்றிக்கே अनर्थावहமு மாயிருக்கு மென்றபடி - இத்தால் सांख्य योगादि शास्त्र बाह्यமாகையாலே இங்கு विषयமாகக் கொள்ளாதொழிந்த தென்றுகருத்து - श्रुतौच, श्रुतावपि. नित्यनिर्दोषायामपि श्रुतौविवेकिन स्त्याज्यां शोस्तीति च शब्दस्यभावः - प्रकृति भोग ...

(सा.प्र.) ग्राह्यत्वमाह. श्रुतिपथेति. यतः श्रुतिपथ विपरीतं क्ष्वेळकल्पं. श्रुतौचप्रकृति पुरुषभोगप्रापकांशोनपथ्यः. तत्तस्मात्कारणात् - मृत्युभीता आचार्याः इह विबुधगुप्तं उपनिषदमृताब्धेरुत्तमं सारंविचिन्वन्तीत्यन्वयः - श्रुतिपथ विपरीतं, श्रुतौ विहितानां नित्यनैमित्तिकानामननुष्ठानंचयत्. क्ष्वेळकल्पं, विषवद चिराद्बाधजनकं. अत एव तत्प्रतिपादकं बाह्यशास्त्रं त्याज्यमित्यर्थः. ''विहितस्याननुष्ठानान्निन्दितस्य निषेवणात्। अनिग्रहाच्चेन्द्रियाणांनरः पतनमृच्छती'', त्यादि प्रमाणादितिभावः. प्रकृतीत्यादि, प्रकृतेः पुरुषस्यच योयंभोगः पशुपुत्रादि राज्यस्वर्ग ...

(सा.वि.) पादयति, श्रुतिपथेति. श्रुतिपथ विपरीतं, नास्तिकाद्यागमाः. क्ष्वेळकल्पं, कालकूट विषतुल्यं. आत्मनाश साधनं. अतोऽसारमित्यर्थः. श्रुतौच प्रकृति पुरुषभोगप्रापकांशोनपथ्यः, न हितः. नोपादेय इत्यर्थः. प्रकृतिभोगः ऐहिकैश्वर्यामुष्मिक स्वर्गादि ब्रह्मलोकान्तानुभवरूपः. तत्रैहिकैश्वर्यप्रापकांशोल्पसारः. दुःखमिश्रत्वादा शुविनाशित्वाल्प सुखत्वादि विशिष्ट प्रतिपादकत्वादल्पसारः.

(सा.सं.) तत्प्रतिपाद्यं सङ्गृह्णाति. श्रुतिपथेति. विपरीतं, बाह्यशास्त्रं. क्ष्वेळकल्पं, आत्महानिकरं, ऐहिकामुष्मिक भोगौ प्रकृतिभोग शब्देन सङ्गृहीतौ. पुरुषभोगः स्वात्ममात्रानुभवः.

**मूलं- नपथ्यः॥ तदिहविबुधगुप्तं मृत्युभीताविचिन्वन्त्यु पनिषदमृता (ब्धावु)ब्धे ...**

---

(सा.दि.) पश्वन्नवृष्ट्याद्यैहिक फलसाधन प्रतिपादकांशமும்; स्वर्गाद्यामुष्मिक फलसाधन प्रतिपादकांशமும். पुरुषभोग प्रापकமாவது, केवलात्मानुभवसाधन प्रतिपादकांशம் - नपथ्यः, இப்போ इष्टसाधनமாகை யாலே प्रियமாயிருந்த தேயாகிலும் उदर्कத்தில் दुःखमिश्रमा யிருக்குமென்றபடி - प्रकृत्यादिभोग प्रापकांशங்கள் मद्यादि स्थानीयங்கள். तत्, तस्मात्. इह, श्रुतौ. इहोप निषदमृताब्धावित्यन्वयः - विबुधगुप्तं, विबुधैर्गुप्तं. திருக்கோட்டியூர் நம்பிமுதலானார் रहस्यத்தை गोपित्தமை सुप्रसिद्धமிறே. विबुधर्, सर्वेश्वरस्थानीயர். उपनिषदित्यादि - श्रुतिயிலே கடைந்தெடுத்த उपनिषदमृतத்தைअब्धि स्थानीयமாக்கி அதில் நின்றும்उत्तम सारமான रहस्यत्रयத்தை सङ्ग्रहिப்பார்களென்ற படி. सर्वेश्वरனாலே "அமுதில் வரும் பெண்ணமுதுண்ட வென்றும், भ्रमदमृततरङ्गा वर्ततः प्रादुरासीः" என்றும்; சொல்லுகிற படியே தன்திருவுள்ளத்தாலே मथित्து अमृतத்திலும் ஸாரமாக ग्रहित्துதன் ...

---

(सा.स्वा.) प्रापकांशः, ऐहिकामुष्मिक फलसाधन प्रतिपादकांशः. पुरुषभोग प्रापकांशः, कैवल्योपायप्रतिपादकांशः. नपथ्यः, सद्यः प्रियत्वेप्युदर्क दुःखहेतुरित्यर्थः. இத்தால்ऐश्वर्य कैवल्यार्थि களைக்குறித்துத்தான் प्रबन्धं பண்ணலாகாதோ வென்றுபிறக்கும் चोद्यंपरिहृतम्. तत्, तस्मात्. इह, श्रुतौ. अनेन प्रमाणान्तरमयोग्य मितिव्यज्यते. இத்தால் मोक्षமும் तदुपायமும் प्रत्यक्षादि प्रमाणங்களைக் கொண்டு தான்அறியலாகாதோ வென்றுபிறக்கும் चोद्यं परिहृतं - विबुधगुप्तं, पूर्वाचार्य सुरक्षितं - मृत्युः, संसारः. विचिन्वन्ति, यत्नेन संगृह्णन्ति. एतेन मृत सञ्जीविनीव दुर्लभत्वं द्योत्यते. वर्तमान निर्देशेनाद्यतन शिष्टैरपि परिग्रहीतत्व मुक्तम्भवति. अमृतत्वरूपणेनोपनिषदां सारतमत्वं व्यज्यते - अब्धि शब्देनानन्त पारमिति वक्ष्यमाण न्यायमुपनिषत्तुக்களிலும் तुल्यமென்று सूचितम् - उत्तमं सारमित्यनेन पूर्वाचार्य सुरक्षितत्वाद्यु क्त्याच रहस्य...

---

(सा.प्र.) स्वाराज्य पशुपति पदाद्यनुभवः कैवल्यानु भवश्च. तस्य; प्रापकः, ज्ञापकः. स एवांशः - यद्वा प्रापकः, प्राप्तिकारणं. स एवांशः तत्तत्साधनानीत्यर्थः. तत्, तस्मात्कारणात्. इह, पुरुषार्थ ज्ञापकेंशे. तत्तत्पुरुषार्थसाधनां शेचेत्यर्थः. विबुधगुप्तं, "एतद्वैमहोपनिषदं देवानां गुह्य" मित्युक्त रीत्याविबुधेभ्योपिगुप्तं. शब्दादि विषयेषु तेषांभोग्यताबुद्ध्युत्पादनेन निवृत्तिधर्म प्रतिपादकांशो देवेभ्योनिन्हुत इतिभावः. मृत्युभीताः, "मृत्योस्समृत्युमाप्नो" तीत्यादिषु मृत्युस्संसार इति व्याख्यातं. तस्माद्भीताः, मोक्षकांक्षिण इत्यर्थः. उपनिषदमृता ब्धेरिति उपनिषद्गतानां विद्यानां "एतेन प्रतिपद्यमाना इमंमानव मावर्तन्नावर्तन्त" इत्युक्त ...

---

(सा.वि.) आमुष्मिक स्वर्गाद्यनुभव प्रापकांशोदुःखोदर्कास्थिर पुरुषार्थ प्रतिपादकत्वेपि दुःख मिश्रत्वाभावेन ऐहिक सुखाद्यपेक्षयातिशयितत्वेनच केषांचित्सारत्वेन प्रतीयमानार्थ प्रतिपादकत्वात्सारः. सोपि, नोपादेयः. अतिशयितस्य विद्यमानत्वात्. पुरुष भोगप्रापकः, केवलात्मानुभव प्रापकः. पूर्वोक्तदोषाभावेन सारतरः. सोपिनो पादेयः. ततोप्यतिशयितस्य उत्तम पर्वणस्सत्वादितिभावः. तत्, तस्मात्कारणात्. मृत्युभीताः, संसाराद्भीताः. आर्याः, उपनिषदमृताब्धेः षष्ठ्यन्त...

---

(सा.सं.) तत्, तस्मात्. इह, संसारे. विबुधैः, पूर्वाचार्यैः. सत्पात्रोपदेशादिना रक्षितं ...

**मूलं- रुत्तमं सारमार्याः ॥८॥**

(सा.दी.) திருமார் பிலேவைத்தணைத்து திருவுத்தரீயத்தா லேगुप्तैயான பிராட்டி स्थानीयम् रहस्यत्रयं - அவளும், मृत्युभीतராலே आश्रयिக்கப்படுமிறே. सुरसाधारण विबुधादि शब्दத்தாலே निर्देशि யாமல் आर्याः என்றது அவர்கள்अमृतमात्रத்தாலே நின்றவர்களாகையாலே அவர்களிலும் समर्थरा ன लक्ष्मीसमाश्रयणं பண்ணுகிற வர்களுடைய स्थानीयत्वं रहस्य संग्राहकருக்கு தோற்றுகைக்காக. श्रुतिपथ विपरीतமென்று असारशब्दार्थமும்; प्रकृतीत्यादिயாலே अल्पसार; सार; सारतर शब्दार्थமும்; उपनिषद मृतமென்று सारतम शब्दार्थமும்; अब्धिயென்று "अनन्तपार" மென்கிற प्रमाणத்தினுடைய पूर्व खण्डार्थமும், उत्तमसारமென்று இந்த रहस्यत्रयத்திலித्यादि प्रथमवाक्यத்தினுடையவும்; अनन्त पारमित्याद्युत्तर खण्डத்தினுடைய पुमर्थमुम्; सङ्गृहीतங்களாய்த்தன ॥८॥ पूर्वाधिकारान्तத்தில் सार तमமான என்று ...

(सा.स्वा.) लयस्यव्यापकमन्त्रान्तराद्यपेक्षया वैलक्षण्यातिशयः ख्यापितः இத்தால் இப்प्रबन्धத்துக்கு இத்தை विषयமாகக்கொள்ளுகைக்கு नियामकं சொல்லித்தாயிற்று. आर्याः, सम्यग्विवेकिनः. मोक्षोपायै करसिका इत्यर्थः. இத்தால் चतुर्दश विद्यास्थानமிருக்க अध्यात्म विषयमात्रத்தைउपादानं பண்ணக் கூடுமோ என்றுண்டாம் चोद्यं परिहृतम्. मृत्युभीतत्वोक्त्या त्वरातिशय व्यञ्जना दुपनिष द्भाग மிருக்கतदेक देशभूत रहस्य त्रयोपादानं கூடுமோ வென்றுபிறக்கும் चोद्यमुम् परिहृतम् ॥८॥

(सा.प्र.) रीत्या नित्यत्वापादकत्वादमृतत्वेन निरूपणं. तादृशानन्त विद्याप्रतिपादकत्वादु पनिषद्भागस्याब्धित्व निरूपणं. उत्तमं सारमिति, "सत्कर्मनिरताश्शुद्धास्सांख्ययोग विदस्तथा। नार्हन्ति शरणस्थस्य कलांकोटितमीमपि" इत्यादि प्रमाणाद्भरन्यास प्रतिपादकं शास्त्र मुत्तम मितिभावः. क्ष्वेळकल्प मित्यसार उक्तः. प्रकृतिभोग प्रापकांश इत्यत्र ऐहिकैश्वर्य प्रापकांशोल्पसारः. आमुष्मिकैश्वर्य प्रापकांशस्सार इति विवक्षितं. पुरुषभोग प्रापकांशस्सारतर इति विवक्षितं. उपनिषदमृताब्धेरिति सारतमानिब्रह्मोपासनानि विवक्षितानि. उत्तमं सारमिति भरन्यासशास्त्रं विवक्षितं एतत्सर्वमसारमिति श्लोकेसुस्पष्टमुक्तं. एवंच, विचक्षणैस्सर्वै रुत्तमसार एवग्राह्य इत्युक्तं भवति ॥९॥

(सा.वि.) मेतत्. तत्सम्बन्ध्युत्तमंसारं उपासना प्रतिपादकांशः - उत्तमस्सारः. सारतमशब्दार्थश्च प्रपत्ति प्रतिपादकं रहस्यत्रयमुत्तमस्सार इति. उच्छब्दात्तम प्रत्ययेन निष्पन्नमुत्तम शब्दं प्रयुञ्जानस्यायंभावः. सारतरशब्द निर्दिष्टकेवलात्मानु भवप्रापक परमात्म प्रापकोपासन प्रतिपादकयोर्द्वयोर्मध्येतर प्रत्ययान्त सारतर शब्द समानार्थकोच्छब्दाद्वयो रतिशय बोधक तरप्रत्ययभाक्त्वार्हत्वादुपासन भागस्य. प्रपत्ति प्रतिपादक भागस्यरहस्यत्रयस्यतु त्रयाणां मध्येतिशय बोधक तमप्रत्ययभाक्त्वर्हत्वात्. एवंच सारतमा दुत्कृष्टत्वं फलितं. अत एवाग्रेமிகவும் ஸாரதமமாயிருக்கும் इति वक्ष्यति. विचिन्वन्ति, सङ्गृह्णन्ति. अत्यन्तसारतम शास्त्र स्यामृततुल्यत्वेन मृत्यु भीतानामुपादेयतमत्वं युक्तमितिव्यज्यते ॥८॥

(सा.सं.) सारंरहस्यत्रय रूपं विचिन्वन्ति. तत्वाद्यवबोधक प्रमाणत्वेन विचारयन्तीत्यर्थः ॥८॥

अष्टाक्षरेणैव मुमुक्षोर्ज्ञेय यावदर्थज्ञानाच्चरमश्लोकविहितै कोपाया वलम्बने ...

**मूलं-** இந்தரஹஸ்யத்ரயத்தில் திருமந்த்ரம், ''सर्वमष्टाक्षरान्तःस्थं'' என்கிறபடியே தன் அர்थத்தை அறிய எல்லா அர்थங்களையும் அறிந்து தரும்படியா யிருக்கையாலும் - चरमश्लोकं, ''सर्वधर्मान् परित्यज्यमामेकं शरणंव्रज'' என்று சொல்லுகிற உபாயமொன்றையுமே अवलम्बिக்க सर्वोपाय फलसिद्धि யுண்டாமென்று स्थापिக்கையாலும் द्वयமும் कठश्रुत्यादिகளில் சொல்லுகிறபடியே தன்னை ஒருக் கால் உச்சரித்தவனை सर्वप्रकारத்தாலும் कृतकृत्यனாக்கவல்ல प्रभावத்தையுடைத்தாயிருக்கை யாலும் रहस्यत्रयமே मुमु ...

(सा.दी.) சொன்ன उत्तमसारत्वத்தில் हेतुவைக்காட்டாநின்றுகொண்டு रहस्यत्रयमे मुमुक्षुவுக்கு उपादेयமென்கிறார். இந்த वित्यादि. உபாயமொன்றையுமே இது ''सर्वसाध्येष्वभिन्नता'' என்கிற एकशब्दार्थाभिप्रायத்தாலே. ''यस्सकृदुच्चारस्संसारतारकोभवतीति कठश्रुतिः - रहस्यत्रयமே आदरणीय மென்றுअवधारणத்தாலே व्यवच्छेद्यங்களான शब्दराशिகளுடைய अनुपादेयत्वத்தை सहेतुकமாகக் காட்டா நின்றுகொண்டு वेदान्त...

(सा.स्वा.) व्यापकमन्त्रान्तरादिகளைத்தான் இங்கு विषयமாக்கலாகாதோ என்கிறशङ्கைக்கு श्लोकத் தில்சொன்ன परिहारங்களில்उत्तम शब्द विवक्षित परिहारांशத்தை व्यक्तமாக்குகிறார். இந்தரஹஸ்யத்ரத்தி லித்யாதியால். ஒன்றையுமேअवलम्बिக்க वित्यादि, இது ''सुदुष्करेणशोचेद्यः'' என்கிற श्लोकोक्त योजनैயைப்பற்ற சொன்னபடி. स्थापिக்கையாலு மென்றது ''माशुचः'' என்கிறதைக் கணிசித்துச் சொன்னபடி. अनुष्ठानात्पूर्वं विधिवाक्यपरामर्शमावश्यक மென்றகருத்தாலே இங்கு द्वयात्पूर्वं चरमश्लोकத்தையெடுத்தது. कठेत्यादि. ''यस्सकृदुच्चार स्संसार तारकोभवतीति'' श्रुतिः रहस्यत्रयमे इत्यादि. व्यापकमन्त्रान्तरங்களும்இவ்வுपायத்துக்கு विधायक वाक्यान्तरங்களும்; शरणागति मन्त्रान्तरங்களும் अध्यात्म विषय ...

(सा.प्र.) ननु मुमूक्षूणां सारतम मुपादेयमिति नोपपद्यते. तत्तत्सिद्धान्त प्रतिपादकादिवितत प्रबन्धानामशक्य ज्ञानत्वेन तेषां असारत्वानिश्चये सारतमस्येदमिति ज्ञानासंभवादित्यत्र मुमुक्षूपादेयं सारतमं रहस्यत्रयमेवेति सोपपत्तिकमाह. இந்த रहस्यत्रयत्तिलित्यादिना. कठश्रुत्यादि ...

(सा.वि.) इद मेवार्थं विशदयति. இந்த रहस्यत्तिलिति. தன் अर्थத்தையறிய, स्वार्थेज्ञाते. எல்லா अर्थங் களையும் அறிந்துகொள்ளும்படியாயிருக்கையாலும், ज्ञातप्रकार तयास्थितत्वेनच सर्वार्थ सङ्ग्राहकत्वा त्सङ्ग्रहतो ज्ञातेसति सर्वोप्यर्थो ज्ञातप्रायोभवति. अतोमूलमन्त्रस्सारत मत्वादुपादेयः. उपायம் ஒன்றையுமே अवलम्बिक्क, सर्वोपायस्थाने भगवत एकस्योपायस्य अवलम्बने. सर्वोपायफलसिद्धि, सर्वोपायानां फलसिद्धिः. உண்டாமென்று स्थापिக்கையாலும், सम्पद्यत इतिस्थापनाच्चरम श्लोक स्सारभूत स्सोप्युपादेयः - कठश्रुत्यादिகள் சொல்லுகிறபடியே, ''सकृदुच्चारस्सं सारतारकोभवती''त्यादि कठश्रु त्याद्युक्तरीत्या. தன்னை ஒருக்கால் उच्चरिத்தவனை, स्वात्मनस्सकृ ...

(सा.सं.) नैव सर्वोपाय फलसिद्धेः सकृदुच्चारणेनैवद्वयस्य कृतकृत्यता संपादकत्वाच्च रहस्य त्रयमेवादरणीयं. नान्यदित्युपपत्या दृढयति இந்த इत्यादिना. श्रीमन्नारायण चरणौ'' मुमुक्षुर्वैशरण...

**मूलं- क्षुवुक्कुआदरणीयम्, ''असारमल्पसारञ्च सारंसारतरंत्यजेत् । भजेत्सारतमं शास्त्रे (स्त्रं) रत्नाकर इवामृतं''**

(सा.दी.) सारभूत रहस्यत्रयத்தினுடைய अत्यादरणीयत्वத்துக்காக वेदान्तத்தினுடைய उपादेयत्वத்தில் हेतुवैக்காட்டுகிறார். असारमित्यादि. ''भजेत्सारतमंशास्त्रं'' என்றதைउपपादिத்துக்கொண்டு அதிலும் सारभूतமான रहस्यत्रयத்தின் उपादेयतमत्वத்தை सप्रमाणமாக उपपादिக்கிறார். ...

(सा.स्वा.) शब्दराशिயில் सारतमங்களானாலும் एवं विधवैलक्षण्यातिशयம் இல்லாமையாலே मुमुक्षुக் களுக்கிப்படிआदरणीयங்களல்லாமையால் அவற்றை विषयமாக்காதொழிந்த தென்று கருத்து. ஆனாலும் मोक्षार्थं उपनिषद्वागं नियमेनापेक्षितமாகி லன்றோतदेकदेशமான रहस्यत्रयத்தையே இங்கு विषयमाकக்கொள்ளலாவது. ''सांख्यंयोग: पाञ्चरात्र'' मित्यादिயாலே सांख्ययोगादि शास्त्रங்களையும் अध्यात्म विषयங்களாகச் சொல்லியிருக்கையாலே அவற்றைத்தான் विषय மாகக் கொள்ள லாகாதோ? परानुग्रहार्थं करुणैயாலே प्रबन्धं பண்ணுமிடத்திலது मोक्षशास्त्र विषय மேயாக வேணுமென்றுதான் निर्बन्ध முண்டோ? तत्तत्फलार्थि களைப்பற்ற तत्तच्छास्त्र विषय மாகத் தான் பண்ண லாகாதோ என்கிறशङ्कैயில் रहस्य त्रयத்தையே विषयமாகக்கொள்ள வேணு மென்கைக்காக उपनिषद्वागமே सारतमत्वादुपादेय மென்றும் तद्व्यतिरिक्त शास्त्रங்கள் असारत्वादि களால் अनुपादेयங் களென்றும் उपदेशिக்கிறார். असारमित्यादिயால். मोक्षार्थं शब्दप्रमाणமே उपजीव्यமாகி லன்றோ அதில் सारतममुपादेय மென்னலாவது. मोक्षतदुपाயங்கள் प्रमाणा ...

(सा.प्र.) களில்इति. ''य एतत्द्वयं सकृदुच्चारयति. सकृदेवहिशास्त्रार्थ: कृतोऽयंतारयेदि'' त्यादावित्यर्थ:. ननु रहस्यत्रय மேमुमुक्षुவுக்குआदरणीय मित्यवधारणं नोपपद्यते. अन्यस्यापि सद्भावे तस्याप्युपादेयत्वादित्यत्र इतरस्य सर्वस्यानु पादेयत्वं वक्तुमसार, अल्प सार; सार; सारतर; ...

(सा.वि.) दुच्चारणे. कृतकृत्यனாக்கவல்ல, वैभवத்தையுடைத்தாயிருக்கையாலும், कृतकृत्यंकर्तुं समर्थ वैभव विशिष्टतया स्थित्याच द्वयमन्त्रस्सारतमत्वा दुपादेय: - सर्वत्र समुच्चय उक्तानुक्त परतयानेय:. उक्तार्थस् सर्वग्राहकत्वं - अनुक्तार्थो विधिवाक्यत्वकरण मन्त्रत्वादीति. रहस्यत्रय மேमुमुक्षुவுக்கு आदरणीय मिति, उपाया नुष्ठानोप योगितया प्रथमं रहस्यत्रयमादरणीयं. ''अनन्तपारमिति'' न्यायात्पश्चाद्वेदान्ताध्ययनमपि कर्तव्यमितिभाव:. नन्वादरणीयं रहस्यत्रय मित्युक्तं. अस्य सर्वार्थ सङ्ग्राहकत्वे सत्यप्यन्यस्या पितादृशस्य सत्वेतदप्यादरणीयं स्यादित्याशङ्क्य परिशेषबलेन रहस्यत्रयस्यैव सारतमत्वेनादरणीयत्वं वक्तुंपरिशेषं दर्शयति. असारमित्यारभ्य, तत्रप्रत्यक्षादि प्रमाणेषुशास्त्रस्यैव परमपुरुषार्थ तदुपायज्ञाने...

(सा.सं.) महं प्रपद्ये तस्मै भगवते श्रीमते नारायणायनम:. य एतत्द्वयं सकृदुच्चारयति. सकृत्कृतकृत्यो नाथतस्य भयम्भव''तीति कठश्रुत्यभिप्रायेण कठश्रुत्यादि களில்इत्युक्तम्, ननु अलौकिकार्थप्रमिति करण भूते शब्द ब्रह्मणि इदमेवा दरणीय मित्यत्रकोहेतु: इतरानाद रेचकेहेतव ...

**मूलं-** परम पुरुषार्थமும், तदुपायமும், प्रत्यक्षादि प्रमाणங்களாலே யறிய வொண்ணாதபடியாலே இவற்றுக்கு, ''शास्त्राद्वेद्मि जनार्दनं। तस्माच्छास्त्रंप्रमाणन्ते कार्याकार्यव्यवस्थितौ। शब्दब्रह्मणि निष्णातः परंब्रह्माधिगच्छति'' என்றும் சொல்லுகிறபடியே शब्दமே प्रमाणம் - இவ்விடத்தில், ''अनन्तपारं बहु वेदितव्यमल्पश्च कालो बहवश्च विघ्नाः। यत्सारभूतं तदुपाददीत हंसो यथा ...

(सा.दी.) परमपुरुषार्थेत्यादि. शब्दब्रह्म, वेदं। निष्णातः, सार्थமாகவறிந்தவன். शब्दமே, वेदान्तமே. அவ்விடத்தில் वेदान्तத்தில். वेदितव्यम् - वेदितव्यமான सोपब्रह्मणवेदान्तराशि. அதுதானும் प्रत्येकमनन्तपारமா யிருக்கும். अन्तो निश्चयः. நிர்ணயிக்கவற்றதாய் बहुविस्तरமாயிருக்குமென்கை. सारभूतं. अम्बुमिश्रं क्षीरमिव पुरुषो हंसोयथा आददीत. यथा, इव என்றபடி. ''अथ प्रतस्थे कौबेरीं भास्वानिव रघुर्दिशं । शरै ...

(सा.स्वा.) न्तरங்களைக்கொண்டு தானறியலாகாதோ வென்னவருளிச்செய்கிறார். परमेत्यादि - प्रत्यक्षादीति, योगि प्रत्यक्षादिகளாலு மறியவொண்ணாதென்னுமிடம் भाष्यादिषु व्यक्तम् - शास्त्राद्वेद्मीत्यादि - இப்படி शास्त्रத்தைக்கொண்டறியவேணு மென்று நியமிக்கையால் शैवाद्युक्तरीत्या कथञ्चिदनु मानத்தைக்கொண்டறியப்பார்க்கிலும்அது फलोपयुक्त முமாகாதென்று கருத்து. शब्दब्रह्म, आगमोत्थज्ञानं - परंब्रह्म, विवेक विमोकादि जन्यमुपासनरूपं ज्ञानं - ''शब्दब्रह्मागम मयं परंब्रह्मविवेकज'' मिति तत्रैव विवरणात् - ''ஆனாலும் पुराणंन्याय मीमांसेत्यादिயாலே चतुर्दश विद्यास्थानங்களுமுपादेयங்களாக धर्मशास्त्रोक्तமாயிருக்க वेदத்தில்एकदेशमात्रमुपादेय மென்னக்கூடுமோவென்ன उपयुक्त तमமான सारांशத்தைக்கடுக उपादानं பண்ணக்கடவனென்று விதிக்கிற विशेषवचनத்தைக்கொண்டுउत्तर மருளிச்செய்கிறார். அவ்விடத்திலித्यादिயால். அவ்விடத்தில் सारतममान शब्दमुपादेय மென்றுअन्वयं - अनन्तपारं. अन्तः, निश्चयः. निश्चயிக்கவரிதாய் बहुविस्तीर्णமுமாயிருக்கு மென்கை. क्षीरमित्यादि. अम्बुमिश्रं ...

(सा.प्र.) सारतमेषु; सारतमस्योपादेयत्वं सदृष्टान्तं बोधयद्वचनमुपादाय व्याकरोति. असारमित्यादि महावाक्येन. ननु शास्त्रेषु सारतममुपादेयमिति कथं नियम्यत इत्यत्राह. परमपुरुषार्थमित्यादिना. मुमुक्षुप्राप्ये तत्साधने च प्रत्यक्षाद्यप्रवृत्तेश्शब्दपरिशेषो युज्यत इति भावः. ननुसारस्यापि त्याज्यत्वपूर्वकं सारतमस्यैवोपादेयत्वं वचनपुरस्सरमुच्यते. प्रमाणेष्वेव क्वचित्सारभूतस्याप्युपादेयत्वं सदृष्टान्तमुपपाद्यते. कथमिदमुपपद्यत इत्यत्राह. இவ்விடத்திலித्यादि. शब्दरूपप्रमाणे स्वीकार्ये सतीत्यर्थः. यत्सारभूतमित्यत्र सारशब्दस्य शब्दस्वभावसिद्धनिरु ...

(सा.वि.) प्रमाणत्व मित्याह - परमपुरुषार्थमिति. அறியவொண்ணாதபடியாலே. ज्ञातुमशक्यप्रकारत्वेन. शब्दब्रह्मणि, शब्दरूपे ब्रह्मणि. वेद इत्यर्थः. ''नन्वथातो ब्रह्मजिज्ञासे'' त्यत्राध्ययनक्रमेण वेदार्थ विचारप्रवृत्युक्तिवदिहापि क्रमेणाल्पसारादि विभाग परिशीलन पूर्वकमेव सारतमांशः उपादीयता मित्याशङ्क्य सारतमांश एव प्रथमप्रवृत्तौ सयुक्तिकं प्रमाणमाह. अनन्तपारमिति, ...

(सा.सं.) इत्यत्र हेतून् स्वयमेव कारिकया सङ्गृह्णाति. असारमिति. सङ्गृहीतमेव विवरीतुं परमपुरुषार्थादौ शब्दस्यैव प्रमाणतां परिशेषादाह. परमेति. स्वकारिकामूलभूतवचनबला ...

मूलं- क्षीरमिवाम्बु मिश्रं'' என்கிறச்லோகத்தில் सारभूतமென்கிற பதத்தாலே प्रतिपन्नமான निरुपाधिकसारத்தை विषयीகரிக்கிற सारतमशब्द मुपादेयम्. बाह्यकुदृष्टि शास्त्रங்கள் अत्यन्तासारங்களாகையாலே अनुपादेयங்கள் - वेदத்தில் पूर्वभागத்தில் ऐहिकफलसाधन कर्मप्रतिपाकமான प्रदेशं अत्यल्प सारமாகை ...

(सा.दी.) रत्नैरिवोदीच्यानुद्धरिष्यन् रसानिवे'' तिवत्. सनीरक्षीर समुदायத்தில் क्षीरத்தையேहंसं ग्रहिக்குமாப்போலே सारभूता सारभूत समुदायத்திலே सारभूतத்தையே परिग्रहिக்கக்கடவனென்கை. रहस्यत्रयத்தில் सारभूत शब्दवाच्यत्वத்தில் निमित्तத்தைக்காட்டுகிறார். निरुपाधिकेति. सारं प्राप्तं सारभूतं. निरुपाधिकसारम्. प्राप्त्याद्यर्थ चतुष्टय विशिष्टமான ब्रह्मं प्रतिपन्नமான सारभूत शब्दமென்றन्वयम्. இப்படி असारमित्यादि श्लोकतात्पर्यार्थத்தைக்காட்டி पदार्थமருளிச்செய்கிறார் - बाह्येत्यादि. ननु रत्नाकर इवामृत மென்கையால் एकावय வியான श्रुतिக்கே रत्नाकर स्थानीयत्वं ...

(सा.स्वा.) क्षीरमिवस्थित मित्यर्थः - असाराल्पसारादि मिश्रित मितिभावः - हंसो यथा, हंस इव. अम्बुमिश्रं क्षीरमिव स्थितं सारभूतं पुरुषो नीरात् क्षीरं हंसवदसाराद्यंशाद्विभज्योपाददीतेति तात्पर्यं - अन्यथा, यथाशब्देनैव पर्याप्तेरिव शब्द वैयर्थ्य प्रसङ्गादिति द्रष्टव्यं. सारभूत मुपादेय மென்கிற இஶ்லோகம் सारतमस्योपादेयत्वे प्रमाणமாக மாட்டுமோ வென்ன வருளிச்செய்கிறார். सारभूतशब्दத்தாலே इत्यादि. च्विप्रत्ययरहितமாக भूतशब्दम् प्रयोगिக்கையாலே सारभूत शब्दं निरु-पाधिकसारपरமாகையால் सारतमத்தையே சொல்லுகிறதென்றுகருத்து. प्रतिपन्नமான வென்கிறத்துக்கு सारतम शब्दमित्य नेनान्वयः - निरुपाधिकेति. शब्दस्य सारतमत्वमर्थ द्वारकமென்று கருத்து. இங்கு सारतमशब्दमुपादेय மென்கிறபாடமே आदरणीयम्. सारभूत शब्द मुपादेयமென்கிற पाठं लेखकस्खलनकृतम्. இவ்वचनத்தில் निरुपाधिकसार मुपादेय மென்கிறவித்தாலே असारங்களும் औपाधिक सारங்களும் अनुपादेयங்களென்று सामान्येन सिद्धिத்தாலும் सांख्य योगादिகளும்विद्यास्थानங்களில் उपनिषद्व्यतिरिक्तங்ளும் अनुपादेयங்களென்றும் उपनिषद्भाग மேउपादेय மென்னும் विशेषिத்துச்சொல்லாமையால்அந்த सांख्य योगादिகள் தான் उपादेयங்களானாலோ வென்னவருளிச்செய்கிறார். बाह्येत्यादि. अनुपादेयताप्रयोजकமாக இவ்वचनத்தில் विवक्षितமான असारत्वं औपाधिक सारत्वம் उपनिषद्व्यतिरिक्तங்களிலே காண்கையாலும்उपादेयता प्रयोजकமாகச்சொன்ன निरुपाधिक सारत्वம்उपनिषद्भागத்திலே காண்கையாலும் उपनिषद्भागமேயு पादेयமென்று घट्टतात्पर्यं. सांख्य योगादीनामपि...

(सा.प्र.) पाधिक सारभूतसारतम परत्वस्य पुरुषार्थान्तरबोधक पदसमभिव्याहारानपोदितत्वादिति भावः. असारमिति श्लोकं व्याचष्टे. बाह्यकुदृष्टीत्यादिना. एवं च सर्वस्याप्यध्मात्मशास्त्रस्य सारतम ...

(सा.वि.) ननु, त्वया सारतममुपादेयमित्युच्यते. अस्मिन्वचने सारभूतशब्द एव उपादेय इत्युच्यत इति विरोध इत्यत आह. सारभूतமென்கிற पदத்தாலே इति. निरुपाधिकसारத்தை. निरुपाथिक सारत्वमिति यावत् । सारतम शब्दार्थ एव शक्त्यसंकोचेन पर्यवस्यतीति भावः. अनुपादेयங்கள், स्वरूपतस्त्याज्याः. अनु ...

(सा.सं.) च्छब्देपि सारभूतश्शब्द एवोपादेय इति परिशेषयति. அவ்விடத்தில் इति, सारभूत शब्दोऽत्र सारतम पर इति हृदयं. परोत्प्रेक्षितासारादि शब्दार्थानां वैदिकपथा सम्मतत्वात्. तत्सम्मतान् ...

मूलंயாலே अनुपादेयம். आमुष्मिकप्रतिपादकांशं ऐहिक फलத்திலதிशयित फलத்தையுடைத்தாகையாலே சிலர்க்கு सारமென்னலாயிருந்ததேயாகிலும் दु:ख मूलत्वादि दोषदुष्टமாகையாலே अनुपादेयम्. आत्मतत्प्राप्ति साधनमात्रத்தை प्रतिपादिக்கும் अंशமும் सारतरமாயிருந்த தேயாகிலும் अत्यन्तातिशयितமான परमात्मानुभव सापेक्षர்க்கு अनुपादेयं. परमात्म तत्प्राप्तितदुपायங்களை வெளியிடும் प्रदेशं सारतमமாகையாலே विवेकिக்கு उपादेयम्. அவ்வம்शத்திலும் प्रधान प्रतितन्त्रங்களான तत्त्वहितங்களுடைய ...

---

(सा.दी.)தோன்றுகையால் असारशब्दं वेदैक देश परமாக வேண்டாவோவென்னில் அங்ஙனங் கொள்ளவொண்ணாது. असारशब्दं फलशून्यपरமாகையால் वेदத்தில் अफलांशं கிடையாதிறே. ஆகையாலிங்கு सारशब्दं दृष्टान्तार्थं "या वेदबाह्यास्स्मृतयो याश्च काश्च कुदृष्टय: । सर्वास्ता निष्फला: प्रेत्य तमोनिष्ठा हि तास्स्मृता:" என்றிவற்றின் असारत्वं संप्रतिपन्नமிறே. श्रुतिயே रत्नाकरस्थानीयமாக विवक्षितम्. अधिकार सङ्ग्रहश्लोकத்தில் "श्रुतौ च प्रापकांश:" என்று श्रुतिயில் अंशங்கள் निर्धरिக்கையால் शास्त्रं रत्नाकरस्थानीयமாக विवक्षितமன்று. இத்தை प्रत्यक्ष गोचर साध्यसाधन प्रतिपादक மாகையாலே யாதல் लोकव्यवहारच्छायैயாலே யாதல் शास्त्रமென்கிறது. இப்படி श्लोकार्थத்தை அருளிச்செய்து முன்புசொன்ன रहस्यत्रयोपादेयतमत्वத்துக்காக அதுसारतमத்திலும் सारமென்கிறார். அவ்வம்शத்திலுமென்று - प्रधान प्रतितन्त्र மென்று निरुपा ...

---

(सा.स्वा.) वेद विरुद्धत्वख्यापनार्थமிங்கு बाह्यशब्दं. सांख्ययोगादीनामपि वेदविरुद्धत्वेन बाह्यत्वமும் "सांख्यंयोग: पञ्चरात्रं" इत्यादिवचनங்களுக்கு निर्वाहமும் परमतभङ्गத்தில் समुदायाधिकारத்திலே பரக்கச் சொல்லப்படுகிறதிறே. कुदृष्टीति. "या वेदबाह्या: स्मृतयो याश्च काश्च कुदृष्टय:" इत्यादिகளான मन्वादिवचनங்களிங்குअभिप्रेतங்கள். अत्यन्तेत्यादि. निष्फलங்களாகிறவளவன்றிக்கே अनर्थावहங்களுமாகையாலே யென்றுகருத்து. ऐहिकत्वोक्त्यात्यल्पत्वं प्रत्यक्षसिद्धमिति द्योत्यते. स्वर्गादिகளும் मोक्षापेक्षया अत्यल्पங்களாயிருக்க அவைத்தைஸாரமென்பதெங்ஙனே யென்ன அருளிச்செய்கிறார். ऐहिक फलத்திலுमित्यादि. सारமாகில்अनुपादेयत्वமெங்ஙனே யென்ன அருளிச்செய்கிறார். சிலர்க்கித्यादि. சிலர்க்கென்கிற வித்தாலேविवेकिகளுக்குसारமாகத்தோன்றாதென்று கருத்து. இத்தால் प्रयोजनान्तरங்களுடைய सारत्वं कर्मोपाधिकமென்றதாய்த்து. सारतरमित्यत्र சிலர்க்குइत्यनुषज्यते. विवेकिக்கென்றது சிலधार्मिकரடியாக हेयोपादेय विभाग क्षमனானவனுக்கென்ற படி. இப்படி उपनिषद्भागமெல்லாம் उपादेयमाகில் रहस्यत्रयத்தையேயிप्रबन्धविषयமாக்குகைக்கு नियामकமேதென்னவருளிச் செய்கிறார். அவ்अंशத்திலுमित्यादि. सङ्ग्रहमिति. சிறிய கண்ணாடி ...

---

(सा.प्र.) त्वं स्यात् । तथा च कथं रहस्यत्रयमात्रस्यात्यन्तोपयुक्ततया विळम्बाक्षमेणोपादेयत्वमित्यत्राह, அவ்अंशத்திலுमिति. अर्थ पञ्चकस्य सम्बन्धस्य चानायासेन ज्ञापनाद्रहस्यत्रयं सार...

---

(सा.वि.) पादेयं अनुष्ठानोपयोगित्वेनाग्राह्यमित्यर्थ:. अतिशयित फलத்தையுடைத்தாகையாலே சிலர்க்கு सारமென்ன தாயிருந்ததே யாகிலும், अतिशयित फलवत्तया केषांचित्सारं भवेदिति विद्यमानत्वेपि । வெளியிடும் प्रदेशं, प्रकाशक प्रदेश:. प्रधान प्रतितन्त्रமான इति, "स्वतन्त्र एव सिद्धोर्थ: परतंत्रै ...

---

(सा.सं.) तदर्थान् दर्शयति. बाह्येति, असारादिशब्दानां पराभिमतार्था:. तेषां तदर्थानुपपत्तयश्च दुरूहशिक्षायामस्माभिरुपपादिता: । तर्हि वेदान्तभागस्सर्वोपि सारतम इति रहस्यत्रयस्यैव ...

मूलं- सङ्ग्रहமாகையாலே மிகவும் (मुपादेय) सारतमமாயிருக்கும் रहस्यत्रयं । ஆகையாலே, "बहुभ्यश्च महद्भ्यश्च शास्त्रेभ्यो मतिमान्नरः । सर्वतस्सारमादद्यात्पुष्पेभ्य इव षट्पदः" என்கிறபடியே இந்த रहस्यत्रयं मुमुक्षुவான இவ்வாत्माவுக்கு மிகவும் उपादेयமாகக்கடவது, ...

(सा.दी.) धिकसारशब्दार्थ विवृतं. अत्यन्तसार तमत्वफलமான अत्यन्तोपादेयतैயை सप्रमाणமாக उपपादिக்கிறார். ஆகையால் इत्यादियाल् - सर्वतः, सर्वेभ्यः. सारं, रहस्यत्रयமென்றபடி. ज्ञातव्य सकलार्थங்களையெல்லாம் स्पष्टமாக सङ्ग्रहिக்கையாகிற फलातिशयத்தாலே अत्यन्त सारतमत्वं கண்டுகொள்வது - उक्तार्थத்தைப்பாட்டால் सङ्ग्रहिத்துக் காட்டுகிறார்.

(सा.स्वा.) பெரியவுருக்களைக்காட்டு மாப்போலே अनायासेन विशदமாக்கவத்தாயிருக்கையாலே யென்றபடி. ஆனாலும்अनन्तपारமென்கிறवचनமானது सारतमமெல்லாம்उपादेयமென்று नियमिயாநிற்க तदेकदेशமான रहस्यत्रयमात्र मुपादेयமென்னக்கூடுமோ வென்கிறशङ्कैயை परिहरिயாநின்றுகொண்டு अधिकारार्थத்தைஉபஸம்ஹரிக்கிறார். ஆகையாलित्यादिயால். सर्वत इति. सारतमादध्यात्म शास्त्रादपीत्यर्थः. मुमुक्षुவான, मोक्षத்திலுत्कटेच्छயாலே त्वरातिशयवाனானஎன்றபடி, सारतमமெல்லாம் उपादेयமென்று वचनसिद्धமானாலும் அதிலும் सारतममुपादेयமென்கிறவிவ்विशेष वचन बलத்தாலே யிவ்வधिकारिக்கு रहस्यत्रयं மிகவும் उपादेयமென்று கருத்து. ஆகக்கடவதென்றது, ஆகத்தக்கதென்றபடி.

இவ்வधिकारार्थமெல்லாம் संप्रदायागतமென்று காட்டாநின்றுகொண்டுஇவற்றை सङ्ग्रहिக்கிறார்.

(सा.प्र.) तमाद्वेदान्तादपि सारतममिति भावः. अस्मिन्नर्थे प्रमाणं वदन्नुपसंहरति. ஆகையாலीत्यादिना. बहुभ्यश्चेति रहस्यत्रयस्य शास्त्रान्तर्गतत्वादपादाने पञ्चमी ।

उत्तरोत्तराशया अभ्यस्यमानेषु सर्वेष्वपि विद्यास्थानेषु भगवत्स्वरूप रूपगुण विभूत्यादीनां सुखेन प्रतिपत्तुमशक्यतया तेषां विशदतर सुखप्रतिपत्तिजनकत्वं कृत्स्नेभ्यो विद्यास्थानेभ्योप्यत्यन्तातिशयिततया नित्यसूरिभिस्स्तुतं रहस्यत्रयसारार्थमनुसन्दधाना महान्तस्तादृशं रहस्यत्रयार्थनिष्ठारूपं स्ववैभवमस्माकम प्यापादयन्तीत्याह.

(सा.वि.) र्निवारितः। प्रतितन्त्र" इत्युक्त वेदान्त शास्त्रसिद्धप्रधानभूततत्वहितसङ्ग्राहकतयाமிகவும் सारतमமாயிருக்கும் रहस्यत्रयमिति, एतादृशमन्यन्नास्तीति भावः. उपसंहरति. ஆகையாலே इति. ஆகக்கடவது, भवति.

(सा.सं.) आदरणीयत्वे हेतुःक इत्यत्राह. அவ்அंशத்திலுमिति, यद्यप्येवन्तथापि "अनन्तपार" मित्यादिपर्यालोचनायामादर्शवत्सर्वार्थ प्रदर्शकि रहस्यत्रय एव सारतमत्व विश्रान्तिरिति भावः. अनेन हेतुनास्यैवोपादेयत्वमिति । निगमयति, ஆகையாलीति, महद्भ्यः. अपारत्वादपर्याप्तेभ्यः । अथ स्वस्यैत न्निष्ठाप्रदान्गुरूनभिष्टुवन् अधिकारार्थं गाथयापि सङ्गृण्हाति.

**मूलं- அமையாதி(வி)வையென்னு மாசையினாலறு மூன்றுலகில், சுமையான கல்விகள் சூழவந்தாலும் தொகையிவை ...**

(सा.दी.) அமையாதிவை इत्यादि. இவை, अधिकரித்தவை, அமையாது, நமக்குப்போதாது. இன்னும் கற்கவேணுமென்னு மாசையால். அறு மூன்றுலகில், अष्टादश विद्यास्थानத்தில். சுமையான கல்விகள் - परमपुरुषार्थ साधकत्वाभावान्निष्फलतया भारायमाणங்களான. கல்வி, கலைகள். अध्यात्म विद्याव्यतिरिक्तங்கள். சூழவந்தாலும், தானேமேல் விழுந்துவந்தாலும். कात्स्न्येनவந்தாலுமென்னுமாம். இவைதொகையென்று, ...

(सा.स्वा.) அமையாதித्यादि. இவை, இப்போது நாம்अभ्यसित्तविद्यैகள். அமையாது, போதாது. என்னுமாசையினால், இவைநமக்குப்போராது இன்னும் अभ्यसिक्कவேணுமென்கிற ஆசையாலென்றபடி. இதுக்கு சூழவந்தாலு மென்கிறத்தோடேअन्वयं - உலகில்–சுமையான, निष्फलங்களாகையாலே ''वेदभार भराक्रान्त'' इत्यादिகளிற்படியே लोकங்களுக்கு केवल भारायमाणங்களான வென்றபடி. அறுமூன்று, अष्टादश संख्याकங்களான. उपवेदानां पृथग्गणनया विद्यानामष्टादशत्वं - கல்விகள், विद्यैகள். अध्यात्म सारतम रहस्यत्रय व्यतिरिक्तविद्यैகளென்றபடி. சூழவந்தாலும், कात्स्न्येन लब्धங்களானாலும், இவை தொகை என்று, இவை संख्यापूरणमात्र प्रयोजनங்களென்று. निस्सारங்களென்று निश्चयித்தென்றபடி. இதுக்கு எண்ணியவென்கிறத் தோடேअन्वयं - இமையா, ...

(सा.प्र.) அமையாதிவை इत्यादिना - இவையமையாதென்னு மாசையினாலுலகில் சுமையான அறு மூன்று கல்விகள் சூழவந்தாலுமிவை தொகையென்றிமையா இமையவரேத்திய எட்டிரண்டெண்ணிய நம் சமயாசிரியர் சதிர்க்குந்தனி நிலைதந்தனரே इत्यन्वय:. அமையாது, नालम्. இவை, इमानि, என்னும், इति. ஆசையினால், आशया. अभ्यस्यमानानीत्यर्थ इतिशेष:. மூன்று, त्रयं. அறுமூன்று, षट्कत्रयं. உலகில், लोके. षट्कत्रय संख्याकानि. तेषु तेषु पुरुषेषु विद्यमानान्यष्टादश विद्यास्थानानीत्यर्थ:. சுமை, भार:. சுமையான, भारायमाणानि. ''तत्कर्मयन्न बन्धाय सा विद्या या विमुक्तये'। आयासायापरं कर्म विद्यान्याशिल्प नैपुणं। चतुर्वेद्यपि यो विप्रो वासुदेवं न विंदति । वेदभारभराक्रान्तस्स वै ब्राह्मणगर्दभ'' इत्यादि प्रमाणैरायासैकफलकतयोक्तानीत्यर्थ:. கல்விகள், कला:. विद्यास्थानानीत्यर्थ:. சூழ, कात्स्नैंन. வந்தாலும், आगतान्यपि. प्रवचनार्हतयाभ्यस्यमानान्यपीत्यर्थ:. தொகை, संख्या. இவை, इमानि. ...

(सा.वि.) एवं सारनिष्कर्षित्वं स्वस्याचार्यकृपालब्ध मित्याह. அமையாதிவையென்னு மித்யாदिना. இவை, इमानि विद्यास्थानानि. அமையாது, नालं. என்று, इति. ஆசையினால், आशया. अभ्यस्यमानानीति शेष:. அறுமூன்று, षट्कत्रयं. अष्टादश. உலகில், प्रतिपुरुषं वर्तमानानि. சுமையான, भारभूतानि. ''आयासायापरं कर्म विद्यान्या शिल्पनैपुणम् । चतुर्वेद्यपि यो विप्रो वासुदेवं न विन्दति । वेदभारभराक्रान्तस्स वैब्राह्मणगर्दभ'' इत्यादिषु भगवद्ज्ञानाभावे क्लेशैकफलवत्तयोक्तानीति भाव:. கல்விகள், विद्यास्थानानि. சூழவந்தாலும், कात्स्न्येनागतान्यपि. இவை, इमानि. தொகை, संख्यापूर ...

(सा.सं.) அமையாதிதி, एतावदधीतं नालमित्याशया உரு, अभ्यस्यमानानि. மூன்றுலகில்சுமையான கல்விகள், लोकत्रयभारायमाणशास्त्राणि, சூழவந்தாலும், अभितस्स्वयमेवागतान्यपि. தொகை இவை ...

**मूलं-** யென்றிமையாவிமையவரேத்திய எட்டிரண்டெண்ணியநம் சமயாசிரியர்சதிர்க்கும் தனிநிலை தந்தனரே ।।९।।

(सा.दी.) संख्यापूरणங்கள். निस्सारங்களிவை யென்றெண்ணி. இமையாவிமையவரேத்திய, अनिमिषரான தேவர்களாலும் स्तोत्रिக்கப்பட்ட. எட்டிரண்டு. श्रीमदष्टाक्षरद्वयங்கள். எண்ணிய, सदानुसन्धिக்கின்ற நம் சமயா சாரியர், நம்दर्शन प्रवर्तकரானவாசார்யர்கள் சதிர்க்கும் தனிநிலை, असारादिகளைக்கழித்து सारतमமானरहस्यत्रयத்தையே விரும்புமதான सामर्थ्यத்தை - தந்தனரே, நமக்கு க்ருபையால்उपदेशத்தாலும் प्रसादिத்தருளினார்களென்கை ।।९।।

(सा.स्वा.) निमेषமில்லாதவர்களான. क्षणमात्रमपि ज्ञानसङ्कोचलेश மில்லாதவர்களானவென்கை. இமையவர், देवதைகள். नित्यसूरिகள். ஏத்திய, கொண்டாடுகிற. अध्यात्म विषयशब्द राशिயில்अत्यन्त सारतमங்களான என்றுतात्पर्यं - எட்டு, श्रीमदष्टाक्षरத்தையும், இரண்டு, श्रीमन्त्ररत्नத்தையும்; चरमश्लोकத்தையும். எண்ணிய, सर्वदानुसन्धिக்குமவரான. நம்சமயாசிரியர், நம்முடைய दर्शन प्रवर्तकரான आचार्यர்கள். சதிர்க்கும், चतुरமான. अल्पायासेन सर्वार्थसिद्धिकरமானவென்கை. தனிநிலை, தனித்த நிலையை. असारादिகளைக்கழித்து सारतमத்திலும்अत्यन्त सारतमமான रहस्यत्रयத்தையே விரும்பும்படியான स्थितिயை. இவ்अधिकारத்தில்சொன்ன सारासारங்களுடைய निष्कर्षத்தையென்றபடி. தந்தனர், நமக்கு कृपैयाலும்उपदेशத்தாலும் प्रसादिத்தருளினார் களென்கை ।।९।।

இந்தरहस्यत्रय मात्रத்தையிப் प्रबन्धத்துக்கு विषयமாகக்கொள்ளில்இ प्रबन्धத்தை अधिकरिத்தவன் अध्यात्म ...

(सा.प्र.) என்று, इति. ए तानि विद्यास्थानानि केवल संख्यापूरकाणीत्यर्थः. निश्चित्येति शेषः. இமையா, निमेषमकुर्वाणाः. ए तेन दीर्घनिमेषात्मक विनाशरहिता लक्ष्यन्ते. இமையவர், कदाचिदपि विनाशरहिता नित्यसूरय इत्युक्तं भवति. ஏத்திய, स्तुतं. नित्यसूरिभिस्स्तुत मित्यर्थः. எட்டு, अष्टकं - अष्टाक्षरात्मकं मूलमन्त्र मित्यर्थः. இரண்டு-த்வயம். इदं चरमश्लोकस्याप्युपलक्षणं. यद्वा இரண்டு, उभयं - द्वयं चरमश्लोकं चेत्यर्थः. எண்ணிய, परिशीलयन्तः. நம், अस्माकं. சமயாசிரியர், समयाचार्याः. सिद्धान्तप्रवर्तका अस्मदाचार्या इत्यर्थः. சதிர், सामर्थ्यं. சதிர்க்கும், सामर्थ्यापादकं, தன்; स्वेषां. தனி इति पाठे अद्वितीयमित्यर्थः. நிலை, स्वभावं. தந்தனரே, अदुः ।।९।। ननुविबुध गुप्तस्सारतमांशः इतरैर्ज्ञातु मशक्य इति सारासारविवेक प्रवीणैर्भवद्भि रेव स वक्तव्य इत्याकांक्षायां सार ...

(सा.वि.) काणि. என்று, इति निश्चित्येति शेषः. இமையா, निमेषमकुर्वाणैः. இமையவர், देवैः. नित्यसूरिभिः. ஏத்திய, स्तुतं. எட்டு, अष्टाक्षरं. இரண்டு, द्वयं. चरमश्लोकस्याप्युपलक्षणमेतत्. यद्वा, இரண்டு, द्वय चरमश्लोक रूपमंत्रद्वयं. எண்ணிய, परिशीलयन्तः. நம்சமயாசிரியர், अस्मत्समयाचार्याः. சதிர்க்குந்தனிநிலை. சதிர்க்கும் शब्दस्सामर्थ्यवाची - सारासारविवेक समर्थ स्वभावं. தந்தனரே, ददुः ।।९।।

रहस्यत्रयस्य प्रत्येकमुपयोगं दर्शयंस्तन्निष्ठ स्तुतिव्याजेन सर्वेषां तदर्थ जिज्ञासा ...

(सा.सं.) என்று, निस्साराणीति मत्वा. இமையாவிதி, अनिमिषदेववर्गस्तुतिविषयाष्टाक्षर द्वयानुसन्धान शीला अस्मत्समयाचार्याः. उज्जीवन सामार्थ्यापादिकामद्वितीयां निष्ठां दत्तवन्तः. नुमेति शेषः ।।९।।

मूलं- शाखानामुपरिस्थितेन मनुना मूलेन लब्धात्मक

(सा.दी.) இனியிந்த रहस्यत्रयनिष्ठैயினுடைய माहात्म्यத்தையருளிச்செய்கிறார் - शाखानामित्यादि - शाखानामुपरिभागः उपनिषत् - अथर्वशिरஸ்ஸு முதலானவை - मूलेनमनुना என்று अन्वयं - लब्धात्मकः, लब्धமான स्वरूपத்தையுடையவன் - திருमन्त्रार्थ ज्ञानத்துக்குமுன் ''असन्नेव'' என்கிறபடியே असत्प्रायனிறே - लब्धाद्भुतः என்று पाठமானாலுமிதுவேபொருள் - ''आश्चर्यवत्पश्यति कश्चिदेनं'' आश्चर्यवच्चैनமென்று आत्मस्वरूपத்தைச்சொல்லுகையாலே - यद्वा, अद्भुतः परमात्मा - आश्चर्योसि; - कृतकृत्योसि என்கையாலே - ...

(सा.स्वा.)विषयத்தில் कृत्स्नवित्तல்லாமையாலே ग्रन्थान्तरनैरपेक्ष्येण सम्प्रदाय प्रवर्तन-क्षमனாகவல்லனோ? ஆனபின்பு இप्रबन्धं संप्रदाय प्रवचनोपयुक्तமாகாதொழியாதோ? परमपुरुषार्थ இம்மாத்रத்தாலே लभ्यமாகில் लोकத்திலேயெல்லாருமிந்த रहस्यत्रयத்தைப்பற்றாதிருக்கிற விதுதான் கூடுமோ? किंच, இவைமூன்றிலும் தனித்தனியே अपेक्षितार्थङ्ஙளெல்லாம் सिद्धिக்கையா யிருக்கையால் இவற்றில் ஒரொன்றுதானமையாதோ? என்கிற शङ्கைகளுக்குउत्तर மருளிச்செய்கிறார். शाखानामित्यादिயால். उपरीति, आथर्वणकठाद्युपनिषत्पु प्रसिद्धेनவென்றபடி - मनुना, मन्त्रेण. लब्धात्मकः, सम्यगवगत स्वरूपयाथात्म्यः - இத்தால்उपायाधिकार पूर्ति ...

(सा.प्र.) तमांशंसोपाययोगंदर्शयंस्तन्निष्ठस्तुतिव्याजेन सर्वेषां तदर्थजिज्ञासामुत्तम्भयंति, शाखानामित्यादिना. शाखानामुपरिस्थितेन मूलेन मनुना लब्धात्मकस्सत्ताहेतुसकृज्जपेन द्वयेन सकलं कालं क्षिपन्वेदोत्तंसविहार-सारथिदयागुम्फेन विस्रम्भितोत एव सारज्ञः कश्चिद्भुवने यद्यस्ति स नो यूथस्य नाथ इत्यन्वयः. शाखानामुपरिस्थितेन. ''ओमित्यग्रेव्याहरेत्. नम इतिपश्चात्. नारायणायेत्यु परिष्टा'' दित्यादौ वेदान्तेपठितेन. मूलेन मनुना, मूलमन्त्रेण. लब्धात्मकः, प्रतिपन्नात्मयाथात्म्यः. शाखाना मुपरि स्थितेनेति द्वयस्यापि विशेषणं. तत्र, ''अथातश्श्रीमदद्वयोत्पत्तिः - वाक्यो द्वितीयः - षट्पदानि. अष्टौवा. पञ्च विंशत्यक्षराणि. पञ्चदशाक्षरं प्रथमं. दशाक्षरमपरं. नवाक्षरं प्रथमपदं. द्वितीय तृतीय चतुर्थास्त्र्यक्षराणि. पञ्चाक्षरं पञ्चमं. द्व्यक्षरःषष्ठ'' इत्यादि वेदान्ते पठितेनेत्यर्थः. वाक्यो द्वितीयः, द्वितीयं वाक्यमस्तीति शेषः. लिङ्गव्यत्ययश्छान्दसः. वाक्यद्वयात्मक इत्यर्थः. पञ्चदशाक्षरं प्रथमं वाक्यमिति शेषः. दशाक्षर मपरं द्वितीयं वाक्यमित्यर्थः - द्वितीय तृतीयचतुर्था इति वाक्यानि पदानि विवक्षितानि. अत्रापि लिङ्गव्यत्ययश्छान्दसः. द्व्यक्षर इत्यत्रापि लिङ्गव्यत्ययश्छान्दसः. एवं विध वैदिक निर्देशस्यानधिकारिणां भ्रान्त्यु ...

(सा.वि.) मुत्तंभयति, शाखानामिति. शाखानां, वेदशाखानां. उपरि, शिरोभागे. वेदान्ते स्थितेन. ''ओमित्यग्रे व्याहरे'' दिति श्रुतिप्रतिपन्नेन. मूलेन मनुना, मूलमन्त्रेण. लब्धात्मकः, शेषशेषिभावज्ञान संपत्या लब्धात्मस्वरूपः. ''असन्नेव स भव'' तीति ब्रह्मज्ञानाभावे स्वस्यासत्प्रायत्वात्. सत्ताया ...

(सा.सं.) एवं निष्ठावतो भुवि दुर्लभत्वमाह - शाखानामिति - मूलेन मनुना. मूलमन्त्रेण, शाखानामुपरि, वेदानांशिरोभागे - ''ओमित्येकाक्षरमित्य'' धीते एतन्मन्त्रकरणक स्वज्ञानविरहिणो न स्वात्मलाभ ...

**मूलं- स्सत्ताहेतु सकृज्जपेन सकलं कालं द्वयेन क्षिपन्। वेदोत्तंसविहारसारथिदयागुंम्फेन विस्रंभित ...**

(सा.दी.) सत्ता. स्वरूपानुबन्धिदास्यवृत्तिः - ''यस्सकृदुच्चारस्संसारतारको भवति'' - என்றதிறே. सत्ताहेतुவான सकृज्जपத்தையுடைத்தான வென்று பொருள். वेदेत्यादि, वेदानामुत्तंसाः, शिरोलंकाराः. उत्तंसशब्दं शिरஸ்ஸைउपलक्षिक्கிறது - அதில் विहारम्, விளையாட்டு. प्रतिपाद्यतयावस्थानं यस्यस चासौ सारथिः - यद्वा, वेदान्तानामुत्तंसभूता विहारा यस्य. अथवा, वेदान्तங்களுக்கு शिरोभूषणமான विहार सारथिः. क्रीडासारथि என்கை - विहार कच्छपवत्प्रयोगम्. वेदोत्तं सமென்றுगुम्भ विशेषणமாக வுமாம். ...

(सा.स्वा.) ண்டாம்படி शेषत्वपारतन्त्र्यादिகளைத் தெளிவிக்கைத்திருमन्त्रத்துக்கு विशेषोपयोग மென்று கருத்து. सत्ता, स्वरूपानुबन्धिदास्यवृत्तिः । सत्ताहेतुस्सकृज्जपो यस्येति विग्रहः. सकृदुच्चारणத்தாலே परमपुरुषार्थ हेतुவாய் स्वयंप्रयोजन रूपसदानुसन्धानத்தாலே कालक्षेपोपयुक्त மாகைद्वयத்துக்கு विशेषप्रयोजनமென்று கருத்து. उत्तंसः, शिरोभूषणं - இதுसारथिविशेषणं. இத்தால் भ्रमप्रमादादि राहित्यமும் दयाशब्दத்தாலே विप्रलम्भराहित्यமும் विवक्षितं । ततश्च तात्पर्यचन्द्रिकोक्तरीत्या सारथित्वेवस्थायाचार्यकृत्यकरणेन प्रतारकत्वचोद्यं परिहृतम्. विहारेण सारथिर्नतुकर्मवश्यतयेत्यर्थः । गुम्भः, सन्दर्भः. दयैதான் श्लोकसन्दर्भरूपेण परिणதையானாப்போலே யிருந்துள்ள चरमश्लोकத்தாலே யென்றபடி. विस्रंभितः, महाविश्वासं प्रापितः. एकेनैवोपायेन सर्वोपाय फलसिद्धिயில் महाविश्वासं ...

(सा.प्र.) त्पादनेन मन्त्रगोपनं प्रयोजनं. सत्ताहेतु सकृज्जपेन. ''सत्यं तद्वयं सकृदुच्चारणे संसारविमोचनं भवति. सकृदुच्चारितंयेन कृतकृत्यस्सुखी भवे'' दित्यादिषु ''अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरि''त्युक्त सत्तारूप भगवदनुसन्धानस्य विच्छेद गन्धरहितस्य हेतुतयावगत सकृदनुसन्धानेन द्वयेन परमपुरुषार्थे सिद्धेपि तदनु सन्धानेनैव । सकलं कालं, नित्यनैमित्तिकाविरुद्धं सर्वं कालं क्षिपन्. वेदोत्तंसेत्यादिना वेदानामुत्तंसभूतस्य, अलङ्कार भूतस्य. विहारार्थं सारथेः, दयया कृतेन श्लोकेनोत्पादितविश्वासः. यद्वा, वेदान्त ...

(सा.वि.) लब्धस्योक्तरूपस्योत्तरकालानुवृत्तिरूपा या हेतुः कारणीभूतस्सकृज्जपस्सकृदुच्चारःयस्य तेन. एतेन द्वयोच्चारणस्य मातृस्तन्यसाम्यंसूचितं. द्वयेन सकलं कालंक्षिपन्. अयंभावः - द्वयस्य शरणागतिमन्त्रकरणत्वाच्छरणागतेश्च सकृदनुष्ठेयत्वात्सकृदुच्चारणेन सत्तोपलक्षित परमपुरुषार्थसंभवेपि ''द्वयानुसन्धान सन्ततस्फुरिताधर'' इत्युक्तप्रकारेण कैंकर्यरूप परमभोग्यद्वयानुसन्धानकृतकालक्षेप इति । वेदोत्तंसेषु, वेदान्तेषु, विहारः, प्रतिपाद्यतयावस्थानं । यस्य स चासौ सारथिः. यद्वा, वेदोत्तंसो वेदालङ्कारभूतो विहारसारथिः । क्रीडासारथिः । तस्य गिरां गुंभेन, चरमश्लोकेन । विस्रंभितः, विश्वासं प्रापितः.

(सा.सं.) इति मनुना मूलेन लब्धात्मक इत्युक्तं । सत्ता, शेषत्वादिज्ञानतत्फलकिङ्करत्वादिरूपा । वेदानामुत्तंसस्य, शिरोलङ्कारभूतस्य - विहारसारथेः, क्रीडार्थ कपटसारथेः - दयागुम्भेन दयासमुदाय रूपचरमश्लोकेन । विस्रम्भितः; सञ्जातविश्वासः - अर्जुनं व्याजीकृत्य सर्वोज्ञीवनायैव ...

मूलं- स्सारज्ञोयदि कश्चिदस्ति भुवने ...

(सा.दी.) அப்போது वेदपदं कृत्स्न वेदपरமாகவுமாம். पञ्चम वेदपरமாகவுமாம். दयाप्रयुक्त गुम्भமாவது चरमश्लोकं. गिरां गुंभेन என்று पाठமானாலு மிதுவேபொருள். तेन, அதன்अर्थानुसन्धानத்தாலென்றபடி. विस्रंभित:, विश्वासத்தை அடைவிப்பிக்கப்பட்டவன் सारज्ञனென்று சொல்லப்படும். यद्यस्तिயென்று அவனுடைய दौर्लभ्यं सूचितं । स:, सयूध:, தன் परिजनங்களோடே கூட. नो, नाथ:. அவனும் परिजनங்களும் நமக்கு स्वामिகளென்கை. ...

(सा.स्वा.) பிறக்கும்படி. ''अहंत्वेत्यादिயாலும்; माशुच:'' என்கிற வித்தாலும் स्थापिக்கை चरमश्लोकத்துக்கு असाधारणोपयोग மென்று கருத்து. இப்படிउपयोग विशेषங்களாலே மூன்றும் अत्यन्तापेक्षित மாகையாலோரொன்றேயமையாதென்றதாய்த்து. सारज्ञ:, रहस्यत्रयத்தைக்கொண்டு उपयुक्तेषु वैशद्यं பெற்றவனென்றபடி. இத்தால்अध्यात्म शास्त्रங்களில் कृत्स्नविத்தல்லானாகிலு இப்प्रबन्धம் अधिकरिத்தவன் उपयुक्तसर्वार्थ वैशद्यं பெற்றவனாகையாலே संप्रदायप्रवर्तन धुरन्धरனாவ னென்று கருத்து. यदि कश्चिदित्यादिना दौर्लभ्यमुक्तं भवति. இத்தால் गतानुगतिकமான लोकத்தில் एवंविधसारज्ञत्वं दुर्लभமாகையாலெல்லாரும் இந்த रहस्यत्रयத்தைப் பற்ற அறியாதொழிந்தார்...

(सा.प्र.) तात्पर्यप्रदर्शनेन तदलङ्कारभूतेनेति दयागुंभस्य विशेषणं - सारज्ञ:, सारतम भरन्यास विद्याप्रतिपादक रहस्यत्रयाभिज्ञ: । एवंभूतस्य ''मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये। यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वत:। बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते। वासुदेवस्सर्वमिति स महात्मा सुदुर्लभ'' इत्यादिषु दौर्लभ्योक्ते रेवंभूत: कश्चिदस्ति यदीति निर्देशात् क्वचित्क्वचिद्यततीति गम्यते । एवंभूतस्स नो यूथस्य नाथ: । अस्मदीयानामस्माकं च स्वामी । यद्वा, सयूथ:, यूथेन सहित: - स्वकीयैस्सहेत्यर्थ: । न:, अस्माकं नाथ:, बहुवचनस्य अस्मदीयानामपि नाथ इत्यर्थ: ...

(सा.वि.) सारज्ञ:, कश्चिदस्ति यदि. ''मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये। यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्वत'' इत्युक्त प्रकारेण दौर्लभ्यं सूच्यते. सयूथ:, सपरिजन: । स:, श्रीमहाभाग ...

(सा.सं.) चरमश्लोकोक्तेस्तस्यदया गुम्भत्वं विस्रम्भजनकत्वञ्च । सार:, रहस्यत्रयं - स:, न: ...

मूलं- नाथस्सयूथ(स्य)स्सनः ।।९।।

इति कवितार्किकसिह्मस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतिषु श्रीमद्रहस्यत्रयसारे सारनिष्कर्षाधिकारो द्वितीयः.

श्रीमतेनिगमान्त महादेशिकायनमः.

---

(सा.दी) सयूथस्यनः என்று पाठமானபோது नो यूथस्य नाथः எங்களுடைய कुलनाथனென்றபடி ।।९।।

इति सारदीपिकायां सारनिष्कर्षाधिकारो द्वितीयः

---

(सा.स्वा.) னென்று கருத்து. नः, प्रपदन धनानामस्माकं । यूथस्य नाथः, अपेक्षितसर्वार्थनिर्वाहक इत्यर्थः ।।९।।

इति सारास्वादिन्यां सारनिष्कर्षाधिकारो द्वितीयः ।

---

(सा.प्र.) तत्वहित पुरुषार्थानां विशिष्य प्रतिपादकत्वाद्रहस्यत्रयं सारमित्यर्थ इति भावः ।।१०।।

इतिसार प्रकाशिकायां सारनिष्कर्षाधिकारो द्वितीयः।।

---

(सा.वि.) वतः । नो, नाथः. अस्माकं स्वामी । न केवलं स एव स्वामी. तत्परिजनोप्यस्माकं स्वामीत्यर्थः ।।९।।

इति सारविवरिण्यां सारनिष्कर्षाधिकारो द्वितीयः।।

---

(सा.सं.) यूथस्य नाथः.

इति सारप्रकाशिकासङ्ग्रहे सारनिष्कर्षाधिकारो द्वितीयः।।

श्रियै नम:

श्रीमते रामानुजाय नम:

श्रीमते निगमान्तमहादेशिकाय नम:

# अथ प्रधानप्रतितन्त्राधिकार: ॥

**मूलं-** आधेयत्व प्रभृति

(सा.दी.) सारार्थेषु प्रधानस्य प्रतितंत्रस्य निश्चयं। वक्ति देहात्मभावस्य तृतीये जगदीशयो:।। இப்படி रहस्यत्रयமே सारतम मुपादेय மென்னும் अर्थमनुशासिக்கப்பட்டது - இனி, प्रथम भागத்தாலே ...

(सा.स्वा.) இப்படி रहस्यत्रयத்தின்अर्थ प्रधान प्रतितन्त्रமென்னக்கூடுமோ? प्रतितन्त्र शब्दं प्रतिकूलतन्त्रமென்கிற व्युत्पत्तिயாலே विरुद्धतन्त्र परமென்றால்இவ்अर्थं रहस्यत्रयस्थமென்னக்கூடுமோ? तन्त्रं तन्त्रं प्रतितन्त्रं என்கிற व्युत्पत्तिயாலே सर्वतन्त्र साधारणार्थ परமென்றால்இவ்अर्थं प्रधानமென்னக்கூடுமோ? रूढिயாலே असाधारणार्थ परமென்றாலும் அதிங்குशुद्धसत्वनित्य सूरिसद्भावादि रूपமாகில் प्रधानமென்னக்கூடுமோ? रहस्य त्रयமித்தை प्रतिपादिக்கிற தென்னத்தான் கூடுமோ? भगवत्पारम्यादिகள் प्रधानங்களாய் रहस्यत्रय प्रतिपाद्यங்களானாலும் அவைநம் दर्शनத்துக்கே असाधारणங்களென்னக்கூடுமோ? இனி ईशेशितव्ययोश्शरीरात्म भावादिகள் प्रधान प्रतितन्त्रங்களென்னில் लोकத்தில்கண்ட शरीरलक्षणादि களில்லாமையாலே ईशेशतव्ययोश्शरीरात्मभाव सम्बन्धंउप पन्नமோ? இதுக்கு प्राधान्यंதானெங்ஙனே? ...

(सा.प्र.) एवं रहस्यत्रयस्य तत्वहित पुरुषार्थानां विशदतरं प्रकाशकतया सारतमत्वमुक्तं । तेषां प्रतितन्त्रभूतानां स्वरूपमेकोनत्रिंशदधिकारै: क्रमेण प्रदर्शयति । तत्राष्टावधिकारा: प्रपत्त्यधिकारि स्वरूपज्ञापनपरा: । अनन्तरं द्वावधिकारौ साङ्गभरन्यासपरौ । तदनन्तरं दशाधिकारा: फलपरा:. एवमनुशिष्टानामर्थानामनन्तरं चत्वारोधिकारास्स्थिरीकरणपरा:. तदनन्तरं त्रयोधिकारा: प्रत्येकं रहस्यत्रयपदवाक्ययोजनापरा:. अनन्तरं द्वावधिकारावेवं भूतार्थोपदेष्टुराचार्यस्य कृत्यं शिष्यस्य कृत्यं च प्रतिपादयत: । एवञ्चअधिकारिस्वरूप परेष्वप्याद्याश्चत्वारोधिकारि स्वरूपज्ञानोपयुक्त तत्वार्थ बोधनपरा: । तेष्वपि प्रथमं ''स्वोज्जीवनेच्छा यदि ते स्वसत्तायां स्पृहा यदि। आत्मदास्यं हरे: स्वाम्यं स्वभावं च सदा स्मर।। अस्ति ...

(सा.वि.) पूर्वस्मिन्नधिकारे प्रधान प्रतितन्त्रமானतत्वहितங்களுடைய सङ्ग्राहक மாகையாலே ...

(सा.सं.) इत्थंसारतम रहस्यत्रयार्थेषु सारतमत्वेन प्रथमं ज्ञेय: प्रतितन्त्रार्थ:क इति जिज्ञासायामीशे शितव्ययोश्शरीरात्म भावसम्बन्ध एव तादृश इति निरूपयितुमधिकारान्तरमारभमाण: ...

मूलं- नियमै रादिकर्तुश्शरीरं,

(सा.दी.) प्रधान प्रतितन्त्राद्यर्थानुशासनं பண்ணுகிறார் - அதில் जगत्परमात्माக்களுக்குண்டான शरीर शरीरि भाव सम्बन्धமே प्रधान प्रतितन्त्र सिद्धान्तமென்று காட்டாநின்றுகொண்டு तत्कार्यं भगवत स्सर्व वेदान्त वेद्यत्व மென்கிறார். आधेयत्व प्रभृतीति - विश्वं, चेतनाचेतनात्मकமான जगத்து - आधेयत्वप्रभृतिनियमैः, प्रभृति शब्दं विधेयत्वशेषत्वग्राहकं - तेषांनियमங்களாவன, तदेकाधारत्व; तदेकनियाम्यत्व; तदेक शेषत्वादिகள் - இவை மூலமந்த்ரத்தில் नारायणपदத்தைத்தொடங்கி व्युत्क्रमेण प्रतिपादिக்கப்பட்டன. இப்படி आधेयत्वादिनियमங்களால்आदि कर्ता வான सर्वेश्वरனுக்கு विश्वமும் शरीरமாகிறது. ...

(सा.स्वा.) प्रणामादिகளை ச்சொல்லுகிற मूलमन्त्रादिகள் இந்த शरीरात्मभावத்தைச் சொல்லுகின்றன என்னத்தான் கூடுமோ? என்றிப்படியுண்டாம் चोद्यங்களை இவ் வधिकारத்தாலே परिहरिக்கக்கோலி இதன்अर्थத்தை ஸங்க்ரஹிக்கிறார். आधेयत्वेत्यादिயால். प्रभृति शब्देन नियाम्यत्व शेषत्वयोर्ग्रहणं. नियमोत्र अयोगव्यवच्छेदः. இத்தால் नियमेनाधेयत्वादिகளே शरीरलक्षणங்களாகையால் ईशेशि तव्ययो श्शरीरात्मभाव मुपपन्न மென்ற தாய்த்து. शरीरमिति, शरीरतया व्यवहर्तव्यमिति भावः. இத்தால் शरीरात्म भावம் நம்दर्शनத்துக்கு असाधारणமுமாய் प्रधानமுமானअर्थமென்றும் प्रतितन्त्र शब्दமிங்கு असाधारणार्थ परமென்றும் सूचितं. ...

(सा.प्र.) ब्रह्मेतिचेद्वेद सन्तमेनं ततो विदु'' रित्युक्तप्रकारेण सम्बन्धज्ञानस्य सदिति व्यवहारहेतुत्वाच्छेषवस्तु स्वरूपनिरूपकत्वाच्च शेषशेषिभावस्य तद्घटित शरीर शरीरिभाव निरूपण परप्रधान प्रतितन्त्राधिकारार्थं सङ्गृह्य प्रदर्शयति - आधेयत्वप्रभृतीति । सत्तास्थेम प्रयतनफलेष्वेतदायत्त मेतद्विश्वं आधेयत्व प्रभृतिनियमैरादिकर्तु श्शरीरमिति पश्यन् गंभीराणामकृतक गिरां व्यापकादर्श दृष्टे भगवति चित्तवृत्तिं गाहत इत्यन्वयः. आधेयत्वप्रभृति नियमैः, तद्गुण संविज्ञानोबहुव्रीहिः - नियाम्यत्व शेषत्वे प्रभृति शब्दार्थौ । आधेयत्व विधेयत्व शेषत्वानां नियमैरित्यर्थः. आदिकर्तुः, ब्रह्मशिवादीनामपि कारणतया प्रतिपन्नस्य शरीरतया व्यवहार्य मित्यर्थः। एतेन यस्य चेतनस्य यदवस्थं द्रव्यं यावत्सत्तं धार्यं तदवस्थं तस्य शरीरं। धार्यं शरीरमित्युक्ते कदाचिद्धार्ये

(सा.वि.) त्युक्तं. तत्रप्रधान प्रतितन्त्रार्थ सङ्ग्राहकत्वं दर्शयन् बुद्धिसौकर्याय श्लोकेन सङ्गृह्णाति - आधेयत्वेति । अत्र भगवान् सर्वशरीरी भगवतस्सर्वं शरीरमित्येतत्प्रधान प्रतितन्त्रार्थः - स्वमत सिद्धवेदान्तार्थः । एतदज्ञानाभावे तत्त्वार्थ निर्णयासंभवात् प्रधान प्रतितन्त्रार्थः प्रतिपाद्यते । एतत्, प्रत्यक्षादि प्रमाण प्रतिपन्नं । विश्वं । आधेयत्व प्रभृति नियमैः, तदेकाधारत्व तदेकनियाम्यत्व तदेक शेषत्वैः आदिकर्तुश्शरीरं, इमानि शरीर पदप्रवृत्ति निमित्तानीतिभावः । तथाचोक्तं व्यासार्यैः - ''यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे नियन्तुं शक्यं तत्तस्य शरीरं । यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे धारयितुं शक्यं तत्तस्य शरीरं । यस्य चेतनस्य यद्द्रव्यं शेषतैक ...

(सा.सं.) -स्तत्प्रतिपाद्यं सङ्गृह्णाति । आधेयत्वेति । नियमेनाधेयत्व विधेयत्व शेषत्वैः । आदिकर्तुः, ...

(सा.प्र.) कुठारादावति व्याप्तिः । तद्वारणाय यावत्सत्ताधार्यमिति । तावत्युक्ते शरीरतयावस्थितस्य द्रव्यस्य नित्यतया अवस्थान्तरे सत्तानपायादव्याप्तिस्त द्वारणाय यदवस्थमिति । द्रव्यमिति गुणक्रियादि व्यावृत्तिः - तावत्युक्तेप्येकेन धृतशरीरस्य सर्वान्प्रत्यपि शरीरत्वप्रसङ्गः । तद्व्यावृत्तये यस्येति । तथोक्तेपि धर्मभूतज्ञानस्य शरीरत्व प्रसङ्गः । तद्व्यावृत्यर्थं चेतनस्येति । चेतनशब्दस्य चैतन्य विशिष्टार्थकत्वा दात्माश्रय प्रसक्त्या ज्ञानस्य ज्ञानधार्यत्वाभावात्तद्व्यावृत्तिः. केनचित्ध्रियमाणतयाचोत्पन्नविनष्टेतिव्याप्तिव्यावृत्तये धारणा भावानर्हत्वं विवक्षितं । ननु, शरीरस्य विशिष्टधार्यत्वे ज्ञानधार्यत्वञ्च स्यात्. धार्यत्वञ्च तत्स्वरूपाधीन सत्तास्थिति प्रवृत्तित्वमितिचेन्न । धार्यत्वमपि न्चेतनसङ्कल्पाधीनसत्तास्थितिप्रवृत्तिमत्त्वरूपनियाम्यत्वे पर्यवसितमिति धार्यत्व नियाम्यत्व लक्षणयोस्साङ्कर्यं । विशिष्टधार्यत्वाविवक्षायां धर्म-भूतज्ञानेतिव्याप्तिस्तदवस्थमितिचेन्न. धार्यत्व घटित लक्षणज्ञानस्य धारकतावच्छेदकत्वमात्रस्वीकारात् ज्ञानधार्यत्वाभावेन नियाम्यत्व पर्यवसानान्न सांकर्यं । नातिव्याप्तिश्च । ननु, नियामकत्वे विज्ञानमवच्छेदक मेवेति कथं न सांकर्यमितिचेन्न । नियामकत्वे सङ्कल्पमेवावच्छेदकज्ञानं तु अणुभूतस्यात्मनो नियमने द्वारमात्रं नावच्छेदकमिति साङ्कर्य प्रसङ्गाभावात्. न चैवमप्यनेकशरीरवतां सौभर्यादीनामप्यणुत्वेनैकस्मिन्शरीर एव अवस्थानात् ज्ञानस्य वा वअच्छेदकत्व मात्राङ्गीकारा दात्मस्वरूप सम्बन्धाभावात् सौभर्यादिधार्यत्वानुपपत्तेः तदधिष्टितातिरिक्त शरीराणां न तच्छरीरत्वं स्यादितिवाच्यं । योगिधर्मभूतज्ञानस्य तदितर शरीरव्यापकतया योगि सम्बन्ध घटकत्वेन चैतन्यावच्छिन्न धार्यत्वोपपत्ते स्तच्छरीरत्व संभवात् । नन्वेवमपि तच्छून्ये तस्य वृत्तिः कथमिव घटत इति चोद्य परिहारन्यायेन ज्ञानधारकत्वेपि ज्ञानमेवावच्छेदकमित्यव्याप्तितादवस्थ्यं किं न स्यादिति चेत्न । शरीरत्व प्रयोजकधारकत्व एव ज्ञानस्यावच्छेदकत्वं स्वीकार्यं । अन्यथा चेतनान्तरधारकस्याचेतनान्तरस्यापि शरीरत्वाधारत्वाभाव योरन्यतरप्रसङ्गात् । धर्म ...

---

(सा.वि.) रूपं तत्तस्य शरीरमिति लक्षणत्रयं. शेषतैकस्वरूपमित्यत्रैकशब्दप्रयोगस्सर्वात्मनेति परस्य स्थाने द्रष्टव्यः. सर्वात्मनेति तेन यावद्द्रव्यभावित्वं विवक्षितं - शेषतैक स्वरूपमिति पृथगुक्तिः. स्वार्थशब्द शक्यशब्दप्रयोगानपेक्षणात् । यस्येति पदेन शरीरस्य न घटपटादिवद प्रतियोगिक पदार्थत्वं. अपितु पितृपुत्रादिवत्स प्रतियोगिक पदार्थत्वमिति दर्शितं - सप्रतियोगिक पित्रादीनां शरीरत्वव्यावृत्त्यर्थं नियाम्यमित्युक्तं. नियाम्यमित्युक्ते भृत्यादीनामपि शरीरत्वं स्यादिति तद्व्यावृत्यर्थं सर्वात्मनेति पदं । यावद्द्रव्यभावीत्यर्थः. क्रियागुणादिव्यावृत्त्यर्थं द्रव्यमित्युक्तं । आकाशादि प्रदेशे गमनादिषु मर्त्य शरीरस्य नियमनासम्भवात्तद्व्या वृत्यर्थं स्वार्थ इत्युक्तं - स्वविषय इत्यर्थः - ''अर्थः स्याद्विषये मोक्ष'' इत्यभिधानविदः - स्वशब्दश्शरीरपरः. तत्तच्छरीर सम्पाद्येषु कार्येष्वित्यर्थः रुग्णशरीरेषु व्यभिचारो मा भूदिति शक्यमित्युक्तं । तत्र शक्तेः प्रतिबन्ध एव. नतु, शक्त्यभावः. अग्न्यादावौष्णादिवत् ज्ञानव्या वृत्त्यर्थं चेतनस्येत्युक्तं - नहि, ज्ञानं ज्ञानविशिष्टेन नियाम्यं. अपितु स्वाश्रयेण. तस्माच्चेतन नियाम्यत्वाभावान्न तत्रानैकान्त्यम्. एवं लक्षणान्तरेपि व्यावर्त्य मुच्यते - यस्य सर्वात्मना द्रव्यं शक्यमिति पदानां पूर्ववद् व्यावृत्तिः - चेतनस्येति पदेन प्रभावद्व्या ...

(सा.प्र.) भूतज्ञानानां स्वस्वधर्मिणं प्रति शरीरत्वे प्रमाणाभावाद्धर्मभूतज्ञानधारकत्वेपि घटादीनां रूपादिधारकत्व इव धर्मस्वरूपस्यैव प्रयोजकत्वोपपत्तेरवच्छेदकान्तरापेक्षाभावान्न ज्ञानावच्छेद्यं ज्ञानधारकत्वमिति नातिव्याप्तिरित्यलं विस्तरेण - यस्य चेतनस्य यदवस्थद्रव्यं यावत्सत्तमसम्बन्धा नर्हं स्वशक्ये नियन्तव्यस्वभावं तदवस्थं तत्तस्य शरीरमिति द्वितीयं लक्षणं. चेतनशब्दस्य चैतन्य विशिष्टोर्थः. एवञ्च, तत्तद्धर्मभूतज्ञानस्य चैतन्यविशिष्टेन तेन नियमनासिद्धेर्न तत्रातिव्याप्तिः ननु, धर्मभूतज्ञानस्य चेतनविशेषण सामर्थ्याद्व्यावर्त्यत्वे आश्रयनियाम्यत्वमावश्यकं। नियाम्यत्वं च, तत्सङ्कल्पाधीन सत्तास्थिति प्रवृत्तिकत्वमिति प्रधानप्रतितन्त्राधिकारे कण्ठरवेणोक्तमिति तन्निषेधाद्व्याघातः - आश्रय नियाम्यत्वाभावे विशिष्टार्थत्ववैयर्थ्यं - नियन्तव्यपदेनैव व्यावृत्तिसिद्धेरित्युभयतः पाशारज्जुरिति चेन्न - न्यायसिद्धाञ्जन श्रुत प्रकाशिकयोश्चैतन्यव्यावृत्त्यर्थतया चेतनशब्दस्य विशिष्टार्थत्व कण्ठोक्ति बलाच्चैतन्याश्रयनियाम्यत्वसिद्धेः. तर्हि, व्याघाताभावः कथमिति चेदित्थं । "येनाहं नामृतस्स्यां । किमहं तेन कुर्यां । तत्कर्म यन्न बन्धाय । सा विद्या या विमुक्तये । आयासायापरं कर्म विद्यान्या शिल्पनैपुणं। भजेत्सारतमं शास्त्रं" इत्यानुगुण्येन वा एतदभिज्ञावाक्याद्वा, मोक्षानुपयोगिशास्त्रार्थ विषयत्व निवर्तनपूर्वकं तदुपयोगिशास्त्रार्थविषयत्वापादनादिकं हि ज्ञानस्य जीवेन नियमनं. तत्र येनाहमित्यादि प्रमाणज्ञानानन्तर भाविसङ्कल्परूपावस्था विशेषज्ञान विशिष्टस्य जीवस्य सारतमार्थविषयत्वावस्थाविशिष्टं हि ज्ञानं नियाम्यं. ननु, ज्ञानस्वरूपमात्रं नियाम्य नियामकत्व योर्जन्यजनकभावादिवत् भेदसमानाधिकरणत्वनियमात्. एवंच, सविशेषणेहीति न्यायात् सङ्कल्परूपावस्थाया एव बलाधिक्य प्रयोजक बाल्यादिवन्नियामक विशेषणत्वं - तस्यानेनैव न्यायेन नियमत्वम व्यवस्थामात्रस्येति नच (चार्थ्यं) शरीरद्रव्यवत् ज्ञानद्रव्यस्यापि नियाम्यत्वस्य प्रत्यक्षादि सिद्धत्वं. नियाम्यत्वे आत्माश्रयादि प्रसङ्गवद्बाधकाभावाच्च । एवञ्च सङ्कल्पत्वं कृत्स्नानुगतं नियाम्यतावच्छेदकमिति जीवस्य बाल्यावच्छिन्नत्ववत् सङ्कल्पावच्छिन्नत्वात्तन्नियाम्यस्यापि ज्ञानस्य सङ्कल्प विशिष्ट नियाम्यत्वासिध्या विशेषणव्यावर्त्यत्वमिति न कदाचिदनुपपत्तिः. अत एवाणुस्वरूप सौभर्यधिष्ठितैकशरीरभिन्नैकोन पञ्चाशच्छरीरेषु केवलचैतन्यस्य नियमनशक्ति विरहाद्विशिष्ट नियाम्यत्वसिद्धेर्ना व्याप्तिः. द्रव्यपदात्क्रियागुणारिषु नातिव्याप्तिः. यावत्सत्तम सम्बन्धानर्हमिति परकाय प्राणेन्द्रिय कुरारादिष्वतिव्याप्ति परिहारः. ननूत्पत्तिमारभ्य यावच्छरीरपातध्रियमाण- प्राणवाय्विन्द्रियेषु असम्बन्धाभावस्यैव सत्वात्कथं तेन पदेन तेषां व्यावृत्तिरिति चेदित्थं । पञ्चभूतोत्पत्तेः पूर्वमेव सात्विकाहङ्कारादुत्पन्नानामिन्द्रियाणां तेजोबन्नाख्यभूतत्रयोत्पत्तेः. पूर्वमुत्पन्नवाय्वात्मकस्य प्राणस्य चाबन्नभूत सृष्ट्यनन्तरभाविशरीर सम्बन्धात्पूर्वं जीवसम्बन्धे प्रमाणाभावात् पूर्वकाले मुक्तैरिदानीं मुक्तैश्च परित्यक्तानां प्राणवाय्विन्द्रियाणां महाप्रळये आकाशे तत्प्रळयानन्तरमपि स्थित्वाहङ्कारे च तन्मात्रैस्सह लयस्य "वायुराकाशेलीयते आकाशादिन्द्रियेषु. इन्द्रियाणि तन्मात्रेषु. तन्मात्राणि भूतादौ लीयन्ते" इत्याद्यवगतत्वेन यावत् ...

(सा.प्र.) वत्सत्तम सम्बन्धानर्हत्वाभावादिति यावदवस्थमिति शरीरत्वावस्थां विहाय सम्बध्यमानेषु तेषु शरीरतयावस्थितेषु द्रव्येष्वव्याप्तिव्यावृत्ति:. ननु, यदवस्थमित्यस्यासम्भवव्यावर्तकत्वमेवोचितं । सर्वस्यापि शरीरस्यानित्यतया अवस्थान्तरेण सम्बन्धाभावस्यावर्जनीयत्वादिति चेन्न । भगवदपेक्षया, सर्वेषां द्रव्याणां सर्वावस्थास्वपि शरीरत्वस्य श्रुतिसिद्धतया नित्यानामपि भगवच्छरीरत्वसिद्धेश्च तेषु यावत्सत्त्वं भगवत्सम्बन्धानर्हत्व सिद्धेर्लक्षणस्यासंभवाभावादव्याप्तिवारकत्वस्यैवोचितत्वादिति नियन्तव्यनियाम्य नियन्तव्यव्याध्यादिव्यवच्छेद:. व्याध्यौषधीनां क्रमेण शरीरं प्राप्नुवतां क्रियावत्त्वेन द्रव्यत्वयावत्सत्तत्व सम्बन्धानर्हत्वस्य स्वनियाम्यत्वस्य च सिद्धेस्स्वशक्य इति तत्तच्छरीरैकयोग्येषु कार्येष्वित्यर्थ: । तेन, सर्वशरीराणां स्वस्वविजातीय शरीरकार्येष्वनियन्तव्यतया प्रसञ्जनसम्भव: परिहृत: । नहि, मनुष्यै:स्वशरीराणि पक्षिशरीर कार्येषु नियम्यन्ते. नापि, भगवता स्वशरीरभूते चेतन: प्रकृतिकालकार्ये स्वरूप परिणामे नियम्यते. नापि, शरीरभूता प्रकृति: कालो वा यत्नवत्त्वे नियम्यत इति शरीराणां च प्रतिनियतकार्येष्वशक्तिनियमो यथा प्रमाणमन्वयव्यतिरेकादिना ग्राह्य:. एवञ्च, शिलाकाष्ठादिशरीरेषु नियमनासम्भावनयाऽव्याप्तिशङ्का च निरस्ता. तद्गतनियमनविशेषस्यातिसूक्ष्मतयास्मदादिग्रहणायोग्यत्वात् । ननु स्थावरेष्वव्युल्लासम्लानतादेर्दर्श नाच्छिलाकाष्ठादिगमनं नायोग्यमिति चेन्न - दर्शनस्य दृश्यगानगतायोग्यतामात्रं निवर्तकत्वेन तदतिरिक्तेषु योग्यतासाधकत्वस्यातिप्रसङ्गरहितत्वात्. नच, शिलाकाष्ठादिषु क्षेत्रज्ञस्य सूक्ष्मनियमनस्य चा सिद्धि:. ''तथातिरोहितत्वाच्च शक्ति: क्षेत्रज्ञसंज्ञिते'' त्यादि प्रमाणात्सिद्धे: - अत एव च दधिभाण्डादिभिर्भण्डादेरपि मोक्षप्रार्थनादिकमप्युपपद्यते - व्याध्याद्युपहतशरीरेषु स्वशक्येष्वपि नियमनादर्शनादव्याप्तिशङ्कास्वभावपदेन व्यावर्त्यते नियाम्यत्वस्वाभाव्यत्वस्य व्याध्यादिना प्रतिबन्धात् । अत एवेश्वरस्य स्वेच्छयैव नियाम्यत्वमिति नियाम्यत्वं न स्वाभाविकाकार इति न तत्रातिव्याप्तिरिति । यस्य चेतनस्य यदवस्थद्रव्यं यावत्सत्तमशेषत्वानर्हं तदवस्थं तत्तस्य शरीरं अशेषत्वानर्हमिति दानादिनान्यशेषत्वा नर्हमिति दानादिनान्यशेषभूतभृत्यदासादिव्युदास: - व्यतिरेक निर्देशेन स्वस्वक्रियादिनान्य शेषत्वेप्यनपोद्यस्वशेषत्वे शरीरे अव्याप्तिशङ्काव्युदास: - यस्यचेतनस्य यदवस्थं द्रव्यं अपृथक्सिद्धविशेषणं तत्तस्य शरीरमित्यपि लक्षणं । विशेषणं द्रव्यमित्युक्ते दण्डादावतिव्याप्ति: - तद्व्यावृत्यर्थं अपृथक्सिद्धेति । तावत्युक्ते गुणक्रियादिष्वतिव्याप्ति: । अतो द्रव्यमिति । तावत्युक्ते शरीरद्रव्यस्य नित्यतया शरीरत्वावस्थाविनाशानन्तरं सम्बन्धस्यैव भावित्वाद्यावत्सत्तम-सम्बन्धानर्हत्वरूपापृथक्सिद्ध्यसिध्या अव्याप्तिस्तदवस्था । अतो यदवस्थमिति. तावत्युक्ते अन्यशरीरस्यान्य-शरीरत्वप्रसङ्ग:. तद्व्यावृत्यर्थं यस्य चेतनस्येति । चेतनस्येत्यनेन धर्मभूतज्ञानेतिव्याप्ति: परिहृता । तस्य चैतन्यविशेषणत्वासिध्या विशिष्टविशेषणत्वासिद्धे: । सोहमिति शरीरान्तराणामपि चैतन्यमात्रपृथक्सिद्धत्वेपि तन्मात्रविशेषणत्वासिद्ध्याविशिष्ट विशेषणत्वान्नाव्याप्ति: । नच व्याध्यादावतिव्याप्ति: तस्य देहापृथक्सिद्धत्वेपि क्रीडादेरिव चेतनापृथक्सिध्य भावात् । परकायस्य यावत्सत्तमसम्बन्धानर्हत्व-रूपापृथक्सिध्यभावादेव व्यावृ ...

मूलं- सत्तास्थेमप्रयतनफलेष्वेतदायत्तमेतत्। विश्वं पश्यन्निति भगवति व्यापकादर्शदृष्टे ...

(सा.दी.) धार्यत्वादि प्रकारம் காட்டுகிறார் सत्तेत्यादियால் - ஸத்தை, स्वरूपलाभ. स्थेमமாவது, स्थिति । ஸத்தையினுடைய अनुवृत्ति. प्रयतनम्, இவனுடைய व्यापारங்கள். फलங்களாவன, भोगमोक्ष प्रयोजनங்கள். இவ்விषयங்களில்; एतत्, இந்த जगத்தானது. एतदायत्तम्, இவ்வாदिकर्त्रधीनமாயிருக்கும். இப்படி व्यापकादर्शத்திலிவ்वर्थத்தைக்காணுமவன். व्यापकादर्शமாவது, व्यापकमन्त्रமான तिरुमन्त्रக்கண்...

(सा.स्वा.) आधेयत्वादिप्रकारங்களைக்காட்டுகிறார். सत्तेत्यादियால். एतदायत्तमिति, एतस्यादिकर्तुः स्वरूपाधीनमिच्छाधीनं चेत्यर्थः. स्वरूपाधीन सत्तास्थितिकत्वमाधेयत्वं. इच्छाधीनसत्तास्थिति प्रवृत्तिकत्वं नियाम्यत्वमिति भावः. फलस्य इच्छाधीनत्वोक्त्या स्वमुद्दिश्योपादेयत्वस्फोरणाच्छेषत्वमपि दर्शितं भवति, एतदिति, प्रत्यक्षेण स्वतन्त्रतया प्रतीयमानमित्यर्थः. तर्ह्याधेयत्वादिकं कुत इत्यत्राह भगवतीत्यादि । व्यापकः, मूलमन्त्रः । विशेष्य भूत परमात्म ग्रहणायोग्येनप्रत्यक्षेण स्वतन्त्रतया भानेपि व्यापकमन्त्रादिना विशेष्यस्य दर्शने सति विश्वस्यापि तदाधेयत्वादिनैव दर्शनात्...

(सा.प्र.) त्तिसिद्धिः. विशेषण शब्दस्य वास्तविकाप्राधान्यपरतया स्वेच्छया विशेषणभूते भगवति नातिव्यापः । आधेयत्वादिकं नाम किमित्याकांक्षायामाह । सत्तास्थेमेत्यादि । सत्तायां, स्वरूपलाभे । स्थेम्नि, स्थितौ । प्रयतने, प्रवृत्तौ । फले, प्रयोजने वा । तेषु; एतदायत्तं, भगवदधीनमित्यर्थः । चेतनाचेतनस्य कृत्स्नस्य भगवदाधेयत्वं नाम भगवत्स्वरूपाधीनसत्तास्थितिप्रवृत्तिमत्वं. तन्नियाम्यत्वं च तत्सङ्कल्पाधीन सत्तादिमत्वं । तच्छेषत्वं च तत्प्रयोजनैकपरमप्रयोजनवत्त्वमिति भावः एतदायत्तं, आदिकर्तृभूत भगवदधीनमित्यर्थः । एतत्, प्रत्यक्षादि प्रमाणैस्स्वतन्त्रतया प्रतिपन्नं । विश्वं, चेतनाचेतनात्मकं सर्वं इति पश्यन् मूलमन्त्रे चतुर्थ्या तत्पुरुष बहुव्रीहिसमासद्वयेन च भगवदाधेयतया शेषतया विधेयतया च भगवच्छरीरतया निर्देश्यमित पश्यन्नित्यर्थः । ...

(सा.वि.) वृत्तिरिति. एतद्दूषणभूषणादिकं तत्तद्वेदान्तग्रंथेष्वनुसन्धेयं - विश्वस्य भगवच्छरीरत्वनियामक माधेयत्वं नाम किमित्यत्राह - सत्तास्थेमेति । सत्ता, स्वरूपलाभः । स्थेम, स्थितिः । प्रयतनं, व्यापारः । फलं, भोगमोक्षादि । तेषु विषये एतद्विश्वं, एतदायत्तं, भगवदधीनं । भगवत्स्वरूपाधीन सत्तास्थिति प्रवृत्तिमत्त्व माधेयत्वं - तत्सङ्कल्पायत्तस्वरूपस्थितिप्रवृत्तिकत्वं तन्नियाम्यत्वं. ''मोदते भगनान्भूतैः । हरे विहरसि क्रीडाकदुकैरिव जन्तुभि'' रित्यादि प्रमाणैर्भगवत्प्रयोजनैकप्रयोजनकत्वं तच्छेषत्वमित्यर्थः - इति, एवं प्रकारेण । व्यापकः, शरीर शरीरिभावादि सर्वार्थ प्रतिपादकतया व्यापक संज्ञो मूलमन्त्रः । स एवादर्शः, आदर्शो यथा सर्वं स्पष्टं ...

(सा.सं.) उपादानत्वे सति निमित्तस्य । एतद्विश्वं शरीरं. सत्ता, स्वरूपसत्ता । स्थेम, कालान्तरानुवृत्तिः । प्रयतनं, प्रवृत्यादि व्यापारः । फलं, इष्टप्राप्त्यादि । विश्वं एष्वेतदायत्तं । एतस्य परिदृश्यमानस्य विश्वस्य । एतत्सर्वं भगवदायत्तमित्यर्थः. इति, इत्थं, पश्यन्, गुरुभिश्श्रावितैरुपनिषद्भिर्लब्ध ...

मूलं- गंभीराणामकृतकगिरां गाहते चित्त

(सा.दी.) ணாடி. இவ்வர்த்தங்களெல்லாம் व्यापकக்கண்ணாடியில் सूक्ष्मतयाகாணப்படும். இப்படி जगदीश्वरர்களுடைய शरीर शरीरिभाव संबन्धरूप प्रधानप्रतितंत्र सिद्धान्तத்தையறி யுமவன் - गंभीराणां, अल्पश्रुतै: ज्ञातुमशक्यங்களான - अकृतकगिरां, वेदवाक्यங்களினுடைய. அதாவது भेदाभेद घटक श्रुतिகளுடைய - व्यापकादर्श दृष्टे भगवति, मूलमन्त्रத்தில் सङ्ग्रहेण स्वरूपरूप गुणविभूतिचेष्टितैस्सह सूक्ष्मतयाகாணப்பட்ட भगवद्विषयத்தில் - चित्तवृत्तिं गाहते, अचिच्छिदभिधानपूर्वकं पर्यवसान-वृत्याभिधान रूपतात्पर्यத்தையறியுமென்கை. इति पश्यन् व्यापकादर्शदृष्टे भगवति चित्तवृत्तिं गाहते

(सा.स्वा.) नादाधेयत्वादिकमुपपद्यत इति भाव:. अनेन शरीरात्मभावस्य मूलमंत्रादि प्रतिपाद्यत्वाभावचोद्यं परिहृतं. भगवति व्यापकादर्शदृष्टे सति एतद्विश्वं सत्तादिष्वेतदायत्तत्वात् अधेयत्वादि नियमैरस्य शरीरमिति पश्यन्निति सम्पिंडितोर्थ: । प्रतितंत्रेष्वर्थेषु शरीरात्मभावस्य प्रधानत्वं कथमित्यत्र तत्प्राधान्यनिर्वाहकं कंचिदुपयोगविशेषमाह । गंभीराणामित्यादिना । गंभीराणां, गूढाभिसंधिकतया स्वतो दुर्बोधानां भेदाभेद श्रुतीनामित्यर्थ: । चित्तवृत्तिं, तात्पर्यं । शरीर

(सा.प्र.) मूलमंत्रे पश्यन्नित्येतद्व्यापकादर्शदृष्टे, व्यापनात् चेतनाचेतनानां शेषताया: । चेतनस्य दासत्वाणुत्वज्ञातृत्वादि स्वरूप निरूपक निरूपित स्वरूप विशेषणानां; अचेतनस्य क्षयिष्णुत्वादे:; ईश्वरस्य तच्छेषित्व नियन्तृत्वव्यापकत्वादीनां च यथावस्थिताकारेण स्वान्तर्गततया प्रकाशनादादर्शकल्पमूलमंत्रे दृष्टे भगवति चेतनाचेतनविशेषसामान्यशब्दलिंगादिमत्तया गहनार्थानां वेदान्तानां ''चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वादिति'' सूत्रोक्तरीत्या शरीरवाचिशब्दानां शरीरिपर्यंतत्वरूपं तात्पर्यं जानातीत्यर्थ:. भगवत्स्वरूपाधीन सत्तास्थिति प्रवृत्तिमत्त्वरूपाधेयत्वस्य; तत्संकल्पाधीन सत्तास्थितिप्रवृत्ति मत्त्वरूपनियाम्यत्वस्य; ...

(सा.वि.) प्रकाशयति तद्वदयमपीति तद्रूपणं । तेन दृष्टे, प्रतिपन्ने । भगवति पश्यन्, शरीर शरीरिभावं जानन् । मूलमंत्रेण नारायणपदेन तदेकाधारत्वं बोध्यते । नम: पदेन पारतंन्त्र्यबोधकेन तदेकनियाम्यत्वं बोध्यते । प्रणवेन तदेकशेषत्वं बोध्यते । अतस्सर्ववेदान्तार्थोत्रैव ज्ञायत इति भाव: - पश्यन्निति हेतौ लटश्शत्रादेश: । गम्भीराणां, भेदाभेदादि विरुद्धार्थ प्रतिपादकतया दुरवगाहतात्पर्याणां । अकृतकगिरां, वेदान्तवाक्यानां । चित्तवृत्तिं, शरीरवाचकशब्दानां शरीरिपर्यंतप्रवृत्तिनिबन्धनाभेदादितात्पर्यं । गाहते, जानाति । सकलवेदान्तार्थो मूलमंत्र एवास्तीति तदर्थज्ञ ...

(सा.सं.) ज्ञानस्सन् । इति शब्द: पुनरपि भगवत्यर्थसिद्धशरीरत्वादिपर: । व्यापकरूपमादर्शं व्यापकादर्शं । एतन्मंत्राप्रतिपाद्याभावादस्य व्यापकत्वं । असन्निकृष्टविकीर्णानिकार्थ युगपद्ज्ञान प्रयोजकत्वादस्यादर्शत्वं । शरीरत्वादि विशिष्टतया भगवति व्यापकादर्शेपि दृष्टे सति । स: गम्भीराणां, गूढभावानां । अकृतकगिरां, वेदान्तानां । चित्तवृत्तिं, अभिप्रायं.

मूलं- वृत्तिं ॥१०॥

प्रतितंत्र மாவது மற்றுள்ளसिद्धान्ति களொருவருமிசையாதே தன்னுடைய सिद्धान्तத்துக்கே असाधारण மானவர்த்தம் - இங்கு वेदान्तिகளான நம்முடைய दर्शनத்துக்கே असाधारण முமாய் प्रधानமுமான அவர்த்தமேதென்னில்? चेतनाचेतनங்களுக்கும் ईश्वरனுக்குமுண்டான शरीरात्म भाव संबन्धादिகள் - அதில் ईश्वरனுக்கு शरीरित्वமாவது; चेतनाचेतन द्रव्यங்களைப்பற்ற नियमेन धारकனுமாய்; नियंन्ता ...

---

(सा.दी.) என்கிற समभिव्याहारத்தாலே इति पश्यन् என்று சொன்ன दर्शनத்தில் व्यापकादर्शமே प्रमाणமென்று लभिக்கிறது - भगवति व्यापकादर्श दृष्टे सतीति पश्यन् चित्तवृत्तिं गाहत इति वान्वय: ।।१०।।

கீழ்अधिकारத்திலே प्रधान प्रतितंत्रங்களான तत्वहितங்களுடைய सङ्ग्रह மாகையாலே என்றருளிச்செய்கையாலே प्रधान प्रतितंत्र सङ्गह प्रकारத்தை யிந்தவधिकारத்திலருளிச் செய்யக்கோலி प्रति तंत्रार्थத்தை निरूपिக்கிறவராகையாலே முந்துற प्रतितंत्र शब्दार्थத்தை யருளிச்செய்கிறார். प्रतितंत्रமானதென்று தொடங்கி...

---

(सा.स्वा.) मिति पश्यन् चित्तवृत्तिं गाहत इत्युक्त्या नेवंभूतस्य श्रुतितात्पर्यनिर्णयो न शक्य इति व्यतिरेक सिद्धेरस्य प्राधान्यं दृढीकृतं भवति ।।१०।।

प्रतितंत्र शब्दार्थ विषयமாக முன்புபண்ணின चोद्यங்களுக்கு रूढ्यर्थाश्रयणेन उत्तरமருளிச்செய்கிறார். प्रतितंत्रमित्यादिயால் - அந்த रूढ्यर्थविषयத்திலும் பண்ணினசங்கைகளுக்- கந்த शंकाद्योतन पूर्वकमुत्तरமருளிச்செய்கிறார் - இங்குवेदान्ति यित्यादिயால் - प्रधानार्थமான ब्रह्म वेदान्तिகளெல்லார்க்கும் साधारणமாகையாலும் तद्व्यतिरिक्तங்கள் वेदांति களுக்கு प्रधानங்களல் லாமையாலும் நம் दर्शनத்துக்கு साधारणமாயும் प्रधानமாயுமோरर्थं கிடக்குமோ வென்கிறशंकाद्योतनार्थं वेदांति களென்கிற पदम् - आदिशब्देन पर्यवसान वृत्तिनिबन्धन सर्वशब्दवाच्यत्वादिகள் विवक्षितங்கள்

---

(सा.प्र.) भगवत्प्रयोजनैक परमप्रयोजनकत्वरूपशेषत्वस्य च जगति मूलमन्त्रेण प्रतिपादनात्तथैव मूलमन्त्रेण भगवन्तं जानीयाच्चेत् ''वचसां वाच्यमुत्तमं - नतास्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती'' त्याद्युक्त श्रीमन्नायण एव सर्ववेदान्ततात्पर्यभूमिरित्यमुमर्थं निश्चिनुयादिति भाव: ।।११।।

प्रतितन्त्रशब्दार्थं प्रदर्शयन् श्लोकार्थं विवृणोति - प्रतितन्त्रமாவதிदित्यादिना । இசையாதே, अनभ्युपगमेन । த்ரவ்யங்களைப்பற்ற, द्रव्यापेक्षया

---

(सा.वि.) एवसकलवेदान्तार्थज्ञो भवतीत्यतोत्यन्तविलम्बासहस्य न वेदान्तेपि श्रम: कार्य इति भाव: ।।१०।।

इममेवार्थं विशद मुपपादयति, प्रतितन्त्रेत्यादिना. प्रतितन्त्रशब्दार्थं विवृणोति. प्रतितन्त्रமாவदिति, மற்றுள்ள ஸித்தாந்திகள். इतरसिद्धांतिनां, ஒருவரும், एकेनापि । இசையாதே, अनङ्गीकृतत्वे सति । தன்னுடைய सिद्धान्तத்துக்கே, स्वसिद्धान्तस्यैव । இங்கு, इह. ஏதென்னில், किमित्युक्तौ । संबन्धादिகள் आदि शब्देन सर्वशब्दवाच्यत्वादि सङ्गृहीतं । चेतनाचेतन द्रव्यங்களைப்பற்ற, चेतनाचेतनद्रव्याणि प्रति

---

(सा.सं.) गाहते, जानाति ।।१०।।

इत्थं सङ्गृहीतं विवरीतुं प्रथमं प्रतितन्त्रशब्दार्थमाह । प्रतितन्त्रமாவदिति, सम्बन्धादिகளிत्यत्र आदि शब्दस्यापृथक्सिद्धविशेषणत्वादिकमर्थ:. அதிலீत्यादि, अत्र नियमेन यथार्हं धारकत्वमेकं । नियमेन, नियन्तृत्वमपरं । नियमेन शेषत्वमन्यदिति शरीरलक्षणत्रयं - यस्य चेतनस्य यद

मूलं - तावुமாய்; शेषियुமாயிருக்கை. चेत नाचेतनங்களுக்கு शरीरत्वமாவது? नियमेन ஈச்வரனைப்பற்ற धार्यமுமாய்; नियाम्यமுமாய்; शेषமுமான द्रव्यமாயிருக்கை. चेतना चेतनங்களைபற்றधारकனுமாய் नियान्தாவுமாகை யாவது தன் स्वरूपத்தாலும் संकल्पத்தாலும் यथार्हं सत्तास्थिति प्रवृत्ति

(सा.दी.) सम्बन्धादि என்கிற आदिशब्दத்தாலே सर्वशब्दवाच्यत्वादि सङ्गृहीतं - यथार्हमिति, स्वरूपेण

(सा.स्वा.) ब्रह्मापेक्षया प्रधानங்களன்றாகிலுமிश्शरीरात्म भावादिகள் நம் दर्शनத்துக்கு असाधारणங்களானவர்த்தங்களில் प्रधानங்களென்றுகருத்து - चेष्टेंद्रियार्थाश्रयश्शरीरमिति न्यायसूत्रोक्त लक्षणाभावाதிவ்वीशेशितव्यங்களுக்கு शरीरि शरीरभावமேங்ஙனேயென்ன வருளிச்செய்கிறார் इतिलीत्यादि. धारकत्वादिகள் தனித்தனியே लक्षणங்கள் - नियमेनेति, यावत्सत्तमित्यर्थ: - चेतनाचेतनங்களுடைய ஸத்தையுள்ள कालமெல்லாமென்றபடி - तथा च यावत्सत्तं तद्द्रव्यं प्रति धारकत्वं तच्छरीरित्वमिति पर्यवसितं - अत्र यावत्सत्तमित्यनेन पुत्रादिशरीरधारकस्य पुत्रादिकं प्रति शरीरित्वव्युदास: - एवमुत्तरत्रापि द्रष्टव्यं - यावत्सत्तं तद्द्रव्यनियन्तृत्वं तच्छरीरित्वमिति द्वितीयं लक्षणं - यावत्सत्तं तद्द्रव्यशेषित्वं तच्छरीरित्वमिति तृतीयं - शरीर लक्षण மிப்படியாகில் नियमेन धार्यत्वादिகள் शरीरलक्षणங்களென்று பலிக்கையாலே இவைगुणक्रिय்யைகளில் अतिव्याप्तங்களாகையாலும் चेतनाचेतनங்களுக்கு चेष्टेन्द्रियादि सूत्रोक्त लक्षणं தவிர வேறு लक्षणं கிடையா மையாலுமிவற்றுக்கீश्वरனைப்பற்ற शरीरत्वமெங்கனே யென்னவருளிச்செய்கிறார். चेतनाचेपनங்களுக்கித்यादि - द्रव्यपदेन गुणक्रिया व्यावृत्ति । अत्रापि पृथक् लक्षणत्वं नियमपदप्रयोजनं च पूर्ववदूह्यं - இந்த सूत्रोक्त लक्षणங்களதियाप्त्यादि दुष्टங்களென்னு மிடமும் धार्यत्वादिகளோ निर्दुष्टங்களென்னு மிடமும் न्यायसिद्धांजनத்திலே பரக்கக்கண்டுகொள்வது - दिव्यात्मस्वरूपं मूर्तமல்லாமையாலே घटादीन् प्रति भूतलादेरिव तस्य जगद्धारकत्वं கூடாமையாலே सत्तास्थिति प्रयोजकत्वமே धारकत्वமாக வேண்டுகையாலும் आज्ञापयितृत्वस्य अचेतनं प्रत्यसम्भवेन नियन्तृत्वமும் सत्तास्थिति प्रवृत्ति प्रयोजकत्वமாகவேண்டு கையாலும் इद्धारकत्वं नियन्तृत्वान्तर्गत மாயொழிகையாலிவற்றுக்கு भेदமெங்கனேயென்ன வருளிச்செய்கிறார் - चेतना-चेतनங்களைப்பற்ற धारकனுमित्यादि - यथार्हमिति स्वरूपेण सत्तास्थिति...

(सा.प्र.) स्वरूपத்தாலுமித்यादि, स्वरूपेण सत्तास्थिति प्रवृत्ति प्रयोजकत्वं धारकत्वं । संकल्पेन

(सा.वि.) शेषिயுமாய் இருக்கை शेषिभावेन स्थिति: । ஶேஷமுமானद्रव्यமாயிருக்கை, शेषभूत द्रव्यत्वेन स्थिति: । सर्वत्रயாய் इत्येतत् ஆன इत्येतच्च विशेषण त्ववाचि । शरीरित्व व्यवहारापादकं धारकत्वं नियन्तृत्वमित्युक्तं । तत्र किन्नाम धारकत्वं नियन्तृत्वमित्यत्राह । चेतनाचेतनங்களைப்பற்ற इति । चेतनाचेतनानि प्रतीत्यर्थ: । தன் स्वरूपத்தாலும், स्वस्वरूपेण । संकल्पத்தாலும், संकल्पेनच । यथार्हमिति

(सा.सं.) वस्थं द्रव्यं नियमेन यथार्हं धार्यं इत्येकं । नियमेन विधेयमित्यपरं । नियमेन शेषभूतमित्यन्यदिति शरीरलक्षणत्रयञ्चा भिप्रेतं. धर्मभूतज्ञानस्य धर्मिणं प्रति शरीरत्वव्युदासाय यस्य चेतनस्येत्युक्तं । नहि, धर्मज्ञानं स्वविशिष्टधार्यमिति भाव: । यदवस्थमित्यभावे वियुक्तावस्थायां धार्यत्वादि विरहादिदानीं शरीरे अव्याप्तिस्स्यादिति यदवस्थमित्युक्तं ।

मूलं- களுக்கு प्रयोजकनாயிருக்கை. அதெங்ஙனேயென்னில் ईश्वरன் தன் स्वरूपनिरूपक धर्मங்களுக்கும் निरूपित स्वरूप विशेषणங்களான गुणங்களுக்கும் போலே स्वव्यतिरिक्त समस्तद्रव्यங்களுக்கும் अव्यवहितமாக स्वरूपेण आधारமாயிருக்கும்.

---

(सा.दी)सत्तास्थितिகளிரண்டுக்கும் प्रयोजकत्वं धारकत्वं संकल्पத்தாலே सत्तास्थिति प्रवृत्तिகள் மூன்றுக்கும் प्रयोजकனாகைनियं तृत्वமென்கை. स्वरूप निरूपங்களாவன, सत्यत्वज्ञानत्वानन्तत्वानन्दत्वामलत्वங்கள். निरूपित स्वरूप विशेषणங்களாவன, ज्ञानशक्ति करुणावात्सल्यादिகள். अव्यवहितமாக, साक्षादेव । द्रव्यद्वारा गुणங்களுக்கா श्रयமாம்प्रकारமன்றிக்கே स्वरूपेण என்று संकल्पத்தாலே धरिக்கும்

---

(सा.स्वा.) களுக்கு प्रयोजकत्वं धारकत्वं - संकल्पेन सत्तास्थिति प्रवृत्तिகளுக்கு प्रयोजकत्वं नियन्तृत्वமென்கை. அதெங்ஙனே என்கிற शंकावाक्यத்துக்கு अभिप्रायமோதன்னில் प्रत्यक्षेण स्वतन्त्रங்களாய் தோற்றுகையாலே गुणादिवदपृथक्सिद्धங்களல்லாத तच्चिदचित्तுக்களுக்கு स्वरूपेण सत्तास्थिति प्रयोजकமென்னக்கூடுமோ? नारायण शब्दத்தில் तत्पुरुषனாலே ईश्वरன் सर्वத்துக்கும் स्वरूपेण आधारமாயிருக்கு மென்று சொல்லப்படுகையாலும் प्रत्यक्षमतीन्द्रिय विषयத்தில் योग्यமல்லாமையாலே विरोधமில்லாமையாலு மிவை अपृथक्सिद्धंகளாகலாமென்னில் सत्यत्वादि களைப்போலே யிவையும் स्वरूपनिरूपक धर्मत्वेन अपृथक्सिद्धंகளென்றால் सत्यत्वादि पञ्चकமே स्वरूपनिरूपक மென்கிறத்தோடு विरोधिயாதோ? இனி ज्ञानशक्त्यादिवन्निरूपितस्वरूपविशेषणங்களென்றால் ''नाराश्चाप्यायनं तस्य'' इत्यादिகளிலே विभूतिகளை स्वरूप निरूपकங்களாக ச்சொல்லுகிறத்தோடு विरोधिயாதோ? किंच, இங்गव्यवहितமாக வாधारமென்னில் शब्दस्पर्शादिகளும் नारशब्दार्थ மாகையாலே तदपेक्षया व्यवहिताधारत्वं प्रसंगिக்கையால் ''अशब्दमस्पर्श'' मित्यादि श्रुतिகளோடு विरोधिயாதோ? இனிव्यवहिताधार மென்னில் இச்चिदचिத்துக்களுக்கீश्वरனைப்பற்ற शरीरत्व மில்லாதொழியாதோ? வென்றிதுக்கभिप्रायं - स्वरूप निरूपकधर्म ங்களுக்குमित्यादि - चिदचिद्विशिष्ट

---

(सा.प्र.) सत्तास्थिति प्रवृत्ति प्रयोजकत्वं नियन्तृत्वमित्यर्थः । यद्यपीश्वरस्य सर्वाधारत्वं स्वाधीनतत्तत्स्वरूप स्थिति प्रवृत्तिकत्वं - इदं च गुणक्रियादावपि समानं । अथापि ''निष्क्रियमवर्ण''मिति

---

(सा.वि.) स्वरूपेण सत्तास्थित्योः प्रयोजकत्वं धारकत्वं । संकल्पेन सत्तास्थिति प्रवृत्तीनां प्रयोजकत्वं नियन्तृत्वमिति यथार्हमित्यस्य भावः. அதெங்கனேயென்னில், तत्कथमिति प्रश्ने. अत्र सदृष्टान्तं धारकत्वमाह। ईश्वर னீत्यादिना, स्वरूपनिरूपक धर्माः, सत्यत्वज्ञानत्वानन्दत्वानन्तत्वामलत्वादयः । निरूपित स्वरूपविशेषणानि ज्ञानशक्तिकरुणा वात्सल्यादीनि - येन विना यन्निरूपयितुं न शक्यते तत्स्वरूपनिरूपकं । अन्यन्निरूपितस्वरूपविशेषणमिति विवेकः । अव्यवहितமாக, साक्षादेव । स्वरूपेणेति, संकल्पेन धारणव्यावृत्तिः । धारकமாயிருக்குमिति ब्रह्मणस्सर्वोपादानताङ्गीकारा

---

(सा.सं.) गुणक्रियादिव्यवच्छेदाय द्रव्यपदं । कादाचित्क धार्यत्वादिमद्व्यवच्छेदाय नियमेनेति । धार्यवस्त्वनुरूपत्वं यथार्हत्वं । नह्यनित्या इव नित्याः लघुभूता इव गुरुभूताः धार्या इति भावः । ननु स्वरूपनिरूपक धमदिः निरवयवधर्मिधार्यत्वेन सावयवगुरुतर धर्म्यन्तराणां ...

मूलं - அவ்வோத்ரவ்யங்களையாஶ்ரயித்திருக்கும் குணாதிகளுக்கு அவ்வோத்ரவ்யத்வாரா ஆதாரமாயிருக்கும் - ஜீவர்களாலே தரிக்கப்படுகிற ஶரீரங்களுக்கு ஜீவத்வாரா ஆதாரமாயிருக்குமென்று சிலர் சொல்லு ...

(सा.दी.) प्रकारத்தைव्यावर्तिக்கிறது - அவ்வோद्रव्यங்களை इत्यादिயாலே; गुणक्रियाधारकत्व कथनं प्रासङ्गिकं । அவற்றுக்கு शरीरत्वமில்லையிறே. शरीरधारकत्वத்தில் मतद्वयமுண்டென்கிறார் - जीवர்களीत्यादिवाक्यद्वयத்தாலே. सत्तातादधीन्यத்தைசொன்னபோதே सत्तानुवृत्तिரூபையானस्थितिயினுடையता दधीन्यமும் सिद्धமென்று திருவுள்ளம். ईश्वरनाधारமானாலும் चेतनाचेतनங்களுக்கு तदधीन सत्ताकत्व மெங்ஙனே? भूतला

(सा.स्वा.) वेषத்தைப்பற்ற स्वरूपनिरूपकत्वமும் निष्कृष्टवेषத்தைப்பற்ற निरूपित स्वरूप विशेषणत्वமும் विभूतेस्स्वीकृत மாகையால் उक्त विरोधங்களில்லாமையாலே उभयथाप्यपृथक्सिद्धि கூடுமென்றுகருத்து - अव्यवहितशब्देन व्यवहिताधारत्व कोटि प्रसक्त चोद्यंपरिहृतं - அவ்வோद्रव्यद्वारेति, இத்தால் ''अशब्दमस्पर्श'' मित्यादिகள் साक्षादाधारत्व निषेधपरங்களாகையாலும் सामान्येन आधारत्वं சொல்லுகிற नारायणादि शब्दங்கள் द्रव्यविषயத்தில் साक्षादाधारत्व परங்களானாலும் तत्तद्द व्याश्रित गुणविषयத்தில் तत्तद्व्य द्वाराधारत्व परங்களாகையாலும் இவற்றுக்கு अन्योन्य विरोधமில்லையென்றுகருத்து. जीवர்களுடைய शरीरங்களுக்கு जीवद्वारा धारமென்னில் अव्यवहितமாக समस्त द्रव्याधार மென்றுகீழ்சொன்னது विरोधिயாதோ? இனி साक्षादाधारமென்னில் ''अनेन जीवेनात्मने'' ति श्रुत्यनुरोधेन जीवद्वारकत्वமும் சொல்லுகிறது विरोधिயாதோவென்ன सयूथ्यमतभेदेन उत्तरமருளிச்செய்கிறார் - जीवர்களாலே इत्यादि । धरिக்கப்படுகிற வென்கிற வித்தாலவற்றுக்கு வேறொரு साक्षादाधारமாக अपेक्षितமன்றென்றபடி ततश्च. ''अनेनजीवेने'' ति श्रुत्यनुरोधेन सद्वारकत्वं கொள்ளுகையே .உசிதமென்று கருத்து. अव्यवहितமாக आधारமென்று கீழ் சொன்னது இப்பक्षத்தில் जीवधृत शरीर व्यतिरिक्त द्रव्यपरமாகையால் विरोधமில்லையென்று अभिप्राय...

(सा.प्र.) श्रुतेस्साक्षाद्द्रव्याश्रयत्ववत्तत्तद्द्रव्याश्रिततयैव लब्धस्वरूपगुणक्रियायास्साक्षादाश्रयत्वानुपपत्तेश्च कथं सर्वाधारत्वमित्यत्राह. அவ்வோद्रव्यங்களை इत्यादि । सर्वद्रव्याधारस्य तदाश्रितगुणक्रियाद्याधारत्वं कैमुत्यसिद्धं । श्रुतिस्तु साक्षादाश्रयत्व निषेधिकेति भाव: - ननु, जीवेन धृतशरीरेपि गुणक्रियान्यायादाधारत्वं प्रसज्येदितीश्वरस्य साक्षात्सर्वद्रव्याधारत्वं वा कथमित्यत्र विधाभेदेन परिहरति. जीवர்களாலே इत्यादिना । सद्वारकत्वेपि सर्वाधारत्वं सिद्धमित्यर्थ: । परिहारे द्रव्यत्वादेव जीववत्साक्षाद्धार्यत्वे प्रमाणविरोधाभावादुभयथा पि

(सा.वि.) दिति भाव: द्रव्याश्रित गुणक्रियाधारकत्वं कथमित्यत्राह - அவ்வோद्रव्यमिति, गुणक्रियाधारकत्वं प्रासङ्गिकं. तयोश्शरीरत्वाभावादित्याहु: । ननु, गुणक्रिययोर्यौवज्जीवधृतशरीरस्यापि साक्षाद्धारकत्वं न स्यात्ततश्च कथं सर्वद्रव्याधारत्वमित्यत्र विधाभेदेन परिहरति । जीवர்களாலே इति । சிலர், केचित् । अविशेषेण, सर्वाधारत्व श्रवणात् । ''निष्क्रियं शान्तमवर्णम चक्षु:श्रोत्र'' मिति ...

मूलं- வர்கள் - जीवனைद्वारமாகக்கொண்டும் स्वरूपத்தாலும் आधारமாயிருக்குமென்று சில आचार्यர்கள் சொல்லுவார்கள் - இப்படி सर्वமும் ईश्वरस्वरूपத்தைபற்ற अपृथक् सिद्धविशेषणமாகையாலே யிவற்றின் सत्तादिகள் आश्रय सत्ताधीनங்கள்.

(सा.दी.) श्रितघटத்துக்கு तदधीनत्वமில்லையிறே என்றுगुणங்களுக்குப்போலே आधारமாயிருக்கு மென்னदृष्टान्तத்தால் विवक्षितार्थத்தையருளிச்செய்கிறார் - இப்படி इत्यादि - आदिशब्दं स्थितिपरं - आश्रयसत्ताधीनங்கள், ईश्वररूपமான வாश्रयस्वरूपाधीन மென்றபடி - ईश्वरस्वरूपमाश्रयமாகையால் तदधीनமென்று तात्पर्यम्. ननु, स्वर्ववस्तुக்களி னுடையவும் सत्तै संकल्पाधीनै யாம்படியெங்கனே? संकल्पाधीनत्वமாவது? संकल्पो

(सा.स्वा.) சிலவாचार्यர்களीत्यादि - सर्वद्रव्यங்களையும் பற்றसाक्षादाधारत्वे शब्दादि गुणविषयத்தில்போலே बाधकप्रमाणமில்லாமையால் सर्वभूतानामीश्वर शरीरत्व श्रुत्याद्यनुरोधத்தாலும் ''अनेन जीवेनेति'' श्रुत्यनुरोधத்தாலுமுभयथाप्याधारत्वமே सिद्धान्त மென்றாचार्य शब्दप्रयोगத்துக்க भिप्रायं. இப்படி सर्वத்துக்குமாधारமானாலுமி வற்றுக்கவன் स्वरूपं प्रयोजक மென்றது கூடுமோ? प्रयोजकत्व मुत्पादकत्व மாகையாலிது नित्यवस्तुக்களைக்குறித்துக்கூடாமையாலே யிவை तत्प्रयोज्यங்களாகாவிறே என்கிறशंकையைप्परिहरியா நின்றுகொண்டு धार्यधारकभावத்தை யுपसंहरिக்கிறார். இப்படி इत्यादिயால் - आधीनत्वமாவது आश्रयமில்லையாகிலி வையுமில்லையா மென்று तर्क्षिக்கலாம்படி நிற்கை. तथाच; प्रयोज्यत्वमिங்கधीनत्वமொழிய வுत्पाद्यत्वமல்லாமையா லீश्वरस्वरूप निरूपकधर्मங்களுக்குப்போலே नित्यங்களுக்குமிது கிடைக்கையால்उक्तशंकावकाश மில்லையென்றுகருத்து - ஆனாலும் सर्वமு मीश्वरङ्कल्पाधीन மென்னக்கூடுமோ

(सा.प्र.) धारकत्व मित्यपरः । अविशेषेण सर्वाधारत्व श्रवणात्संबन्ध संभवादवर्णमित्यादिवत् द्रव्यासंबन्ध बोधक प्रमाणाभावाच्चायमेव पक्षस्साधीयानित्यनन्तरोक्तेराचार्य ग्रहणादित्यस्य च भावः । ननु, जन्यस्य भगवदधीनत्व संभवेपि नित्यस्य तत्कथमित्यत्र न्यायमते आप्य परमाणुवन्नित्यस्याप्यपृथक्सिद्धविशेषणत्वं तादधीन्य मुपपन्न मित्याह । இப்படி सर्वமுमित्यादिना । सर्वेस्येश्वरापृथक्सिद्धत्वात्तत्स्वरूपाधीन सत्तास्थिति प्रवृत्तिकत्वमस्तु । कथं तत्संकल्पाधीन सत्तास्थिति प्रवृत्तिक मित्यत्र यथा सौभर्यादिशरीरस्य शरीरस्वरूपाधीन सत्तादिकत्व तत्संकल्पाधीन सत्तादिकत्वं च दृष्टं तथेश्वरस्य

(सा.वि.) गुणक्रियावद्द्रव्य संबन्धाभावबोधक प्रमाणाभावाच्च. अन्त्यपक्ष एव साधीयानित्याचार्य पदेन सूचितं. ननु, ईश्वरस्य सर्वाधारत्वेपि सर्वस्य न तदधीनसत्ताकत्वं । भूतलस्य घटाधारत्वेपि घटस्य भूतलाधीनत्वाभावादित्यत्र गुणानामिव तादधीन्यं युज्यत इत्याह. இப்படிइति. இவற்றின், एतेषां । सत्तादीत्यादि पदं स्थितिमात्रपरं । आश्रयसत्ताधीनங்கள், ईश्वररूपाश्रयाधीन इत्यर्थः । ननु, सर्ववस्तूनां संकल्पाधीनत्वं संकल्पोत्पाद्यत्वं । स्वरूपाश्रयत्ववत्संकल्पाश्रयत्वं वा नाद्यः; नित्येषु तद

(सा.सं.) धार्यत्वमित्यत्र उभय साधारणं धार्यत्व प्रयोजकमाह । अपृथक्सिद्धेति । कदाचिन्मे प्रियमिदं

मूलं- सर्ववस्तुக்களுடையவும் सत्तै संकल्पाधीनैயாகையாவது अनित्यங்கள் अनित्येच्चैயாலே उत्पन्नங்களாயும் - नित्यங்கள் नित्येच्छासिद्धங்க ளாயுமிருக்கை-இவ்வர்த்தை "इच्छात एव तव विश्वपदार्थ

(सा.दी.) त्पाद्यत्वமென்றுசொன்னால் नित्यங்களில் அது கூடாது - स्वरूपத்தில்போலே संकल्पाश्रयமென்று சொல்லக்கூடாது अनङ्गीकृतமாகையாலே என்னவருளிச்செய்கிறார் - सर्ववस्तुக்களுடையவு மென்று தொடங்கி - इच्छासिद्धत्वமாவது इच्छाविषियत्वाभावமுண்டாகில் स्वरूपத்தில் व्यतिरेकमापादिக்கும் படியிருக்கை. अनित्यங்களில் तल्वकारि ब्राह्मणोक्त प्रकारத்தாலே भगवदिच्छा व्यतिरेकத்தில் व्यतिरेकம் காண்கையாலாத்மா एतत्कालத்தில் भगवदिच्छाविषय மாகாவிடில் एतत्कालத்தில்லையா மென்றாபாதிக்கலாமிறே - तल्वकारिब्राह्मणத்திலே "ब्रह्म ह देवेभ्यो विजिग्य" என்று सर्वेश्वरன் देवासुर सङ्ग्रामத்தில் देवர்களுக்கு जयத்தையுண்டாக்கி அவர்களந்த जयத்தை "अस्माकमेवायं विजयोस्माकं महिमेति" என்கிறபடியே स्वाधीनமாக अभिमानिத்திருக்க அவர்களுடைய अभिमानखण्डनத்துக்காக यक्षरूपமாக प्रादुर्भविக்க यक्षத்தை யறியவேண்டி अग्निயை देवர்களனுப்ப வந்த अग्निயை यक्षं त्वयि किं वीर्यமென்றுகேட்க "अपीदं सर्वं दहेयं यदिदं पृथिव्या" மென்று अग्निதன்னுடைய दहनसामर्थ्यं சொல்ல த்ருணத்தை வைத்து अग्निயை "इदं दह" என்றுयक्षன் சொல்ல "तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धुं" என்கிறபடியே भगवत्संकल्प மில்லாமையாலே सर्वप्रयत्नத்தாலும் दहिக்க மாட்டாதொழிந்தானிறே. अनन्तरं வாயுவையனுப்ப உன் शक्तिயேதென்று கேழ்க்க "इदं सर्वमादधीय यदिदं पृथीव्यां" என்கிறபடியே தன்னுடைய क्षेपण सामर्थத்தைச்சொல்ல அந்த तृणத்தைவைத்து "इदमादत्स्व" என்று சொல்ல "तदुपप्रेयाय सर्वजवेन तन्न शशाकादातुं" என்கிறபடியே भगवत्संकल्प மில்லாமையாலே தன் सर्वपयत्नத்தாலு மத்தைक्षेपिக்கமாட்டாதொழிந்தா னென்றுசொல்லித்திறே - विवेकिத்தார்கள்

(सा.स्वा.) संकल्पं नित्यமாகில் घटादिகளும் नित्यங்களாக प्रसங்கிக்குமே? अनित्यமாகிலாத்மாदिகளும் अनित्यங்களாக प्रसங்கிக்குமே? யென்னவருளிச்செய்கிறார். सर्वेत्यादि - नित्यங்களுக்குनित्ये च्छासिद्धत्वமாவது ईश्वरனுடைய इच्छैயில்லாதபோது अनित्यंபோலே யில்லையாக प्रसंगिக்கு மென்னும் படிநிற்கை. ईश्वरस्य नित्यानित्यरूपेण विच्छाद्वैविध्यमङ्गीकृत மாகையால்उक्त विकल्पानवकाश மென்று கருத்து - இவ்வर्थத்தில் सम्प्रदायமுண்டோ? இப்படியாகிலीश्वरस्य कदाचिदनिच्छाया मात्मादीनामनित्यत्वं प्रसङ्गिயாதோ? नित्यங்கள் नित्यत्वादेव स्वतस्सिद्धங்களா யிருக்குமத்தனையொழிய अन्याधीनங்களா யிருக்கத்தான் கூடுமோவென்ன வருளிச்செய்கிறார் - இவ்வर्थத்தை इत्यादि - அந்த श्लोकத்திலே "नित्यं प्रियास्तव तु केचन ते हि नित्या:" என்கையாலே ईश्वरனுக்கு...

(सा.प्र.) सर्वं शरीरमिति "यस्य पृथिवी शरीरं । यस्यात्मा शरीर" मित्यादि श्रुतिभिरवगतमिति सर्वस्य तत्संकल्पाधीन सत्तादिकत्वं युक्तमित्यभिप्रेत्य सर्वसत्ताया भगवत्संकल्पाधीनप्रकारत्वं विशिष्याह. सर्ववस्तुக்களுடையவு मित्यादिनानित्यानित्यपदार्थसत्ताया भगवत्संकल्पाधीनत्वेपि तेषां स्थितिं ...

(सा.वि.) भावात्. न द्वितीय:; अनभ्युपगमादित्यत्र संकल्पाधीनत्वमुपपादयति. सर्ववस्तुக்களுடையவு मिति। सर्ववस्तुகளுடையவும் सर्ववस्तूनां. नित्यங்கள் नित्येच्छासिद्धங்களாயுமிருக்கை, नित्यं संत्वितीच्छया नित्यतया स्थिता इत्यर्थ:. इच्छात एवेति, "नित्यं प्रियास्तव तु केचन ते हि नित्या:" इत्यभियुक्ता विवेचितवन्त इति भाव:

(सा.सं.) भूयादितीच्छाऽ नित्येच्छा सर्वं वा मे प्रियं भूयादितीच्छा नित्येच्छा. यद्यत्संकल्पाधीन सत्ताकं.

मूलं- सत्ता'' என்கிறश्लोकத்தாலே अभियुक्तர் विवेकिத்தார்கள் - இத்தாலேसर्वத்தினுடையவும் सत्तानुवृत्तिरूபையானस्थितिயும் ईश्वरेच्छाधीனையானபடியாலே सर्वமும் ईश्वर संकल्पाश्रितமென்றுசொல்லுகிறது.

(सा.दी.) इच्छाधीनत्वத்தை नित्यங்களிலும भेदेन उपपादिத்தார்களென்றபடி - क्वचिज्जगत्तु संकल्पाश्रितமென்று சொல்லுகையால் स्वरूपाश्रिततत्ववत् संकल्पाश्रिततत्वமுண்டாகையாலத்தாலும் संकल्पाधीनत्वத்தை கொள்ளவேண்டாவோ வென்னவருளிச்செய்கிறார் இத்தாலென்றுதுடங்கி. இத்தாலேसत्तै संकल्पाधीनமாகையால் तद्विशेषமான स्थितिயும் तदधीनமாகையாலென்கை. तादधीन्यात्तदाश्रिततत्वव्यपदेशं । ईश्वर स्वरूपத்தில்போலே ईश्वरेच्छाश्रिततत्वத்தாலே ....

(सा.स्वा.) இவற்றிலொருக்காலும் नित्येच्छैயுண்டாகாதென்றும் ''नित्यं त्वदेकपरतन्त्र निजस्वरूपा भावत्कमङ्गळगुणा हि निदर्शनं न:'' என்கையாலே नित्याश्रयसत्तैயாலே नित्यधर्मसत्तै என்னும்கணக்கிலே नित्यங்களுமन्याधीनங்க ளாயிருக்கலாமென்று मुपपादित மாகையாலுக்த विरोधமில்லையென்று கருத்து. विवेकिத்தார்கள் - नित्यानित्यங்கள் नित्यानित्येच्छाधीनங்களென்று பிரித்துவுपादिத்தார்களென்ற படி. ''केचन नित्यं प्रिया:'' என்கையாலே इतरங்களப்படி யறென்று सिद्धिக்கையாலிப்படி युपपादितமாகிறதிறே - இப்படி सर्वமும் स्वरूपத்தைபற்றவே धार्यமாய் संकल्पத்தைப்பற்ற धार्यமன்னிக்கேயधीन मात्रமா யிருக்கு மென்றால் सर्ववस्तुவும் संकल्पाश्रितமென்று சொல்லுகிற शास्त्र विरोधिயாதோவென்னவருளிச்செய்கிறார். இத்தாலித்யादि - இத்தால், सत्तै संकल्पाधीनै யாகையால் - स्थितिயுमित्यादि, धार्यवत्तदधीन सत्तास्थितिकமாகையாலே யவ்வம்शंதோற்றுகைக்காக வுपचारात्तदाश्रिततत्वव्यपदेशமென்று கருத்து - ஆனாலும்; गुरुद्रव्यங்கள் संकल्पத்தாலே धृतங்களென்று विशेषिத்துச்சொல்லுகிற शास्त्रங்களுக்கு गुरुद्रव्यங்களைப்பற்ற संकल्पस्य स्वरूपवद्धारकत्वंகொள்ளாத

(सा.प्र.) तत्संकल्पाधीनस्वसत्तायां कुलालादिसंकल्पाधीनघटादिस्थितिवदित्याशंक्य तदुपपादयति । இத்தாலே इति । ''एतद्वा अक्षरस्य प्रशासने गार्गि सूर्याचंद्रमसौ विधृतौ द्यावापृथिव्यौ विधृते विष्णुना विधृते भूमी'' त्यादिभिर्विश्वस्य भगवत्संकल्पाधीनस्थितिकत्वस्य विशिष्य श्रवणाद्विश्वस्थितेस्संकल्पाधीनत्वमिति भाव: । ननु, स्वरूपेण सत्तास्थितिप्रवृत्तिप्रयोजकत्वं धारकत्वं । संकल्पेन सत्तास्थिति प्रवृत्तिप्रयोजकत्वं नियन्तृत्वमित्युक्तं । एवञ्च, शास्त्रेषु गुरुद्रव्याणां संकल्पेन विधृतत्वोक्ति

(सा.वि.) ननु, क्वचिज्जगतस्संकल्पाश्रिततत्वोक्त्या स्वरूपाश्रयत्ववत्संकल्पाश्रयत्वमङ्गीकार्यं स्यादित्यत्र सङ्कल्पाश्रितमित्युक्तेस्तात्पर्यमाह । இத்தாலே इति । இத்தாலே, एतेन. सत्तायास्संकल्पाधीनतया । ஸர்வத்தினுடையவும், सर्वस्यापि. ईश्वरेच्छाधीனையான படியாலே, ईश्वरेच्छाधीनतया. संकल्पाश्रितमित्यस्य संकल्पाधीनमित्यत्र तात्पर्यमिति भाव:. ''नन्वेतस्य वा अक्षरस्य प्रशासने गार्गी''त्यादि गुरुद्रव्याणां संकल्पविधृतत्वोक्तेस्सङ्कल्पस्यापि स्वरूपवद्धारकत्वमङ्गीकर्तव्यं स्यादित्यत्र विश्वामित्रादिभिस्त पोबलेन त्रिशंक्वादिधारणवद्द्यावापृथिव्यादीनां देशविशेषाप्राप्तिहेतुभूतनियममपेक्ष्यैव तथा

(सा.सं.) तत्तदधीनस्थितिकमिति कुत इत्यत्राह. இத்தாலே इति. नित्यानामपि वस्तूनां सत्ताया: संकल्पाधीनत्वोक्तिरूपाभियुक्तोक्ति இருக்கையாலே एवञ्च स्थित्यादेश्च तादधीन्यं किमुतेति न्यायसिद्धमिति भाव: - अपृथक्सिद्ध

मूलं- गुरुद्रव्यங்கள் संकल्पத்தாலே धृतங்களென்று शास्त्रங்களில் சொல்லுமது - ''द्यौस्सचंद्रार्क नक्षत्रं खं दिशो भूर्महोदधि:। वासुदेवस्य वीर्येण विधृतानि महात्मन:'' என்கிறபடியே ஓரொரு देशविशेषங்களிலே விழாதபடி நிறுத்துகையைப்பற்ற. இப்படி इच्छाधीनसत्तास्थितिप्रवृत्तिகளான वस्तुக்களுக்கு परमात्मस्वरूपமென்றே...

(सा.दी.) யன்றென்று तात्पर्यं - ஆனால் गुरुद्रव्यங்களைப்பற்ற संकल्पத்துக்கு विशिष्य धारकत्वं சொல்லுகையாலங்கு स्वरूपवत्संकल्पத்துக்கு धारकत्वं கொள்ளவேணுமிறேயென்னிலருளிச் செய்கிறார் - गुरुद्रव्येत्यादि. द्यौरित्यादि. शास्त्रங்களில் சொல்லுமது என்னுமிடத்திலிந்த प्रमाणं विवक्षित மாயிருந்ததேயாகிலும் तदर्थமாக இத்தையுपादानं பண்ணாமல் தாம் பண்ணுகிற निर्वाहं स्वरससिद्ध மென்கிற வர்थந்தோற்றுகைக்காக வித்தை निर्वाहशेषமாக வுपादानம்பண்ணுகிறார் - उदधिविषயத்தில் எல்லையைக்கடவாதபடி என்றுகண்டு கொள்வது - गुरुद्रव्यமன்றாகிலும परिच्छिन्नமான வாकाशमध: प्रदेशத்திலே போகாமலிருக்கைக்குமவன் संकल्पं வேணுமிறே. திக்கு पदार्थांतरமல்லாமையா லாकाशादि पदार्थங்களிலே अन्तर्भविக்கையாலதிலு மப்படியே - இப்படி इत्यादि - ஸத்தையினுடைய விच्छा धीनत्वமும் अर्थात् स्थितिயினுடைய विच्छाधीनत्वமும் உपपादितமாய்த்திறே...

(सा.स्वा.) டோது वैयर्थ्यंவருகையாலந்த शास्त्रங்களுக்கு गतिயேதென்னவருளிச் செய்கிறார். गुरु द्रव्येत्यादि । वासुदेवस्य वीर्येणेत्यादि - वीर्येण धृतत्वं स्वरूपेण धार्यत्वம்போலன்றிக்கே पतनप्रतिबन्धेन धार्यत्वमात्र மானாப்போலே इस्संकल्पेन धृतत्वமுமென்றபடி - இப்படி इत्यादि - सत्तास्थित्यो रिच्छाधीनत्व मुपपादितं । प्रवृत्तेस्त्विच्छाधीनत्व मुपपादन निरपेक्षत्वाद्यथार्हं सत्तास्थितीत्यादौ प्रागेव सिद्धमेன்றभिप्राय த்தாலே இப்படியென்கிறது. शंकैயில் सत्तादित्रयानुवादத்துக்கொன்றிலேயாகிலு मिच्छान्वयமில்லை

(सा.प्र.) र्विरुध्यत इत्यत्राह । गुरुद्रव्यங்களीत्यादिना । विश्वामित्रादिभिस्तपोबलेन त्रिशंक्वादि धारणवत् । द्यावापृथिव्यादीनां देशविशेषाप्राप्ति हेतुभूत नियमनमपेक्ष्यैव तथा व्यपदेश इति भाव:. இப்படி इच्छाधीनेत्यादि । ''को ह्येवान्यात्क: प्राण्यात् । यदेष आकाश आनन्दो न स्या'' दित्युक्तरीत्या आश्रयत्वे नापेक्षितत्वात् । स्वरूपस्य सत्तादिप्रयोजकत्वं सिद्धमिति भाव: । एवं रूपधारकत्व नियन्तृत्वयोर्युगपदित्यैक्य पदसंभावितत्वशंकया श्रुतेरन्यपरत्वशंका व्यावृत्ता । एते संप्रतिपन्नशरी

(सा.वि) व्यपदेश इत्याह. गुरुद्रव्यंங்கள் इति சொல்லுமது, कथयद्वाक्यमपि । விழாதபடி, पतनं यथा न स्यात्तथा । நிறுத்துகையைப்பற்ற, स्थापनं प्रति । पतनाभाव उपलक्षणं । यद्वस्तु यन्मर्यादया स्थापितं तद्वस्तुनस्तन्मर्यादानतिक्रमेण स्थितिमभिप्रेत्य विधृतत्वोक्ति: । नन्वस्तु इच्छाया एव सत्तास्थितिप्रयोजकत्वं । किमर्थं स्वरूपस्य सत्तास्थितिप्रयोजकत्वमङ्गीक्रियत इत्याशंकामनूद्य परिहरति । இப்படி इच्छेत्यादिना । सत्ताया इच्छाधीनत्वस्योपपादितत्वात्सत्तानुवृत्तिलक्षणस्थितेश्चार्थादिच्छाधीनत्व सिद्धे:

(सा.सं.) विशेषणत्वं स्वरूपाश्रितत्वे नियामकमुक्तं । सङ्कल्पाश्रितत्वे निदर्शनं किंचिद्वाच्यमित्यत्राह । விழாதபடி इति नह्येतत्स्वरूपेण घटते । तथा सति कस्यापि पतनाभावप्रसङ्गादिति भाव: । ननु, धारणे प्रकार भेदाभावे धारकद्वयवैफल्यं स्यादित्याशंक्य परिहरति - இப்பட त्यादिवகுத்துவைக்கு मित्यं

**मूलं**- பமேசெய்கிறதென்னில்? परमात्मा வினுடைய इच्छै இவ்வஸ்துக்களை परमात्माவின் स्वरूपाश्रितங்களாக வகுத்துவைக்கும். இப்படி सर्ववस्तुவும் ईश्वरस्वरूपा (धीन) श्रितமுமாய் ईश्वरेच्छाधीनமுமாயிருக்கும் - लोकத்திலும் शरीरं शरीरिயினுடைய स्वरूपाश्रितமுமாய் संकल्पाधीनமுமாயிருக்கக் காணா....

(सा.धी.) प्रवृतिயினுடைய इच्छाधीनதை उपपादननिरपेक्षமாகையாலே यथार्हं सत्तास्थिति प्रवृत्तिகளுக்கு प्रयोजकனாயிருக்கை என்கிறவாक्यத்திலே தானேसिद्धமென்றभिप्रायத்தாலே இப்படி என்கிறது - शंकैயில் सत्तादित्रयानुवाद த்துக்கொன்றிலே யாகிலு मिच्छान्वयமில்லையாகிலிறே அங்கு स्वरूपान्वयं சொல்லலாவதென்று கருத்து - வகுத்துப்பண்ணி प्रमाणबलात् संकल्पाधीनமான स्वरूपाश्रितत्वமும் கொள்ளவேணு மென்று तात्पर्यं - स्वरूपसंकल्पाधीनतैகளை निगमिக்கிறார். இப்படியென்று. स्वरूपाश्रितं, स्वरूपाधीनं । इत्तादधीन्यத்தால் शरीरत्वं सिद्धिக்கும்படி யெங்ஙனேயென்ன வருளிச்செய்கிறார் - लोकத்திலு मित्यादि - அங்கித்தாலேயிறே शरीरत्व மென்று तात्पर्यं - संकल्पमात्र विषयतयान्वय व्यतिरेकங்கள்अन्यथा सिद्धங்களென்னும் शंகையை परिहரிக்கி

(सा.स्वा.) யாகிலிறே இங்கு स्वरूपान्वयம் சொல்லலாவ தென்று கருத்து. வகுத்து, பிரித்து. தன்னைப்பற்றவधीनत्वमात्रமும்; स्वरूपத்தைப்பற்ற வாश्रितत्वமுமாகவிங்ஙனேபிரித்தென்றபடி. स्वरूपाश्रितங்களென்று प्रमाणं சொல்லுகையாலிவ்वर्थத்திலீश्वरेच्छैயே नियामकமென்று கொள்ளுமத்தனைபோக்கி युक्तिகளால் चलिப்பிக்க வொண்ணாதென்றுகருத்து - स्वरूपத்தாலும் संकल्पத்தாலும் यथार्ह मित्यादिயான வுपक्रमावाक्यத்திலே स्वरूपाश्रितत्व संकल्पाधीनत्वங்கள் இரண்டும் கூட अर्थादुपक्रान्तங்களாயிருக்கையாலிங்குமிவ்விரண்டையும் கூட்டி निगமிக்கிறார். இப்படி सर्व वस्तुவு मित्यादिயால். स्वरूपाश्रित மென்கிற पाठமேग्राह्यम्. स्वरूपाधीनமென்று पाठமானாலு माश्रितत्वமே विवक्षितम् - இப்படியாகில் जीवशरीरங்களு मीश्वरस्वरूपाश्रित ங்களாகையாலே யிவற்றுக்கு जीवस्वरूपத்தையும் பற்றவா श्रितत्व முண்டென் கைக்கு नियामकமில்லாமையாலே யाधेयत्व लक्षणத்துக்கு अव्याप्तिவாராதோ? शरीरसत्तानु वृत्तीच्छायां सत्यामपि जीवस्य शरीर नाशंகாண்கையாலே इच्छाधीन सत्तास्थितिकत्व மில்லாமையால் नियाम्यत्वம்தானுண்டோ வென்னவருளிச்செய்கிறார். लोकத்திலுमित्यादि - ईश्वरस्वरूपाश्रितत्वेपि जीवस्वरूபத்தையும் பற்றவாश्रितत्वे नियामकं காட்டுகிறார். ...

(सा.प्र) प्रदर्शयति. लोकத்திலு मित्यादिना। एवं धारकत्व नियन्तृत्वे उपपाद्य शेषित्वं सम्मति प्रदर्शन

(सा.वि.) प्रवृत्तेरिच्छाधीनताया उपपादन निरपेक्षत्वाच्चेति இப்படி इति पदस्य भावः - என் செய்கிறதென்னில், किंकरोतीत्युक्तौ । भगवदिच्छावशादेव स्वरूपाश्रितत्वमपीति इच्छैव तथा करोतीत्याह । परमात्माவினுடையேதிவகுத்துவைக்கும் विभज्य स्थापितवति "सोकामयत बहु स्यां प्रजायेये" ति बहुभवनस्य सङ्कल्पाधीनत्वादिति भावः - उक्तमर्थं निगमयति. இப்படீதி, एवंप्रकारेण. लोकदृष्टान्तेनापि शरीरस्य प्रपञ्चस्य स्वरूपाश्रितत्वं संकल्पाश्रितत्वं च दर्शयति. லோகத்திலுमिति. मृतशरीरस्य जीवस्वरूपाश्रितत्वाभावेन विनाशित्वात् सुषुप्तिदशायां सङ्कल्पाभावेपि स्वरूपस्य सत्त्वेन विनाशित्वाभावात्-

(सा.सं.) तेन. स्वरूपस्य विभुत्वेन तं प्रत्येवापृथक्सिद्ध विशेषणानां यत्र क्वचिद्वर्तनमपि स्वरूपकृतधारणमेव. तत्तद्वस्तूनां नियतैक देशवर्तनं संकल्पकृतं. एवं धारणप्रकारभेदाद्धारकद्वय

मूलं- நின்றோம் - जीवனிருந்த காலமிருந்து இவன் விட்டபோதழிகையாலே स्वरूपाश्रितं, இவ்வர்थं संकल्पமில்லாதसुषुप्त्याद्यवஸ்தைகளிலே தெளிவது - जागरादिदशैகளில் संकल्पத்தால் விழாதபடிதாங்கும்போது संकल्पाश्रितமென்னக்கடவது - இதில் स्वरूपाश्रित மாயிருக்கிறபடியை आधेयत्व மென்றும்; संकल्पाधीनமா யிருக்கிற....

(सा.धी.) றார். இவ்வர்थ மென்று. आदिशब्दம் स्वप्नसङ्ग्राहकं - அப்போது संकल्पமுண் டாகிலும் स्वाप्नशरीरத்துக்கே धारकமொழியவிश्शरीरத்துக்கு धारकமன்றிரே. जीवसंकल्पाधीन सत्तास्थितिक மாகாத शरीरं जीवसंकल्पाधीन மாம்படியெங்கனேயென்னவங்கு "द्यौस्सचंद्रार्क" என்றவிடத்தில் சொன்ன प्रकारத்தாலே जीवसंकल्पाश्रितत्व மென்கிறார். जागरेत्यादि. இப்படி उपपादित्த धारकत्व नियामकत्व फलितமான धार्यत्व नियाम्यत्वங்களுடைய வேறுபாட்டைக்காட்டுகிறார். इதிலித்யादि -

(सा.स्वा.) जीवனிருந்த வித்யादियால் - இश्शरीरान्वयव्यतिरेकங்கள் जीवसंकल्पத்தை யிட்டன்யथासिद्धங்களாகாதோ வென்ன வருளிச்செய்கிறார் - इव्वर्थमित्यादि. आदिशब्दान्मूर्छा दिसङ्ग्रहः । शरीरस्य सत्तानुवृत्तिरूपस्थिति जीवसंकल्पाधीனை யன்றாகிலும் ஒருस्थितिविशेषं तत्संकल्पाधीनமாகையால் नियाम्यत्वமுண் டென்கிறார் - जागरेत्यादिயால் - இப்படியாகில் नियाम्यत्वं भिन्नभिन्नप्रकारமாய்முடிகையாலே अनुगतமாகாதொழியாதோ? शरीरங்களுக்கிப்படி स्वरूपाश्रितत्वமும் संकल्पाश्रितत्वமுமுண்டென்றாலிவற்றில் இன்னது आधेयत्वं; இன்னது नियाम्यत्वமென்கைக்கு नियामகந்தானுண்டோ வென்னவருளிச்செய்கிறார் - இவற்றில்इत्यादि - संकल्पाधीनत्वमात्रமே नियाम्यत्वं. இதுसत्तास्थिति प्रवृत्तिகள் மூன்றிலுமாதல் अन्यतमத்திலாதல் यथासंभवंகிடைக்கையால் सर्वत्रानुगतं - स्वरूपमाश्रय மாகையாலும் सङ्कल्पं व्यापाररूपமாகையாலே யங்ஙனல்லாமையாலும் स्वरूपा श्रितत्वத்தை अधेयत्व மென்றும்; सङ्कल्पाधीनत्वத்தைनियाम्यत्वமென்றும் சொல்லுகைउपपन्नम् - शरीरத்துக்கு सङ्कल्पाश्रितत्वं சொன்னதுவும் नियाम्यत्वविशेषமல்லது मुख्यமான

(सा.वि.) स्वरूपाश्रितं शरीरमित्युपपादयति. जीवனிருந்தகாலமிதி, जीवனிருந்த காலமிருந்து जीवस्य स्थितिसमये स्थित्वा, இவன் விட்டபோது, एतस्यत्यागसमये । அழிகையாலே, विनाशितया । तद्विनाशित्वं सङ्कल्पाभावप्रयुक्तं वा स्वरूपाश्रितत्वाभावप्रयुक्तं वा कथं निश्चीयत इत्यत आह सङ्कल्पமில்லாத इति । தெளிவது, ज्ञायते । सुषुप्तिदशायां सङ्कल्पाभावसमये विनाशाभावात्स्व रूपाश्रितत्वाभावप्रयुक्तमेवेति निश्चीयत इति भावः । तर्हि सङ्कल्पाश्रितत्वं कथमित्याशंक्य जाग्रदवस्थायां संकल्पवशेन यथा न पतेत्तदा तिष्ठतीति स्थितिहेतुत्वेन संकल्पाश्रितत्वोक्तिरित्याह । जागरादीति- விழாதபடி, यथा पतनं न स्यात्तथा. தாங்கும்போது, अवस्थानसमये என்னக்கடவது, इति भवतीत्यर्थः । इयान्विशेषः । ईश्वरस्य सत्यसंकल्पत्वात् सत्तास्थित्योस्संकल्पाधीनत्वं । जीवस्य परतन्त्रत्वात्तच्छरीर सत्ताया न तत्संकल्पाधीनत्वं । किंतु पतनादि प्रतिबन्धकस्थित्यादेरेवेति. शरीरत्वव्यवहारापादकं धारकत्व नियामकत्वफलभूतमाधेयत्वं नियाम्यत्वं च विविनक्ति । இதிலிதி, धारकत्वनियन्तृत्वे उपपाद्य

(सा.सं.) साफल्यमिति भावः । ननूभयथापि धारकत्वमेव भगवत आयात्तं । न नियन्तृत्वमिति पृथग्धमान्तरम्. तथा च तत्प्रतिसंबंधिनियाम्यत्वघटितशरीर लक्षणासंभव इत्यत्राह. இதி லிதி. इत्थं प्रथम

मूलं- படியை नियाम्यत्वமென்றும் சொல்லுகிறது. ईश्वरன் सर्वशेषिயாகையாவது ''उपादत्ते सत्तास्थिति नियमनाद्यैश्चिदचितौ स्वमुद्दिश्य श्रीमानिति वदति वागौपनिषदी । उपायोपेयत्वे तदिह तव तत्त्वं न तु गुणा

(सा.धी.) उपादत्त इत्यादि. श्रीमान्, स्वमुद्दिश्य - स्वप्रयोजनार्थं । चिदचितौ, सत्तास्थितिनियमनाद्यैः. आद्यशब्दात् भोगमोक्ष प्रदानादि सत्तापादनादि व्यापारங்களால். उपादत्ते, स्वीकरोति - उपनिषत्सं बंधिनी वागेवं वदति - तत्, तस्मात्. इह, जीवविषயத்தில் - तव उपायोपेयत्वे, स्वरूपं स्वरूपप्रयुक्तं - न तु गुणौ, आगन्तुकங்களன்று - यद्वा स्वाभाविकसंबन्ध

(सा.स्वा.)आधेयत्वமன்று - இவ்வர்थं मितगद्याधिकारादिகளிலே पतनप्रतिबन्धेन धार्यत्वमपीच्छाधीनत्वविशेष इत्यादिகளால் வெளியிடப்பட்டது - ஆகையாலிங்கொரு विरोधமுமில்லை யென்று கருத்து - இப்படி ईश्वरன் धारकனும் नियन्ताவுமானாலும் सर्व शेषिயாகை யுपपन्नமோ? पारार्थैक स्वभावங்களான चेतनங்களைப்பற்ற शेषिயானாலும் चेतनர் स्वप्रयोजनार्थं प्रवृत्तिக்கிறவராக लोकवेदங்களில் காண்கையாலேயிவர்கள் परप्रयोजनोद्देशेनैव प्रवर्तिக்கிற வரில்லாமையாலி வர்களைப்பற்ற शेषिயாகக்கூடாதிறே யென்ற விது கூடுமென்கையில் उपनिषத்து प्रमाणமென்கிற संप्रदाय श्लोकத்தைக்கொண்டுउत्तरமருளிச்செய்கிறார் - ईश्वरன் सर्वशेषीत्यादिயால் - उपादत्ते, स्वीकरोति - आद्यशब्देन भोगमोक्ष प्रदानादि सङ्ग्रहः - स्वमुद्दिश्य, स्वप्रयोजनத்துக்காகவே என்றபடி. तत्, तस्मात् - शेषित्वादित्यर्थः. इह, चिद्विषये उपायोपेयत्वे तव तत्वं, तव स्वरूपं - स्वरूपप्रयुक्तங்களென்றபடி - न तु गुणा, आगन्तुकங்களன்று.

(सा.प्र.) पूर्वकமுपपादयति, ईश्वरनित्यादिना । यतः ''अंभस्य पार'' इत्यारभ्य ''तस्य नाम महद्यश'' इत्यन्ता ''स एकाकी न रमेते'' त्यादिका च श्रुतिः. ''मोदते भगवान् भूतैः बालः क्री डनकैरि'' वेत्यादि स्मृत्युपबृह्मिता सती समुद्रशायी भगवान् स्वप्रयोजनार्थमेव चिदचितौ सृजतीति वदति. तत्, तस्मात् ''विचित्रा देह संपत्तिरीश्वराय निवेदितुं। जायमानं हि पुरुष'' मित्याद्युक्त प्रकारेण मोक्षार्थ सर्वव्यापाराणामपि भगवदधीनत्वाच्छेषिणस्तवेश्वरस्योपायोपेयत्वे । तत्वं स्वाभाविकतया प्रधानभूते जीवकृतकैंकर्य प्रतिसम्बन्धित्वात् प्राप्यत्वञ्च प्रधानमेव. न तु गुणौ...

(सा.वि.) शेषित्वमुपपादयति, ईश्वरनिति । श्रीमान्, श्रियःपतिः । स्वमुद्दिश्य, स्वप्रयोजनार्थं । चिदचितौ, जीवप्रकृती, सत्तास्थितिनियमनाद्यैः, अत्राद्यशब्देन मोक्षप्रदानादि गृह्यते - उपादत्ते, स्वीकरोति । इत्यौपनिषदी वाग्वदति. ''अजस्य नाभावध्येकमर्पितं । यस्मिन्निदं विश्वंभुवनमधिश्रित'' मित्यादि श्रुतिर्वदतीति भावः । तत्, तस्मात्कारणात् । मोक्षप्रदानादेः स्वार्थत्वात् । उपायत्वं कैङ्कर्यप्रतिसंबंधित्व रूपोपेयत्वञ्च । तव तत्वं, स्वाभाविकं । न तु गुणौ, आगन्तुके न भवतः । यद्वा...

(सा.सं.) द्वितीयशरीरिशरीरलक्षणयोरुपपत्तिरुक्ता । अथ तृतीयं लक्षणं लक्ष्ये दर्शयति, ईश्वर नित्यादिना । सत्ता, आद्यक्षणसम्बन्धः । स्थितिः, लब्धसत्ताकस्य कालान्तरानुवृत्तिः । नियमनं, प्रवर्तननिवर्तने । आदिशब्देन फलप्रदानं गृह्यते । एते उपादानप्रकारभेदाः । स्वमुद्दिश्य, स्वातिशयमुद्दिश्य । उपायोपेयत्वे, रक्षकत्वशेषित्वे । तत्वं, स्वाभाविकं, न तु गुणौ, न त्वौपाधिकौ ...

मूलं- वतस्त्वां श्रीरङ्गेशय शरणमव्याजमभजं'' என்கிறபடியே तत्प्रयोजनத்துக்காகவே पारार्थ्यैक स्वभावங்களான விவற்றை யுपादानंபண்ணியிவற்றாலேய तिशयवाனாகை.

(सा.दी.) प्रयुक्तमाமாகையால் प्रशंसायोग्यமன்று - ''उपकारिषु यस्साधुस्साधुत्वे तस्य को गुण'' इतिवत् । हे श्रीरङ्गेशय, अव्याजं, अकैतवனான त्वां शरणमभजं - यद्वा व्याजமென்று क्रियाविशेषणं - अनन्य प्रयोजनत्वेन வென்றுபடி - पारार्थ्यैक स्वभावங்களான வென்றது ''कष्णस्य हि कृते सर्व'' मित्यादि प्रमाण

(सा.स्वा.) अव्याजं, अनन्यप्रयोजनत्वेन । எனக்கென்றொரு प्रयोजनமன்றிக்கேயென்றபடி - இத்தால் चेतनप्रवृत्तीनां स्वप्रयोजनार्थत्वं स्वरूपமன்றென்று பலிக்கையாலவனுடைய सर्वशेषित्वं दृढी कृतமாகிறது. இதற்காகவேயிங்குउत्तरार्धंपठित्தது - தன் प्रयोजनத்துக்காகவே, இचेतனருடைய प्रयोजनத்தை प्रधानமாகப்பற்றவன்றிக்கேயென்றபடி - இதுக்கு पादानं பண்ணியென்கிறத்தோடே यन्वयम्. पारार्थ्येति - अचेतनங்களைப்போலே चेतन ரையும் तत्वपरங்களான வுपनिषத்துக்களும் तदुपब्रह्मणங்களும் पारार्थ्यैक स्वभावராகச்சொல்லுகையாலே யிவர்களுக்கு வரும் भोगमोक्षங்களு मीश्वरனுக்கு लीलार्थமும் भोगार्थமுமாகையாலிப் प्रयोजनங்களும் तदर्थ प्रवृत्तिகளும் केवल स्वार्थங்களாகத்தோற்றுகிறவிடம் भ्रांतिயாகை யாலே लोकवेदातिशयविरोध மில்லையென்று கருத்து. தன் प्रयोज नத்துக்காகவேयुपादानं பண்ணி யிவற்றால் अतिशयवाனாகை யென்கிற வித்தால் यं प्रति परमप्रयोजनीभूतस्वातिशयवत्त्वमेव यस्य स्वरूपं स तस्य शेषीயென்றபடி शेषिसामान्य लक्षणமிங்கு विवक्षितமாகையாலிது

(सा.प्र.) स्वर्गादिषु ज्योतिष्टोमादिकर्मण एव प्राधान्यादिति भाव: । ननु भगवत एव कर्मानुगुण्येवैहिका मुष्मिकफलसाधनानुष्ठानहेतुत्वं वस्तुतो भगवद्विभूतिभूतानामेव च तेषां फलत्वमित्यैहिकामुष्मिकफलकामै: कर्मसु भगवदाराधनत्वभगवत्प्रदेयफलत्वापरिज्ञानेपि तेषां फलाविनाभावात्त्रैवर्गिकफलकामापेक्षायामपि भगवत एवोपायोपेयत्व इति कथं बन्धनिवृत्तावेव भगवत: प्राधान्येनोपायोपेयत्व इति चेन्न. अनुभवसमये भगवद्ज्ञन प्रसङ्गाभावान्न तत्र भगवत उपायोपेयत्वे । बन्धनिवृत्तेस्तु भगवद्ज्ञनाभावे असिद्धे: निवृत्त्यनन्तर भाविफलानां भगवद्विभूतित्वेनैव अनुभूयमानत्वाच्च भगवत एव प्राधान्येनैवोपायोपेयत्वं इति । अतस्त्वां व्याजमन्तरेण शरणमभजं । मत्स्वरूपस्थितिप्रवृत्तीनां त्वत्प्रयोजनार्थत्वात् मद्रक्षणभरस्त (फलमपि त) वैवेति भाव:. ननु चित्रादिकं येनुतिष्ठंति तेषामेव चित्रादिकमुपाय: । पश्वादिफलं च तेषामेव

(सा.वि.) उपकारिषु यस्साधुस्साधुत्वे तस्य को गुण:। अपकारिषु यस्साधुस्स साधुरिति कथ्यत'' इत्यत्र को गुण:, कोतिशय इतिवत्; न तु गुणौ, प्रशसार्थे न भवत इत्यर्थ: । तर्ह्यनादिकाल एव किमिति न संसारान्मोचित वानित्यत्र लीलापरवशतया व्याजविशेषापेक्षत्वाच्च न मोचितवानिति तात्पर्यं. पारार्थ्यस्वरूपங்களான, पारार्थ्यं स्वरूपं स्वासाधारणधर्मो येषां तानि तथोक्तानि. இவற்றை, इमानि चेतनाचेतनवस्तूनि. उपादानंபண்ணி, स्वीकृत्य । अतिशयवाனாகை अतिशयित्वं । सर्वस्य पारार्थ्ये

(सा.सं.) व्याजं, फलेच्छा. अव्याजं, फलेच्छां विना, इत्थमभियुक्तवचनं विवक्षित । श्रीमद्भाष्यकारोक्तं

मूलं- स्तेषां त्रियुगयुगळैर्हि त्रिभिरभुः'' என்கிற श्लोकத்திலே सङ्गहित्த்தார்கள். இப்பரव्यूहங்களில் गुणक्रिया विभागங்கள், ''षाड्गुण्याद्वासुदेव: पर इति सभगवान्मुक्त भोग्योबलाढ्यात् बोधात्सङ्कर्षणस्त्वं

(सा.दी.) मूर्तय: என்று शेषं. तेषां, षड्गुणानां. भोत्रियुग, त्रिभिर्युगळै: என்னபடி. अभु:, விளங்கின. भादीप्तौलङ्. षाडुण्यादिति. हेभगवन्! भवान्परोवासुदेव इत्युक्त:. षाड्गुण्यादिति. षड्भिगुणै र्हेतुभि: मुक्तர்க்கு भोग्यராகாநின்றீர். मुक्तர்க்கு भोगदानं व्यापार:. व्यूह्य, பிரிந்தென்கை. सङ्कर्षणोभवान्. बलाढ्यात्, बलसहितात्. बोधात्, ज्ञानात्. संहरसि, वितनुषेच.

(सा.स्वा.) तिस्र:, मूर्तय इति शेष:. त्रीणियुगानि ज्ञानबलादिद्वन्द्वानि यस्य सत्रियुग:. तस्य संबुद्धि:. तेषां, षण्णांगुणानां त्रिभिर्युगळैरित्यन्वय: - अभु:, भान्तिस्म. ''भादीप्तौ'' त्रिभिर्युगळैரென்று सामान्येन அந்த रूपங்களுக்கு प्रति नियतமாகச்சொன்ன गुणद्वन्द्वங்களைவை? मत्स्यकूर्मादि मूर्तिகளில் वेदाहरणादि களைப்போலே இப்பர व्यूहங்களிலும் प्रतिनियत क्रिया विशेषமில்லாத போது இவைத்துக்கு वैयर्थ्यं प्रसङ्गिக்கையால்அந்த क्रिया विशेषங்கள் தானௌவை? ध्यानालम्बनமாய் நிற்கை सर्वमूर्ति साधारणமிறே யென்னவருளிச்செய்கிறார். இப்பரेत्यादि. षाड्गुण्यादिति. सभवान्, सर्वोत्कृष्ट स्वरूप स्वभाव युक्तोभवान्, परो वासुदेव इति, इतिशब्दोत्र प्रकार वचन:. परवासु देवाख्य प्रकारेणेत्यर्थ:. परवासुदेव विग्रह विशिष्टतयेति यावत्. षाड्गुण्यान्मुक्त भोग्य:, षड्गुण समुदायोस्य गुणविभाग:. मुक्तानां भोग प्रतिसम्बन्धितया नित्य मवस्थानमस्य व्यापार इत्युक्तंभवति. व्यूह्य, பிரிந்தென்கை. तत्तद्व्यूह विग्रहविशिष्टतयापृथग्भूयेतियावत्. त्वंसङ्कर्षणस्सन् ...

(सा.वि.) प्रथम तरमूर्ति:, व्यूह वासुदेवमूर्ति:. एतैष्षड्भिर्गुणै: उपासकानामनुसन्धेयैरिति शेष:. बभौ, भातिस्म. तत:, अनन्तरं. तेषां, षड्गुणानां मध्ये. त्रिभिर्युगळै:, ज्ञानंबल मित्येकंयुगळं. ऐश्वर्य वीर्यमित्यपरं युगळं. शक्तिस्तेज इत्यन्यद्युगळ मित्येवं प्रकारै स्तत्तन्मूर्त्युपासकानु सन्धेय भूतैस्सहितास्तिस्रस्सङ्कर्षण प्रद्युम्ना निरुद्धमूर्तय:. अभु:, भान्तिस्म. भादीप्तावित्यस्माल्लिङि प्रथम पुरुष:. षाड्गुण्यादिति. हेरङ्गाधि राज - पर इति कथितो वासुदेवस्त्वं षाड्गुण्यान्मुक्त भोग्योभवसीत्यर्थ: - मुक्तानां भोगप्रदानं वासुदेवव्यापार:. तथा व्यूह्य, व्यूह रूपेण स्थित्वा. बलाढ्यात् बलसहितात् - बोधात्, ज्ञानात् - त्वं सङ्कर्षण स्सन्हरसि, संहारं

(सा.सं.) मूर्ति: - तत: परवासुदेवात्. तिस्रोमूर्तय:. तेषां, ज्ञानादिषड्गुणानां मध्ये. हेत्रियुग. ''अम्भस्यपारे भुवनस्य मध्येनाकस्यपृष्ठे महतोमहीया'' नित्युक्त त्रिस्थानक. यद्वा, ज्ञानादियुगळ त्रयपरिपूर्ण. अस्याश्श्रुते:. क्षीराब्धि श्रीशैल परमपदरूपस्थानानि क्रमेणार्थ इति केचित्. ''आपोनारा'' इत्युक्त विधेजले, कार्यावस्थ प्रपञ्चमध्ये परमपद इति क्रमेणार्थइति बहव: - युगळैस्त्रिभिर्हि, एकैक युगळाविष्करण करणकैकमूर्तिस्सन् त्रिधा अभु:, अभूरित्यर्थ:. षाड्गुण्यादिति त्रिव्यूह पक्षाभिप्राय:. तत्रमुक्तभोग्य इत्यन्तोक्त: परवासुदेव:. बलाढ्यादित्यादिना व्यूहत्रय मुच्यते. बलाढ्याद्बोधात्, ज्ञान बलाभ्यां. संहारक स्सङ्कर्षण: ...

मूलं- हरसिवितनुषे शास्त्रमैश्वर्य वीर्यात्। प्रद्युम्नस्सर्ग धर्मौनयसिच भगवन् शक्ति तेजोनिरुद्धो बिभ्राणः पासितत्वं गमयसिचतथा व्यूह्य रङ्गाधिराज'' என்கிற श्लोकத்திலே सङ्गहिக்கப்பட்டன. जाग्रदादिपद

(सा.दी.) प्रद्युम्नस्त्वमैश्वर्य सहिताद्वीर्यात्सर्गं धर्मंचनयसि. अनिरुद्धस्त्वं शक्तितेजोबिभ्राणः जगद्रक्षसितत्वञ्च ज्ञापयसिயென்கை. இव्यूहங்களில் जाग्रदादिस्थान भेदங்களும் அதிலுள்ள विशेषங்களு மெல்லாமிவரால் सङ्गहिக்கப்பட்டன வென்கிறார். जाग्रदादीत्यादिயால். நாலுव्यूहங்களிலும் क्रमेण

(सा.स्वा.) बलाढ्यात्, बलसहितात्. बोधात्, ज्ञानात्. हरसि, जगत्संहारं करोषि. शास्त्रञ्चवितनुषे. प्रद्युम्नस्सन्, ऐश्वर्यवीर्यात्. द्वन्द्वैक वद्भावः. सर्गधर्मौनयसि, सृष्टिं धर्मञ्च प्रवर्तयसि. अनिरुद्धस्सन् शक्ति तेजः पूर्ववद्द्वन्द्वैकवद्भावः. शक्तितेजसी बिभ्राणस्सन्. पासि, जगद्रक्षणं करोषि. तत्वङ्गमयसिच, गत्यर्थोत्र बुद्ध्यर्थः. बोधय सीत्यर्थः. सङ्गहिக்கப்பட்டன. भगवच्छास्त्रத்தில் நானா संहिதைகளிலே विशकलित वेषेण विस्तृतமாகசொன்னவையெல்லாம் सर्वருக்கும் सुबोधार्थं सङ्कलय्य दर्शितங்களென்னபடி - இத்தாலிங்கு भगवच्छास्त्र वचनங்களையெடாதொழிவானேன் என்கிற शङ्कैயும் परिहृतं. இப்படி மேலும் सङ्गृहीत மென்னு மிடத்தில் तात्पर्यं கண்டுகொள்வது. श्रीसात्वतத்திலே ''सर्वक्रिया विनिर्मुक्तम मूर्तं परमार्थतः। चातुरात्म्यन्तदाद्यंवै'' इत्यादिகளிலே सङ्कर्षणादि व्यूहங்கள் निर्व्यापारங்களென்று சொல்லாநிற்கவிங்கு क्रिया विभागं சொன்னதுகூடுமோ? जाग्रदादिस्थान विशेषங்களிலே चातुरात्म्यं நாலுமுண்டென்று சொல்லி யிருக்கையால் அதிலெயொருचातुरात्म्य विशेषத்தையங்கு निर्व्यापारமென்கிறதத்தனையாகையால் विरोधமில்லை யென்னில் அப்படி चातुरात्म्यं நாலும்உண்டென்றுகைக்கும் அவற்றில் निर्व्यापारत्व सव्यापरत्वादि विशेषங்களுன்டென்கைக்கும் सम्प्रदायமுண்டோ? வென்னவருளிச்செய்கிறார் - जाग्रदादीत्यादि. विशेषமெல்லாமென்றது जाग्रदादि स्थानभेदங்களிலே विग्रहங்களுக்குள்ள मूर्तत्वा मूर्तत्व, ...

(सा.प्र.) मङ्गळ गुणः - तवानन्त गुणस्यापिषडेव प्रथमेगुणा'' इत्यादि प्रमाणादितिभावः. जाग्रदादिपद भेद

(सा.वि.) करोषि - शास्त्रंवितनुषे, जगत्संहारश्शास्त्र करणञ्चतस्यव्यापारः - ऐश्वर्यवीर्यादिति, समाहारद्वन्द्वः - ऐश्वर्य वीर्याभ्यां प्रद्युम्नस्सन् सर्गंधर्मञ्चनयसि, सृष्टिकरणं धर्मप्रवर्तनञ्चतस्य व्यापारः - शक्ति तेज इत्यत्रापि समाहारद्वन्द्वः - शक्तिं. तेजश्चबिभ्राणोनिरुद्धस्सन्पासि, रक्षसि. तत्वङ्गमयसि, ज्ञापयसिच. रक्षणं तत्वज्ञापनञ्च तस्य व्यापारः - इत्येवं प्रतिनियत व्यापार उक्तः जाग्रदादिपदभेदங்களும் विष्वक्सेन संहितादिषु ''उपासकानुग्रहार्थं स्वप्नादिपद संज्ञित'' मित्यादिना उक्तावस्थाविशेषाः जाग्रत्स्थानं, स्वप्नस्थानं, सुषुप्तिस्थानं, तुरीयस्थानमिति संज्ञिकाः. அவத்திலுள்ள ...

(सा.सं.) अयञ्चरुद्राधिष्ठाता. ऐश्वर्य वीर्याभ्यां सृष्टिकर्ता; धर्मप्रवर्तकश्च प्रद्युम्नः अयंचतुर्मुखाधिष्ठाता. तेजश्शक्तिभ्यामनिरुद्धः. पासि, स्थिति कर्तासि. तत्वानिप्रवर्तयसिच. तथा, व्यूह्य. इत्थमात्मानं विभज्य - यद्वातत्वं, परमार्थं मोक्षं गमयसि, प्रापयसि. एवं प्रधानव्यूहा नुक्त्वातदवान्तर व्यूहान् प्रदर्शयति. जाग्रदिति.

मूलं- भेदங்களி (भेदங்களுமவற்றி) லுள்ள विशेषங்களெல்லாம்,

(सा.दी.) जाग्रत्स्थानं, स्वप्नस्थानं, सुषुप्तिस्थानं, तुरीयस्थान மென்று स्थानभेदங்களுமவத்திலுள்ள गुणाभरणायुधादिகளும், भगवच्छास्त्रத்திலே சொல்லப்பட்டவை இश्लोकத்தில் सङ्गृहीतங்கள் - ...

(सा.स्वा.) सक्रियत्व, निष्क्रियत्वங்களும் सायुधत्व रेखारूपायुधत्वादि களுமாகிறअवान्तर विशेषங்களெல்லா மென்னபடி. அதாவது, परमव्योम्नि शुद्ध सत्वद्रव्य परिणामरूप: करचरणादिरहित: स्थूणाकारोमहत्तरायाम परिणाहो विशाख यूपाख्य: कश्चिद्भगवतोरूपविशेषोस्ति. तस्मिन्नूर्ध्वाध: प्रदेशेषु जाग्रत्स्वप्न सुषुप्तितुरीय संज्ञिकानि चत्वारिस्थानानिसन्ति. तत्रविशाख यूपस्य मूला दुपरिक्वचिन्मध्यप्रदेशे जाग्रत्संज्ञकंस्थानं. तदुपरि स्वप्न संज्ञकं. तदुपरि सुषुप्ति संज्ञकं. अग्रप्रदेशे तुरीय संज्ञकं. तत्र जाग्रत्स्थाने जाग्रद्व्यूह संज्ञकं वासुदेव सङ्कर्षणादि मूर्ति चतुष्टयं विशाख यूपस्यशाखा चतुष्टय वत्परित: प्रागादि क्रमेण वर्तते. तस्य विशेषस्सृष्टि स्थित्यादि जगद्व्यापार:. सितरक्तादयो त्युत्कृष्टावर्णा:, सर्वायुधाद्युपकरण वत्वञ्च. स्वप्नस्थानेच, स्वप्न संज्ञकं वासुदेवादि चातुर्व्यूहं पूर्ववद्वर्तति - तस्य विशेषस्तुसृष्टि स्थित्यादि व्यापारेच्छामात्रं. नतु तद्व्यापार:. जाग्रद्व्यूहं प्रतिहेतु तयावस्थानञ्चास्य विशेष:. सितरक्तादि वर्णाश्च नात्युत्कृष्टा:. आयुधादि मत्वेपि ध्वजाद्युपकरण रहितत्वञ्चेति. सुषुप्तस्थानेच सुषुप्त संज्ञकं चातुर्व्यूहं पूर्ववदेव वर्तते. तस्य विशेषस्तु सृष्ट्यादीच्छापिनास्ति. किंतु स्वानन्दानुभवमात्रं. तत्रप्राग्भागस्थ वासुदेवाख्य व्यूहस्य करचरणादि युक्त विग्रहोनास्ति. किंतु विशाख यूपस्य शाखावत्परिणतेन शुद्ध सत्वद्रव्यैक देशेन शरीरतया योगमात्रं षाड् गुण्य प्रकाशन मात्रञ्च. दक्षिण भागादिस्थितानां सङ्कर्षणादि संज्ञानां द्वितीयादिमूर्तीनाञ्चकरचरणादियुक्त विग्रहवत्वेपि आयुधादिकंनास्ति - अपितुकरतलेषु रेखारूपशङ्खलाङ्गलाद्यायुध चिह्नवत्वं. सितरक्तादिवर्ण भेदाभावश्चेति. तुरीय स्थानेचतुरीयाख्यं चातुर्व्यूहं पूर्ववदेववर्तते. तस्य विशेषस्तु चतुर्णामपिकर चरणादि युक्त विग्रहो नास्ति. अपितु सुषुप्त वासुदेवतुल्य शरीरत्वं. तत एव चेतन व्यापार चिह्नराहित्यञ्च. प्राग्भागस्थ वासुदेवस्यषाड्गुण्य प्रकाशनं. इतरेषां तत्तद्गुणद्वन्द्व प्रकाशनञ्चेत्येषां चातुर्व्यूहानां जाग्रत्स्वप्नादि संज्ञत्वं व्यापार बाहुल्य तदल्पत्व निर्व्यापारत्वादि रूपलोकदृष्टसादृश्य प्रयुक्तं. तत्तत्स्थानानान्तु तत्तच्चातुर्व्यूह सम्बन्ध प्रयुक्तमिति मन्तव्यं. उक्तेष्वर्थेषु प्रमाणं श्रीलक्ष्मीतन्त्रे ''पूजितस्तेजसांराशि रव्यक्तो मूर्तिवर्जित:। विशाखयूप इत्युक्तस्तत्तद्ज्ञानादि ब्रह्मित:।। तस्मिंस्तस्मिन्पदेतस्मान्मूर्ति शाखाचतुष्टयं. ...

(सा.प्र.) ங்களிति - विष्वक्सेन संहितायां - ''सुषुप्तिस्वप्न संज्ञंयज्जाग्रत्संज्ञं तथापरं। चातुरात्म्यं महाभागे'' त्यारभ्य ''उपासकानुग्रहार्थं स्वप्नादि पदसंज्ञितं। स्वप्नाद्यवस्था भेदास्तु ध्यायिनांखेदशान्तये। तत्तत्पदस्थजीवानान्तन्निवृत्यर्थ मेवच। स्वप्ना द्यवस्थजीवाना मधिष्ठातार एवते''

(सा.वि.) विशेषங்கள், तेषु विद्यमान गुणाभरणायुधादय:. என்று सङ्गृहीतங்களாய்த்து इत्यनेन सम्बध्यते.

मूलं- ''जाग्रत्स्वप्नात्यलसतुरीय प्राय

(सा.दी.) जाग्रदित्यादि. जाग्रत्, जागरावस्थै. स्वप्नः, स्वप्नावस्थै. अत्यलस, सुषुप्त्यवस्थै. तुरीय, तुरीयावस्थै. அதாவது மூர்ச்சாவஸ்தை. इमाः अवस्था येषां ते तथोक्ताः. जाग्रत्प्रायास्स्वप्नाद्यवस्था प्राया ये ध्यातार उपासकास्ते स्वात्मानन्तत्तदवस्था विशिष्टत्वेनध्यायन्ति - ...

(सा.स्वा.) वासुदेवादिकं शक्र प्रादुर्भवति वैक्रमात्।। तुर्यादि जाग्रदन्तं यत्प्रोक्तं पदचतुष्टयं। वासुदेवादिना प्रोक्तमनि रुद्धान्तिमेनतु।। तत्र तत्र पदेचैव चातुरात्म्यं तथा तथा। व्यूहाद्व्यूह समुत्पत्तौ पदाद्यावत्पदान्तर'' मित्यादि. अत्र विशाख यूपाग्र स्थिततुर्य व्यूहस्थान स्यादित्वं विवक्षित्वा जाग्रत्स्थान स्यान्त त्वोक्तिः. श्री सात्वते. तुर्य व्यूहस्य विशाख यूपाग्रस्थानकत्वेन विशिष्योक्तेः. एषां विशेषास्तुश्री सात्वतोक्ताः. यथा ''सर्व क्रिया विनिर्मुक्त ममूर्तं परमार्थतः। चातुरात्म्यं तदाद्यंवै शुद्धं संविन्मयंमहत्।। वह्न्यर्केन्दु सहस्राभ मानन्द स्पन्दलक्षणं। चातुरात्म्यन्तु तद्विद्धि द्वितीय ममलेक्षण।। भिन्नं सितादि भेदेन ऊर्ध्वाधस्संस्थितेनच। चातुरात्म्यं तृतीयन्तु सुधा सन्दोहसुन्दरं।। स्थित्युत्पत्ति प्रळय कृत्सर्वोप करणान्वितं। चतुर्थं विद्धि तद्यस्य विश्वं तिष्ठतिशासना'' दिति ''अनुज्झित स्वरूपस्तु प्राग्भागे षड्गुणात्मना। बलसंवलितेनैन ज्ञानेनास्तेथदक्षिणे।। ऐश्वर्येणतु वीर्येण प्रत्यग्भागे प्रतिष्ठिते। तेजश्शक्त्यात्मना सौम्ये सुस्थितः परमेश्वरः।। किंतु द्वितीय मूर्तेर्वैशुभ पाणि तलद्वये। स्फुटोरेखा मयश्शङ्ख स्सुव्यक्तं लाङ्गलंमह'' दित्यादिच. अस्यसर्वस्य श्रीसात्वतोक्तं हृदयेध्यान प्रकारं सङ्ग्रहीतुं प्रवृत्त श्श्रीवरदराज पञ्चाशद्गतो ''रूढस्य चिन्मय तये''ति श्लोकश्चात्रानु सन्धेयः. प्रकृते जाग्रत्स्वप्नेत्यादि श्लोके स्वप्न शब्दस्य अर्श आद्यजन्तत्वमभिमतं. तेन जाग्रदादि पदस्यापि धर्मि परत्वसिद्धिः. अत्यलसोत्र सुषुप्तः. तुरीयो मूर्छितः. तत्प्रायाः, तत्सदृशाः. ध्यातारः, उपासकाः. अत्र जाग्रत्प्रायत्वं नाम ध्याने प्रवृत्तस्यापि जाग्रत्पुरुषवद्विषयेषु बाह्येन्द्रिय व्यापार बाहुळ्यं. स्वप्न प्रायत्वं नाम ध्यान परिपाकेन बहिरिन्द्रिय व्यापार निरोधेपि स्वप्न दृक्पुरुष वद्विषयेष्वन्त रिन्द्रियमात्र व्यापारवत्वं. अत्यलसप्रायत्वं नाम ततोप्वधिक परिपाकवतस्सुषुप्तवद्विषयेष्वन्त रिन्द्रिय स्यापि व्यापारराहित्यं. ...

(सा.प्र.) इत्यत्रोक्ता विशेषा इत्यर्थः - जाग्रत्स्वप्नेत्यादि ''तस्मादपिविनिर्मुक्ता'' इत्यारभ्य निर्याणाधिकारोक्त मार्गगामिनामुपासकानां - जाग्रत्प्रायत्वं नामविषयान्तर सञ्चारबाहुळ्येपि भगवत्स्म

(सा.वि.) जाग्रदित्यादि - हेस्वामिन् चातुर्व्यूह्यं स्वार्थेष्यङ्. चतुर्व्यूहान्, वासुदेव सङ्कर्षण प्रद्युम्ना निरुद्धान् - जाग्रत्स्वप्नात्यलस तुरीयप्रायध्यातृक्रमवदुपास्यः. अत्यलसशब्देन सुषुप्त उच्यते - तुरीयशब्देन मूर्छित उच्यते - जाग्रत्प्राय, स्वप्नप्राय, सुषुप्तप्राय ...

(सा.सं.) पदशब्दोवस्थार्थकः. प्रायशब्द स्सादृश्यवाची. प्रत्येक मभि सम्बन्ध्यते. उपासकानां जाग्रत्प्रायत्वं नामविषयान्तर सञ्चारबाहुळ्येपि भगवत्स्मृतिमत्वं - स्वप्न प्रायत्वंनाम ...

मूलं- ध्यातृक्रमवदुपास्य:। स्वामिंस्तत्तद्गुण परिबर्ह

(सा.दी.) तैरुपासकैः क्रमेणोपास्योभवति. भगवान् व्यूहावस्थ:. तत्रजाग्रदादिस्थान विशिष्टध्यातृभिरुपास्यो व्यूहवासुदेवः क्रमेण जाग्रत्. स्वप्नः, सुषुप्तः. मूर्छ इतिव्यपदिश्यते. एवं सङ्कर्षणादिष्वपि இவ்அर्थं சொல்லப்பட்டது पूर्वार्धத்தாலே. उत्तरार्धத்தில் हेस्वामिन् तत्तद्गुण परिबर्हः. परिबर्हः, परिच्छदः. तत्त ...

(सा.स्वा.) तुरीयप्रायत्वं नाम पुष्कलध्यान परिपाक महिमवतो मूर्छित पुरुषवद्विषयव्यापाराईत्व चिह्नस्याप्यभाव:. नहि सुषुप्त इव व्यापाराईत्व चिह्न मुच्छ्वास निश्वासादिकं मूर्छिते दृश्यते. एवं चतुर्विधा वस्थाध्यातार:. तेषां क्रमवत्, रीतिवत्. अस्य चतुर्धावहसीत्यनेनान्वय:. अयंभाव:. यथोपासका स्स्वावस्थां जाग्रत्प्रायत्वादि रूपेण चतुर्धावहन्ति तद्रीतिवदुपास्यस्त्वमपि चातुर्व्यूह रूपां स्वावस्थां जाग्रद्व्यूहत्वादि रूपेण चतुर्धावहसीति. अत्र आश्रिताकारानुकरण वर्णनेनाश्रितेषु भगवतः प्रेमातिशयो व्यज्यते. तत्क्रतुन्याय विपरीतं किमिदं चित्रमिति विस्मयश्च. तत्तद्गुणेति, तेते प्रतिव्यूह भिन्नभिन्ना गुणा: विग्रह कान्तयः परिबर्हा: आयुधादि परिच्छदाश्चयस्य सतथोक्त: इदम् विधेय विशेषणं. व्यूहा: ...

(सा.प्र.) रणवत्वं - स्वप्न प्रायत्वं नामाल्पाल्प विषयान्तर सञ्चारेपि परिचयाधिक्येन भगवत्स्मरण बाहुळ्यं. अत्यलसप्रायत्वं नाम सुषुप्तौप्रहारेवेदना द्यनुभववद्विषयान्तर सञ्चाराभावेपि स्वप्नसुखदु:खादिभिरीषदन्तरित भगवत्स्मरण वत्वं - तुरीय प्रायत्वंनाम मूर्छायां केवल ...

(सा.वि.) मूर्छितप्राय, ध्यातृक्रमवानुपास्यस्सन् चतुर्धावहसि - एकैकं व्यूहंचतुर्भेदभिन्नंकरोषि. ध्यातृक्रमवांश्चासावुपास्यश्चेतिकर्मधारय समास: - अयंभाव:; जाग्रत्प्रायत्वं नाम विषयान्तर सञ्चारबाहुळ्येपि भगवत्स्मरणवत्वं - स्वप्नप्रायत्वंनाम; अल्पाल्प विषयान्तर सञ्चारेपि परिचयाधिक्येन भगवत्स्मरण बाहुळ्यं. अत्यलसप्रायत्वंनाम; सुषुप्तौ विषयान्तर सञ्चाराभावेपि प्रहारेवेद नाद्यनुभववत्स्व सुखदु:खादिभि रीषदन्तरित भगवत्स्मरण वत्वं. तुरीयप्रायत्वं नाम; मूर्छायां केवलस्वानुभववत्तैल धारावदविच्छिन्न स्मृति सन्ततिमत्वं. एतादृशध्यातृक्रमेण उपास्योवासुदेवादिरपि जाग्रत्स्वप्नः सुषुप्तः मूर्छित इति व्यपदिश्यत इत्येकैकस्य चातुर्विध्यमिति. அவற்றினுள்ளோत्युक्त विशेषमाह - तत्तद्गुण परिबर्ह इति - परिबर्हः, परिच्छदः ...

(सा.सं.) अल्पाल्प विषय सञ्चारेपि परिचयाधिक्येन भगवत्स्मरण बाहुळ्यं. अत्यलसप्रायत्वं नाम सुषुप्तौ वेदनाद्यनुभववद्वि षयान्तर सञ्चाराभावेपिस्व सुखदु:खादिभिरीषदन्तरित भगवत्स्मरणवत्वं. तुरीय प्रायत्वं नाम मूर्छायां केवलस्वानुभव वत्तैलधारा वदविच्छिन्नस्मृति सन्ततिमत्वं. एवंविध ध्यातृक्रम वद्भिरुपास्य इत्यर्थ:. परिबर्हः, परिच्छ्छद:. आयुधवर्ण भूषणादय:. सहशब्द:. अविनाभावार्थ:. तत्तत्सह परिबर्हः. तत्तद्व्यूहा विनाभूत परिच्छदस्सन्निति बहुव्रीहि:. चतुर्धातत्तदुपास्य क्रमभेदेन चतुर्धा व्यवस्थितं. चातुर्व्यूह्यं, चतुर्व्यूहभावं। वहसीत्यर्थ: - चतुर्धा चातुर्व्यूहमित्युक्त्या चतुर्व्यूहष्वेकैक व्यूहस्यचत्वारो वान्तर ...

मूलं- श्चातुर्व्यूह्यं वहसिचतुर्धा'' என்று सङ्गृहीतங்க ளாயிற்று. केशवादिகளான பன்னிரண்டு रूपங்களும் व्यूहान्तरங்கள். विभवங்களாவன —

(सा.दी.) त्स्थानेषु योग्या गुणाः परिबर्हाश्चयस्यसन् तत्तद्ध्यातृभिः क्रमेणोपास्योभवसि. एवंचातुर्व्यूह्यं, चातुर्व्यूहं. स्वार्थेष्यङ्. श्रीवासुदेव सङ्कर्षण प्रद्युम्ना निरुद्धभेदेन भिन्नं चतुर्धावहसि. प्रत्येकं जाग्रत्स्वप्ना त्यलसतुरीये त्युक्त चतुष्प्रकारेण निर्वहसि என்கை. यथोक्तंरामानुज विपश्चिद्भि रेतच्छ्लोक व्याख्यानावसरे ''तत्तदुपासक भेदेन चतुर्धा व्यवस्थितं चातुर्व्यूह्यं चतुर्व्यूहभावं वहसि. चतुर्व्यूहेष्वेकैकस्य चत्वारो वान्तरावस्था स्संभवन्ति. एवमुपासनं तत्तद्गुण परिबर्ह भेदास्सर्वमपि श्रीपाञ्चरात्रतन्त्रेषु प्रसिद्ध''मिति. व्यूहान्तरங்களோரொன்றில் மும்மூன்றாய் प्रादुर्भविத்தவையென்கை. இனிविभवங்களை வெளியிடுகிறார். विभवங்களாவன इत्यादि. ...

(सा.स्वा.) वासुदेवादिमूर्तयः. चत्वारोव्यूहा एवचातुर्व्यूहं. स्वार्थिकोण् प्रत्ययः. व्यूहங்கள் நாலென்றது கூடுமோ? மற்றும் केशवादिகளான रूपங்களிருக்கவில்லையோ? வென்னவருளிச்செய்கிறார். केशवेत्यादि. அவைகளிந்த நாலுव्यूहங்களில் நின்றுமடைவே யோரொன்றில் மும்மூன்றாக பிரிந்து शास्त्रங்களிலே व्यूहान्तरங்களென்று संज्ञै பெற்றிருக்கையாலே व्यूहங்கள் நாலென்றதுக்குத் தட்டில்லை யென்று கருத்து. இங்கு व्यूहाकारानु वृत्तिயுள்ள विग्रहங்களை व्यूह भेदங்களென்றும் அதில்லாமல் व्यूहादुत्पन्नங்களாயு மிருக்கு மவைகளை व्यूहान्तरङ्गளென்று शास्त्रங்களில் சொல்லும். இப்படியே विभव भेदं विभवान्तर மென்கிற संज्ञैகளுக்கு ம்अर्थ भेदங்கண்டு கொள்வது. ஆனாலும் परव्यूहादि व्यतिरिक्तமாக विभवங்களென்று சிலरूपங்களைச்சொன்னது கூடுமோ? विभव மென்றும், विभूति யென்றும், पर्याय மாகையாலே इश्वर विभूतिயான परव्यूह विग्रहங்களும் विभवங்களன்னோ? இங்கு विभवशब्दं विग्रह विशेषங்களிலே रूढமென்றிலவை களில்இவை எத்தனைகளென்ன வருளிச்செய்கிறார். विभवங்களாவன वित्यादि. आदिशब्देन् ध्रुवादि संज्ञित रूपसङ्ग्रहः. यथोक्तं श्रीसात्वतादिषु ''पद्मनाभो ध्रुवोनन्त श्शक्त्यात्मा मधुसूदनः । विद्याधिदेवः ...

(सा.प्र.) स्वात्मानुभववत्तैल धारावदविच्छिन्न भगवत्स्मृति सन्तति मत्वमित्यर्थः - विभवங்களாவனே त्यादि पद्मनाभादिகளான முயத்துச்சின்னमिति - विष्वक्सेन संहितायां ''पद्मनाभादिका स्सर्वेवैभवीयास्तथैवच। षट्त्रिंशत्संख्या संख्याताः प्राधान्येन गणेश्वर। षट्त्रिंशद्भेद भिन्नास्तु पद्मनाभादिकास्स्मृता'' इत्युक्तेः - अहिर्बुध्न्यसंहितायांच ''विभवाः पद्मनाभाद्यास्त्रिंशच्चनव ...

(सा.वि.) तत्तत्स्थानेषु योग्यागुणाः. परिहार्थश्चयस्य सतथोक्तस्सन्. एतत्सर्वं श्रीपाञ्चरात्रागमतन्त्रेप्रसिद्धं - एकैक व्यूहस्य त्रिधाप्रादुर्भविन केशवादयोद्वादश जाता इत्याह, केशवादिति - विभवावतारानाह - विभवங்களாவனेति. पद्मनाभादयः. முப்பத்துச்சின்னம், त्रिंशतः किञ्चिदधिक मिति- ...

(सा.सं.) व्यूहाः - केशवादयः. तानपिभेदान्वहसीत्यभिप्रेतं, अभिप्रेतमेवार्थमाह. केशवादि களானइति - प्रयोजन वशத்தாலே इति. मत्स्याद्यवतारदशकस्य ''परित्राणाय साधूना'' मित्युक्त प्रयोजनत्रयैदं पर्यमस्तीति सर्वलोक प्रसिद्धिकरण रूप प्रयोजन वशेनेत्यर्थः, पद्मनाभादि ...

मूलं- पद्मनाभादिகளானமுப்பத்துச்சி (ச்சின்னம்) ல்வானம் ரூபங்ஙள்.

(सा.स्वा.) कपिलो विश्वरूपोविहङ्गमः। क्रोडात्माबडबावक्त्रोधर्मो वागीश्वरस्तथा। देव एकार्णवशयः कूर्मः पाताळ धारकः। वराहो नारसिह्मश्चा प्यमृता हरणश्चवै। श्रीपति र्दिव्य देहोथ कान्तात्मा मृतधारकः। राहुजित्काल नेमिघ्नः पारिजात हरोमहान्। लोकनाथस्तु शान्तात्मा दत्तात्रेयो महाप्रभुः। न्यग्रोध शायी भगवानेक शृङ्ग तनुस्ततः। देवो वामन देहस्तु सर्वव्यापी त्रिविक्रमः। नरोनारायणश्चैव हरिः कृष्णस्तथैवच। ज्वलत्परशुधृग्रामोरामश्चान्यो धनुर्धरः। वेदविद्भगवान् कल्की पाताळ शयनः प्रभु''रिति. முப்பத்துச்சின்னம், முப்பத்துச்சில்வாநம். तत्तत्संहितைகளிலே முப்பதுக்கு மேல் ஆறென்றும், எட்டென்றும், ஒன்பதென்றும் சொல்லி யிருக்கையால் இப்படிச்சில்வான மென்று பொதுவாகச்சொன்னது. विभवம்முப்பத்துச்சின்னமானால் இவத்தில்एक देश ...

(सा.प्र.) चैवहि। पद्मनाभोद्ध्रवोनन्तश्शक्त्यात्मा मधुसूदनः। विद्याधिदेवः कपिलोविश्वरूपोविहङ्गमः क्रोडात्मा बडबावक्त्रो धर्मोवागीश्वरस्तथा। एकांभोनिधिशायीच भगवान् कमलेश्वरः। वराहोनारसिह्मश्च पीयूषाहरणस्तथा। श्रीपतिर्भगवान् देवः कान्तात्मामृतधारकः। राहुजित्कालनेमिघ्नः पारिजातहरस्तथा।लोकनाथस्तुशान्तात्मा दत्तात्रेयो महाप्रभुः। न्यग्रोधशायीभगवानेक शृङ्गतनुस्तथा। देवोवामनदेहस्तु सर्वव्यापी त्रिविक्रमः। नरोनारायणश्चैव हरिः कृष्णस्तथैवच। ज्वलत्परशुधृग्रामो रामश्चान्यन्यश्चतुर्गतिः। वेदविद्भगवान्कल्की पाताळशयितः प्रभुः। त्रिंशच्चनवचैवैते पद्मनाभादयोमता'' इति संख्या भेदप्रतिपादना दुभयोर्भिन्न भिन्न संख्याबोधकत्वेपि संख्याभेदनिर्देशस्य प्रमाणतमत्वेन तत्वत्रयमर्थ पञ्चक मित्यादिवद्विवक्षा विशेषेणोपपत्ते र्विरोधा भावात्संख्याद्वय सङ्ग्रहार्थं सामान्यतो முப்பத்துச்சின்ன रूपमिति. त्रिंशत उपरिकिंचिच्छब्दस्य पर्ययेण चिन्नशब्देननिर्देशः - यद्वा, சின்ன, चिबहमित्यर्थः - एवंच चिन्नशब्दस्यकिंचिच्छब्दस्यच संख्याद्वय संग्राहकत्व मपूर्ति सूचकतयेतिज्ञेयं-

(सा.वि.) अयंभावः. विष्वक्सेन संहितायां ''पद्मनाभादिकास्सर्वे वैभवीयास्तथैवच। षट्त्रिंशत्संख्यासख्याताः प्राधान्येन गणेश्वरे''त्युक्तं। अहिर्बुध्न्य संहितायां ''विभवाः पद्मनाभाद्यास्त्रिंशच्चनवचैवही'' ति. एवं संख्याभेदेसति अर्थ पञ्चकं तत्वत्रयमिति वत्किंचि द्विवक्षाभेदेनोभय संख्योपपत्तेरुभयोप लक्षणतया முப்பத்துச்சின்ன मित्युक्तं। चिन्नशब्दः किञ्चिद्वाचि त्रिंशत उपरिकिंचित्। षड्वानवेति ''पद्मनाभोध्रुवोनन्त श्शक्त्यात्मा मधुसूधनः। विद्याधिदेवः कपिलो विश्वरूपो विहङ्गमः क्रोडात्मा बडबावक्त्रो धर्मो वागीश्वरस्तथा। एकाम्भो निधिशायीच भगवान्कमलेश्वरः। वराहोनारसिह्मश्च विषाहरणकस्तथा। श्रीपति र्भगवान् देवः कान्तात्मामृत धारकः। राहु जित्कालनेमिघ्नः पारिजात हरस्तथा । लोकनाथस्तु शान्तात्मादत्तात्रेयो महाप्रभुः

(सा.सं.) विभवानामपि भगवदवतारत्वमेव गुण व्यापाराभ्या मभिव्यज्यत इति சின்னம் रूपங்களித்யுக்தं

मूलं- இவற்றில் मत्स्यकूर्मादिகளான அவतारங்கள் ஒரு प्रयोजनवशத்தாலெ विशेषित्துச் சொல்லப்பட்டன. இவ்விभवங்களில் ईश्वरन् அவ்வோकार्य विशेषங்களுக்கீடாக, தான் வேண்டின गुणங்களை வேண்டினபோது மறைத்தும், வேண்டின போது प्रकाशिப்பித்தும் நடத்தும்.

(सा.दी.) முப்பத்தாறா யிருக்க दशावतारமென்று विशेषित्துச்சொல்லுகைக்கு हेतुவைக்காட்டு கிறார். இவத்திலித்யாதியால். ''मत्स्य: कूर्मोवराहश्च नारसिंह्मोथ वामन:। रामो रामश्च रामश्च कृष्ण: कल्कीतितेदश'' என்றுசொல்லப்பட்ட विभवावस्थैகளில் व्यूहங்களிற்போலே गुणविशेषा विष्कार नियमமில்லை யென்கிறார். இव्विभवங்களித்யாதி யால். வேண்டின போதுமறைத்தும், रामावतारத்தில் प्रायिकமாக ज्ञानबलादि களைமறைத்தான். कृष्णावतारத்தில் जरासन्धादि युद्धங்களில் ஒளித்துப்போனானிறே. प्रकाशिப்பித்தும், जटायुவுக்கு परगति प्रदानं பண்ணினான். ''चापमानायसौमित्रे. जगत्स शैलं ...

(सा.स्वा.) மானदशावतारमात्रத்தை विभवமென்று शास्त्रங்களில் विशेषित्துச்சொன்னதெத்தாலே யென்னவருளிச்செய்கிறார். இவத்திலித்யாதி. अत्र यद्यपि श्रीसात्वतादि वचनेषु मत्स्यरूपं विशिष्यनप्रतीयते. तथापि एकशृङ्गतनुशब्देन तद्रूपं विवक्षित मितिवा संहितान्तरेषु विशिष्योक्तिर स्तीति वा अभिप्रेत्य இவத்திலித்யுக்தं. ஒரு प्रयोजन वशத்தாலே, सौलभ्याति शयतन्मूला श्रयण सौकर्यादि रूपமான ஏதேனு மொரு प्रयोजनवशத்தாலென்னபடி. ஆனாலும் रामकृष्णादि रूपங்களை साक्षाद्भगवदवतारங்களென்று சொல்லக்கூடுமோ? இவத்தில் ज्ञानशक्त्यादिகளுக்கு ஒருக்காலுண்டா யொருக்காலில்லை யாகக்காண்கையாலே யிவைकर्मवश्य रूपங்களா மத்தனையன்னோ? தனக்குள்ள குணங்களை யிவன்தானே யொருக்கால் மறைத்தொருக்கால் प्रकाशिப்பிக்கு மத்தனைபோக்கி யிவை யுண்டாவதும் नशिப்பது மில்லையென்னில அப்போதிந்த மறைவும், प्रकाशமும், कर्मवश्यருக்குப்போலே तत्तत्कालங்களிலே विचित्रமாக நடப்பானேன்? कर्म वैचित्र्यத்தாலே யானாலன்றோ யிப்படி நடக்கலாவதென்ன வருளிச்செய்கிறார். இव्विभवங்களித்யாதி. அவ்வோकार्य विशेषங்களென்னது அந்தந்த विचित्र कार्यங்களென்னபடி. நடத்த வேண்டின அந்தந்த कार्यங்கள் विचित्रங்களாகையால் तदनुगुणமாக गुणங்களுக்கு மறைவும், प्रकाशமும், विचित्रமாய் நடக்கிறதத்தனைபோக்கி ...

(सा.वि.) न्यग्रोध शायी भगवानेक शृङ्ग तनुस्तथा। देवोवामन देहश्च सर्वव्यापी त्रिविक्रम:। नरोनारायणश्चैवहरि: कृष्णस्तथैवच। ज्वलत्परशु धृग्रामो रामश्चान्यश्चतुर्गति:। वेदविद्भगवान्कल्की पाताळशयित: प्रभु:। त्रिंशच्च नवचैवेति पद्मनाभादयोमता:'' इत्येषां नामानिज्ञेयानि. नन्ववताराणांषट्त्रिंशदादि रूपत्वेकथं दशावतारत्व प्रसिद्धिरित्यत्राह. मत्स्यकूर्मादीति. சொல்லப்பட்டன, उक्ता:. विभवेषुव्यूह तद्गुण विशेषाविष्कारनियमो नास्तीत्वभिप्रेत्याह. இव्विभवங்களிதி. வேண்டாதபோது, अनपेक्षित समये. மறைத்தும், अप्रकाश्य. வேண்டினபோது, अपेक्षित काले. प्रकाசிப்பித்தும், प्रकाश्य. நடத்தும், प्रवर्तते. रामावतारे प्रायेण ज्ञान बलयो: प्रच्छादनाज्जटायुष: परगति प्रदानात्. ''चापमानयसौमित्रे. जगत्सशैलं परिवर्तया म्यह'' ...

(सा.सं.) यद्वा, प्रयोजन वशத்தாலே इत्यस्यमत्स्यादि शरीरपरिग्रहे प्यजहत्स्व स्वभाव इति ...

मूलं- இவற்றில் अवान्तर भेदங்கள் ''कृष्णरूपाण्य संख्यानी''त्यादि களிற்படியே अनन्तங்கள். இப்படி विभवान्तरங்களும் கண்டுகொள்வது. சிலजीवர்களை विग्रह विशेषத்தாலும், शक्ति विशेषத்தாலும், अधिष्ठित्து अतिशयित कार्यங்களை நடத்துகிறதும் विभव भेदம்.

(सा.दी.) परिवर्तयाम्यह'' மென்றானிறே. अवान्तर भेदங்கள், लक्ष्मीनृसिह्मன், योगानन्द नृसिह्मன, चतुर्भुजाष्ट भुजादि नृसिह्म नित्यादि रूपेणவும், मदन गोपालन्, चतुर्भुज गोपालनित्यादि रूपத்தாலும் अनन्तங்கள். இனி आवेशावतार भेदங்களைக்காட்டுகிறார். சிலजीवர்களை इत्यादि. व्यासजामदग्यादिகளை ...

(सा.स्वा.) कर्मवैचित्रियாலே நடக்கிறதன்றென்று கருத்து. व्यूहங்களில்போலே இவ்வி भवங்களிலும்अवान्तर भेदமுண்டோ? உண்டாகில் அவைஎத்தனை என்ன வருளிச்செய்கிறார். இவத்திலித்யாதி. अत्रादिशब्देन नृसिह्मादि रूप बाहुल्य प्रतिपादक प्रमाण सङ्ग्रहः. केशवादिகள் व्यूहान्तरங்களென்று கீழ்ச்சொன்னாப்போலே இங்கும் विभवान्तरங்களென்று சிலவுண்டோ? உண்டாகில்அவைகளெத்தனை யென்னவருளிச்செய்கிறார். இப்படியே इत्यादि. இப்படியே யென்னது अनन्तங்களாகவே யென்னபடி. கண்டுகொள்வது, केशवादि களைப்போலே सुप्रसिद्धங்களன்றாகிலும் श्री सात्वतादिகளில் शक्तीशादि संज्ञिकங்களான विभवங்களுக்கு द्विभुजत्व चतुर्भुजत्वाद्याकार भेदं சொல்லுமிடங்களிலே காணலா மென்றுகருத்து. भगवत्प्रादु र्भावங்களாக शास्त्रங்களிலே சொல்லப்பட்ட हिरण्य गर्भ रुद्रबुद्धादि रूपங்கள்எந்த अवतारங்கள்? जीवाधिष्ठान मिश्रங்களா யிருக்கிற இவத்தை व्यूह विभवादि களில்अन्तर्ग तங்களென்ன வொண்ணாதிறே? யென்னவருளிச்செய்கிறார். சில जीवர்களை इत्यादि. हिरण्य गर्भादि रूपங்கள் मुख्य प्रादुर्भावங்களன்றாகிலும் गौण प्रादुर्भावங்களென்று श्री पौष्करத்திலே அறுதி யிட்டதென்று परमत भங்கத்திலே இவரருளிச்செய்த படியே யிவையும் विभवभेदமாகையால்उक्त शङ्कावकाशமில்லை யென்றுகருத்து. विग्रह विशेषத்தால்अधिष्ठिக்கை யாவது तत्तज्जीव शरीरानु प्रविष्टमुख्य विभव विग्रह विशेषयुक्तனாய்க்கொண்டு तत्तज्जीवர்களை नियमिக்கை. இங்ஙனன்றிக்கே शक्ति मात्रத்தாலே नियमिக்கை शक्ति विशेषाधिष्ठान மென்றுகண்டு கொள்வது. विग्रह विशेषத்தாலே अधिष्ठितर् हिरण्यगर्भ रुद्रादिகள். परमत भङ्गத்திலே ''हिरण्यगर्भ रुद्रबुद्धादि क्षेत्रज्ञர்கள் विद्याधि देवादि प्रादुर्भावங்களாலே अधिष्ठितரெ''ன்றுதாமேயறுதி யிட்டாரிறே. இவை विभवங்களிலே अन्तर्ग तங்களானாலும் श्रीरङ्गादि स्थानங்களில் நிற்கும் रूपங்களெதிலே अन्तर्गतங்கள்? இது अर्चैயென்று தனித்துஓர்अवतार प्रकार ...

(सा.प्र.) சில जीवர்களை इति, ''सृष्टिंततः करिष्यामित्वामाविश्य प्रजापते। विष्णुरात्मा भगवतोभवस्यामि ततेजस'' इत्याद्युक्त प्रकारेण ब्रह्मशिवादीनधिष्ठायेत्यर्थः - सर्वान्तर्यामि भगवदनुप्रवेशेनैव लब्धस्वरूपस्थिति प्रवृत्तिकेचतुर्मुखे पुनरनु प्रवेशोनामशक्ति विशेषा विष्करण मितिज्ञेयं - अर्चा ...

(सा.वि.) मित्याद्युक्तेश्च कृष्णावतारे जरासन्ध युद्धादिषु पलायनाद्यैश्चेदंद्रष्टव्यं. இப்படி विभवान्तरங்களுமிதி, नृसिह्माद्यवतारेषु योगानन्द नृसिह्मश्चतुर्भुजनृसिह्म इत्याद्याद्रष्टव्या इतिभावः. சிலजीवரிதி. நடத்து கிறதும், प्रवर्तयति. एते शक्त्यावेशावतारा ब्रह्म रुद्र व्यास जामदग्न्यादयः ...

(सा.सं.) सतामवतार रहस्यज्ञानसिद्धय इत्यर्थः - சிலजीवர்களை इति. आदित्यादि जीवेविग्रह विशेषः. व्यासादौ ...

मूलं- परव्यूहादि रूपங்கள் தானே आश्रितர்க்காக அவர்கள் अपेक्षितத்த படியிலே. ''बिम्बाकृत्यात्म नाबिम्बे समागत्यावतिष्ठते'' என்கிறபடியே நிற்கிறநிலை अर्चावताரம். सर्वருடையவும் हृदयங்களிலே सूक्ष्म மாயிருப்பதொரு रूप विशेषத்தைக்கொண்டு நிற்கிற நிலை अन्तर्या म्यवताரம்.

(सा.दी.) யென்கை परव्यूहादि யென்றஆदि शब्दं विभव ग्राहकं. बिम्बेसमागत्य, இவர்களுடைய प्रार्थनैயாலே आर्चा बिम्बத்தில் எழுந்தருளி. बिम्बाकृत्यात्मना. बिम्बं, अर्चै. तस्येवाकृतिर्यस्य तदात्मना. अवतिष्ठते, सान्निध्यं करोतिயென்கை. सर्वருடையவு மித்யादि. अन्तर्यामित्वं, द्विविधं. ...

(सा.स्वा.) மென்றிலப்போது परव्यूह विभवादि रूपेणत्रिप्रकारமே भगवद्रूपமென்கிற शास्त्रं विरोधिயாதோ? இது परव्यूहादि களுடைய परिणाम विशेषமென்று विवक्षित மாகையாலே विरोधि யாதென்றிலப்போதிதுவும் परव्यूहाद्यन्तर्गत மாயொழிகையாலே भगवद्रूपं पञ्चप्रकार மென்கிற शास्त्रान्तरं विरोधिயாதோ? किञ्च, இப்படி परिणमिக்கைஎதற்காக? அதிலும்ஏकरूप மன்றிக்கே विचित्रமாயிருக்கைக்கு नियामकம்தான்ஏதென்ன வருளிச்செய்கிறார். परव्यूहेत्यादि. आदिशब्देन विभवसङ्ग्रहः. बिम्बः, आराधकैर्यथारुचि सुवर्ण रजतादि निर्मिता प्रतिमा. तस्याकृतिरिवाकृतिर्यस्य सबिम्बाकृतिः. सचासा वात्मा चेतिकर्मधारयः. आत्रात्म शब्दोविग्रहपरः. बिम्बसदृश विग्रहेणेत्यर्थः. बिम्बे, प्रतिमायां. समागत्य, समित्ये कीकारे. नीरक्षीरवद विभागेन संश्लेषं प्राप्येत्यर्थः. இது परव्यूहादि परिणामமானாலும் அவத்தைப்போலன்றிக்கே देशकालादि विप्रकर्षஅற मांस चक्षुஸ்ஸுக்களுக்கும் अनुभविக்கும்படி தோத்திநிற்கிற நிலையாகிற ஏற்றத்தை யிட்டுஇத்தை தனித்ததோர்अवतार प्रकार மாகசில शास्त्रं சொல்லுகிறத்துக்கு विरोधமில்லை யென்றுஇவ்वाक्य तात्पर्यं. ஆனாலும் अन्तर्यामि रूपं परव्यूहादिகளில் अन्त र्गतமென்று கொள்ளாவிட்டால் भगवद्रूपं त्रिप्रकार மென்கிறத்தோடு विरोधिயாதோ? இது पररूपத்தின் परिणाम विशेषமாகையாலே विरोधि யாதென்னில்அப்போது पररूपान्तर्गत மாயொழிகையாலே शास्त्रेषु भगवद्रूपाणां पञ्च प्रकारत्वोक्ति विरोधिயாதோ? வென்னவருளிச்செய்கிறார். सर्वருடையவு மித்யादि. இங்கு सर्वத்தினுடைய வென்னாதே सर्वருடைய வென்கிற வித்தால் उपासन योग्यतैயில்லாத तिर्यक्குகளின் हृदयத்திலிந்த रूपமில்லையென்ற தாகிறது. सूक्ष्मेति. पररूपस्याति बृहत्वात्तदादाय हृद्देशे सन्निधाना ...

(सा.प्र.) वतार स्वरूप माह - परव्यूहादि रूपங்கள் தானே इति ''परावस्थापरेशस्य व्यूहाश्च विभवादयः। शक्त्यावेशावतारास्तु विष्णोस्तात्कालिकास्स्मृता'' इतिपाद्मे व्यूह विभवयोः परविग्रहतुल्यावस्थत्वोक्तेः - पञ्चरात्रेच ''देवो वैकुण्ठनाथस्तु अनन्तासन संस्थितः। सेव्यश्श्रीभूमिनीळाभिः प्रादुर्भावैस्तथाखिलैः। बिम्बाकृत्यात्मनाबिम्बे समागत्यावतिष्ठत'' इत्यादिभिः परविग्रहवद्व्यूह विभव विग्रहाणामप्यर्चा विग्रहप्रवेशोक्तेः परविग्रह समीपवर्तित्वोक्तेश्च तेषां नित्यत्वमेवेतिभावः - अन्तर्यामि स्वरूपमाह - सर्वरुடையவுमिति - ननुवेदान्तेषु. ''तस्याश्शिखायामध्ये परमात्माव्यवस्थित'' ...

(सा.वि.) अर्चावतार रूपमाह. परव्यूहादीति. आदिशब्दोविभव सङ्ग्रहकः. अन्तर्याम्यवतारमाह. सर्वருடையவுமிதி. रूपविशेषத்தை, विग्रह विशेषं. கொண்டு, गृहीत्वा. ननु, ...

मूलं- இது सर्वान्तर्यामिயான दिव्यात्म स्वरूपத்தையअनु सन्धिக்க இழிவார்க்குத்துறையாக "अष्टाङ्ग योग सिद्धानां हृद्यागनिरतात्मनां। योगिनामधिकारस्स्यादेकस्मिन् हृदयेशये" इत्यादि களிலேசொல்லுகை

(सा.दी.) स्वरूपान्तर्यामित्पहार्दान्तर्यामित्वமும். அதிலிதுहार्दान्तर्यामि रूपं. स्वरूपமன்றோ वेदान्तங்களில் "य आत्मनितिष्ठ" न्नित्यादिகளில் सर्वान्तर्यामिயாகச்சொல்லப்பட்டது. हार्दान्तर्यामित्व மெங்ஙனே யென்னவருளிச்செய்கிறார். இது सर्वान्तर्यामिயான वित्यादिயால். துறை, द्वारं. अष्टाङ्गेति. अष्टाङ्ग योगेन सिद्धानां - हृद्यागः, हार्दध्यानं. योगिनां, हार्द योग वतां. एकस्मिन् हृदयेशये अन्तर्यामिणि. இங்கு हृदयशब्दத்தால்आत्म स्वरूपं विवक्षितं - ...

(सा.स्वा.) नुपपत्ते रितिभावः. तथाच, இது पररूपத்தின் परिणामமானாலும்அத்தைப்போலன்றிக்கே देशविप्रकर्षமற सर्वருடையவும் हृद्देशத்திலே सन्निहितமாய் நிற்கிறநிலையாகிற ஏற்றத்தை யிட்டுஇத்தைத்தனித்ததோர்अवतार प्रकारமாகச்சொல்லுகிறதாகையால்उक्त विरोधமில்லையென்று கருத்து. இந்தअवतारத்தை अन्तर्यामिயென்னக்கூடுமோ? दिव्यात्म स्वरूपத்தையன்றோ वेदान्तங்கள் अन्तर्यामिயென்று சொல்லுகிறது. அந்தअन्तर्यामि யோடு ஒரு सम्बन्ध विशेषத்தை யிட்டுஇதுக்கும் अन्तर्यामि संज्ञै யுண்டாகையா லிதுவும் अन्तर्यामि யென்று शास्त्रங்களிலே சொல்லப்பட்ட தென்றில், அந்த सम्बन्ध विशेषंஎது? அதில் प्रमाणந்தான் ஏதென்னவருளிச் செய்கிறார். இது सर्वान्तर्यामित्यादि. अगाधமான तटाकादि களில்இழிவார்க்குத்துறையொழிய வேறுவழிகிடையாதாப்போலே இங்கு வேறுவழிகிடையா தென்கைக்காக வித்தைத்துறை யென்கிறது. अष्टाङ्गेति. अष्टाङ्गयोगेन सिद्धानां आत्मावलोकनं प्राप्तानां - हृद्यागः, मानसपूजा - योगिनां, ब्रह्मोपासकानां हृदयेशये, हृदयकुहर वर्तिनि अन्तर्यामि विग्रहे - एकस्मिन्, एकमूर्तितयावस्थिते. श्रीसात्वते एतच्छ्लोकाव्यवहित ग्रन्थे "व्यामिश्रयागमुक्तानां विप्राणांवेदवादिनां। समंत्रेतु चतुर्व्यूहेत्वधिकारोन चान्यथे" त्यादि ना चातुर्व्यूहाद्युपासनाधिकारिणां वक्ष्यमाणत्वात्तदपेक्षया ...

(सा.प्र.) इति सर्वान्तिर्यामितयावगतं भगवद्दिव्यात्म स्वरूपमेव "अथयदिदमस्मिन् ब्रह्मपुरेदहरं पुण्डरीकं वेश्मदहरोस्मिन्नन्तर आकाश" इत्यादिभिरुपास्य तयाबोध्यते. एवञ्च विग्रहान्तर्यामित्वोप देशोव्यर्थ इत्याशङ्क्यआह - இது सर्वान्तिर्यामिயானேइति. துறையாய், शुभाश्रयीभूय. अन्तर्यामि विग्रहस्य शुभाश्रयत्वे प्रमाणमाह. अष्टाङ्गयोग सिद्धानामिति. हृदयेशय इतिविग्रहस्य हृदय गुहान्तर्वर्तित्वं विवक्षितं. ननु, सर्वदा स्वतस्सर्वज्ञस्य हेयप्रत्यनीकस्या कर्म वश्यस्याकाल ...

(सा.वि.) वेदान्तेषु सर्वान्तिर्यामि तयावगतं दिव्यात्म स्वरूपमेव "यदिदमस्मिन् ब्रह्मपुरेदहरं पुण्डरीकं वेश्म. दहरोस्मिन्नन्तर आकाश" इत्यादिभि रुपास्यतया बोध्यते. किंविग्रहान्तर्यामि त्वोपदेशेनेत्यत्राह. இது सर्वान्तिर्यामि யானேइति. अनुसन्धिக்க, अनुसन्धातुम्. இழிவார்க்கு, प्रविशतां. துறையாக, द्वारत्वेन. चित्तालम्ब नार्थत्वान्नवैयर्थ्य मिति भावः. ननु सर्वदा ...

(सा.सं.) शक्ति विशेषः. दिव्यात्म स्वरूपस्यैव सर्वान्तर्यामित्वेपिहार्द रूपस्य अन्तर्याम्यवतार त्वोक्तेर्नियामकमाह. இது सर्वान्तिर्यामिயானவிति. अवतार रहस्यத்தையுमिति - परत्वेसत्यप्याश्रयणा ...

मूलं- யாலே அன்தர்யாமி ரூபமென்று சொல்லப்பட்டது. இப்படி அவதரிக்கிற ரூபங்களில் வகைகளெல்லாம் शुद्ध सत्वद्रव्यमयங்களாய் कर्मतत्फलங்களோடு துவக்கற வருகையாலே शुद्ध सृष्टिயென்று பெயர் பெற்றிருக்கும் ...

(सा.दी.) कर्म तत्फलங்களோடு துவக்கற, कर्महेतुक மன்றியே - अत एवतत्फलங்களான सुखदुःखानुभव

(सा.स्वा.) एकमूर्त्युपासनाधिकारिणो भिन्ना इति ज्ञापनार्थ मत्रैकस्मिन्नित्युक्तं. आदिशब्देन ''मन्त्र स्समाधि विषयेनाना भूमिजयेषुच। निराकारोनिरङ्गश्च स्मर्तव्यो ब्रह्मलक्षणः। तत्प्राप्त्युपाये प्रथमे यागहोमादिकेतुवै। साकारं संस्मरेत्साङ्ग'' मित्यादि களான तत्प्रकरणस्थ वचनங்கள் विवक्षितங்கள். இங்கு ''निराकारो निरङ्गश्चस्मर्तव्यो ब्रह्म लक्षणः'' என்று दिव्यात्म स्वरूप विषय समाधिயைச்சொல்லி ''तत्प्राप्त्युपाये साकारं संस्मरे'' தென்கையாலே இந்த प्रकरणத்திலே இதுதுறையாகச்சொல்லப்படுகிற தென்று கருத்து. இந்த व्यूह विभवादि रूपங்கள் दिव्यात्म स्वरूपाद भिन्न द्रव्यங்களோ? भिन्न द्रव्यங்களோ? आद्ये दिव्यात्म स्वरूपस्य परिणामापत्या निर्विकारत्व श्रुति विरोधिக்கும். द्वितिये श्रीलक्ष्मी तन्त्रादि शास्त्रங்களிலே இத்தை शुद्ध सृष्टिயென்று சொன்னதுகூடா தொழியும். शुद्धமான दिव्यात्म स्वरूपம்தானே नानाविध विग्रहरूप மாகிறதென்னும் पक्षத்திலன்றோ இத்தை शुद्ध सृष्टिயென்னலாவது. இந்த व्यूहादिகள் शुद्ध सृष्टिகளா யிருக்க இவத்தை जगत्सृष्ट्यादि व्यापार युक्तங்களாகவும், சில प्रयोजन वத்துக்களாகவும், சொன்னது தான் கூடுமோ? व्यापारादिகள் கலசாதிருக்கிலன்றோ இத்தை शुद्धसृष्टि யென்னலாவது. देव मनुष्यादि रूपै யானअशुद्ध सृष्टिயிற போலே இதிலும் दिव्यात्म स्वरूपातिरिक्तமான उपादान द्रव्यமும், चतुर्मुखादि शरीरத்தில்போலே सृष्ट्यादि व्यापारादि களுமுண்டாகில்இது शुद्ध सृष्टि என்று சொல்லப்படுகிறது எத்தாலே யென்னவருளிச்செய்கிறார். இப்படி अवतरिக்கிற वित्यादि. வகைகளெல்லாம், व्यूहम् विभवमित्यादिயாகச்சொன்ன राशिகள் நாலு மென்றபடி. शुद्धसत्वेति. दिव्यात्म स्वरूपभिन्न द्रव्यत्वेपि त्रिगुणद्रव्य मयत्वा भावाद्व्यापारादि सत्वेपि ...

(सा.प्र.) वश्यस्य नित्यपरिपूर्णस्येश्वरस्यरामाकृष्णादि रूपेणोत्पत्तिर्नतात्विकी. शरीर सम्बन्धस्यज्ञानसङ्कोचापादकत्वक्चर्म मांसादिमयत्वेन हेयत्व, कर्ममूलत्व, कालवश्यत्व, सुखदुःखानुभव साधनत्व, प्रसङ्गाद्विभवाद्य सिध्यातन्निरूपणमयुक्त मित्यत्र सप्रमाण मुत्तरमाह - இப்படி अवतரிக்கி றேत्यादिना. ''बहूनिमेव्यतीतानि जन्मानितवचार्जुने''ति जीवेनसमं शरीरात्ययस्योक्तत्वात्सत्यत्वं सिद्धं. ''तान्यहं वेदसर्वाणि नत्वं वेत्थपरन्तपे'' तिज्ञान सङ्कोचकरत्वाभाव उक्तः ''प्रकृतिं स्वामधिष्ठाये''ति विग्रहस्यशुद्ध सत्वमयत्वेनचर्म मांसादिहेय प्रत्यनीकत्वमुक्तं ''सम्भवाम्यात्म ...

(सा.वि.) स्वत स्सर्वज्ञस्य हेयप्रत्यनीकस्याकर्मवश्यस्याकाल वश्यस्य रामकृष्णादि रूपेणोत्पत्तिर्न तात्विकी. तात्विक शरीर सम्बन्धस्य दुःखहेतोरसम्भवा दतोमिथ्याभूतेति वाच्य मित्यत अह। இப்படி अवतरिக்கிறேதி. बहूनीति. ''बहूनिमे व्यतीतानि जन्मानि तवचार्जुन। तान्यहं वेदसर्वाणि नत्वंवेत्थ परन्तप। अजोपिसन्न व्ययात्मा भूताना मीश्वरोपिसन्।। प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्म मायया'' अजत्वाव्ययत्व सर्वेश्वरत्वादि सर्वं पार मैश्वरंप्रकार ...

मूलं - இவ்அவதாரங்களெல்லாம் सत्यங்களென்றும், இவற்றில் ईश्वरனுக்கு ज्ञानादिसङ्कोचமில்லையென்றும், ...

(सा.दी.) த்தோடு स्पर्शமறவென்னபடி. இவ்வவதாரங்களெல்லாமित्यादि. ''बहूनिमेव्यतीतानि'' யென்ற श्लोकத்தில் तवच என்று जन्मங்களிருவருக்கும் तुल्यமென்கையால்ऐन्द्र जालिकம்போலே मिथ्याவன்று; सत्यங்களென்றும் ''अजोपिसन्'' என்கிற श्लोकத்தில் अजोव्यय ईश्वरोपिயென்கையால் अवतार दशैயில்अजह त्स्वस्वभावत्वத்தையும் ...

(सा.स्वा.) तस्य कर्मादि सम्बन्धाभावाच्च शुद्ध सृष्टित्वमुपपद्यत इति भावः. இப்படியிவத்தை யொரு सृष्टि विशेषமாகச்சொன்னது கூடுமோ? निखिल हेय प्रत्यनीक னானईश्वरன் परिग्रहिக்கிற இந்தरूपங்களெல்லாம் ऐन्द्र जालिक वन्मिथ्या भूतங்களன்றோ? இங்ஙனன்றிக்கே सत्यங்களாகில் शरीर सम्बन्ध प्रयुक्तமாக क्षेत्रज्ञवदज्ञत्वाल्प शक्तित्वादि दोषं प्रसङ्गिக்கையாலே ईश्वर स्वभाव प्रच्युति வாராதோ? இவத்தில் சில रूपங்கள் भूत सङ्घातात्मकங்களாகக்காணப்படாநிற்க இவையெல்லாம் शुद्ध सत्वमयங்களென்றது தான்கூடுமோ? இவைकर्म तत्फलங்களோடு துவக்கற்றவை யென்றது தான் उपपन्नமோ? शरीरமெல்லாம் कर्ममूलत्व, कर्मपरिपाक कालनियतोत्पत्तिकत्व, तत्फल भोगार्थत्व व्याप्तமன்றோ? किञ्च, चित्तालम्बनத்துக்கு पररूप மமைந்திருக்க व्यूहाद्यवतारங்களை இங்கு निरूपिத்தது निष्प्रयोजनமன்றோ? இவைகளுமத்தைப்போலே शुभाश्रयங்களாகையாலே निरूपिத்ததென்றில்இது शुभाश्रयங்களானாலு மிவத்தைப்பற்றுவார்க்கும் नित्य सिद्धेतदाकारे इत्यादिகளிற்படியே पररूप मवश्यं ज्ञातव्य மாகையால் அதுவேயமையாதோ? இவ்வவதாரங்களையெல்லா மிங்கு निरूपिத்ததுக்கு अधिक प्रयोजन முண்டோ? வென்னஇशङ्कैகளுக்கு प्रमाण बलத்தை யிட்டுउत्तर மருளிச்செய்கிறார். இவ்வவதாரங்களெல்லாமित्यादि. जन्मनस्सत्यत्वाभावे ''बहूनिमेव्यतीतानि'' யென்கிற श्लोकத்தில் बहुत्वातीतत्व वचनं स्वरसமல்லாமையாலும் तवच என்றது दृष्टान्त रूपेण भगवज्जन्म सत्यत्व समर्थन परமல்லாதபோது निष्प्रयोजन மாக प्रसङ्गिக்கையாலும் இज्जन्मங்களை ऐन्द्रजालिक ம்போலே मिथ्याவன்றிக்கே सत्यங்களென்றும் ''अजोपिसन्'' என்கிற अनन्तर श्लोकத்தில் ''अजोपिसन्''. अव्ययात्मापिसन्. ईश्वरोपिसन्'' என்கையால்अस्मदादिवद्ज्ञानादि सङ्कोचமன்றிக்கே अवतारदशैயில் अजहत्स्व स्वभावत्वத்தையும் ''प्रकृतिं ...

(सा.प्र.) मायये'' तिमायावयुनंज्ञानमित्येत दानुगुण्येन भगवदिच्छा मूलत्वोक्तेः कर्मवश्यत्वा भाव उक्तः. ''यदायदाहि धर्मस्यग्लानिर्भवति भारत। अभ्युत्थानमधर्मस्यतदात्मानं सृजाम्यह'' मितिकाल नियमाभाव उक्तः. ''परित्राणाय साधूनां विनाशायच दुष्कृतां। धर्मसंस्थापनार्थाय''त्यनेन साधुपरित्राण फलत्वोक्तेस्सुख दुःखानुभवार्थत्वाभाव उक्तः. ''जन्म कर्मचमे दिव्यमेवं योवेत्तितत्वतः। त्यक्त्वा देहं पुनर्जन्मनैति मामेति सोर्जुने'' त्यनेन मोक्षहेतु ...

(सा.वि.) मजहदेवस्वां प्रकृतिं स्वस्वरूपं ''आदित्यवर्णं तमसः परस्तात्. य एषोन्त रादित्येहिरण्मयः पुरुष'' इत्यादिषु ''प्रसिद्धरूप मधिष्ठाय स्वीकृत्य आत्ममायया स्वसङ्कल्पेन सम्भवामी''ति गीताभाष्ये व्याख्यातं. ''यदायदाहि धर्मस्य ग्लानिर्भवतिभारत। अभ्युत्थानमधर्मस्यत दात्मानं सृजाम्यहं। परित्राणाय साधूनां विनाशायच दुष्कृतां। धर्मसंस्थापनार्थाय ...

मूलं- இவ்விக்ரஹங்கள் ஶுத்தஸத்வ மயங்களென்றும், இவற்றிற்கு ஈஶ்வரேச்சா மாத்ரமே காரணமென்றும், தர்ம ரக்ஷணம் பண்ணவேண்டும் காலமே காலமென்றும், ஸாதுபரித்ராணாதிகளே ப்ரயோஜனங்களென்றும். இவ்வர்த்தம்தெளிந்து அநுஸந்திப்பார்க்கு ஏக ஜன்மத்திலே ஸ்வாதிகாராநுகுண ஸமீஹிதோபாய பூர்த்தியாலே ஜன்மாந்தரம் அநுபவியாதே ...

(सा.दी.) प्रकृतिं स्वाமென்ற அம்ஶத்தில் விக்ரஹங்களினுடைய शुद्ध सत्वमयत्वத்தையும் ''सम्भवाम्यात्म मायया'' என்று स्वेच्छामात्र निदानत्वத்தையும் ''यदायदाहि'' என்ற ஶ்லோகத்தில் धर्मग्लानौ समुदयத்தையும் ''परित्राणायेति'' ஶ்லோகத்தில் साधु संरक्षणार्थत्वத்தையும் ''जन्म कर्मचमेदिव्य'' மென்கிற ...

(सा.स्वा.) स्वामवष्टभ्य'' என்கிற விடத்தில் स्वाமென்கையாலே अवतार विग्रहस्य गुणत्रयमयभूत सङ्घातात्मकत्व மன்றிக்கே शुद्धसत्व मयत्वமும் ''आत्म मायया'' என்கிற அம்ஶத்தில் मायावयुनं ज्ञानமென்கிறபடியே मायाशब्द मिच्छारूप ज्ञान परமாகையாலே जन्मनः पुण्यपापादि मूलत्व மன்றிக்கே स्वेच्छामात्र कारणकत्वமும் ''यदायदाहि'' என்கிற तृतीय ஶ்லோகத்தில் जन्मத்துக்கு अस्मदादिवत्कर्म विपाक कालமன்றிக்கே धर्म रक्षणं பண்ணவேண்டின காலமே कालமென்றும், ''परित्राणाय'' என்கிறநாலாம் ஶ்லோகத்தில் जन्मத்துக்கு सुखदुःखानुभवं प्रयोजन மன்றிக்கே साधु परित्राणादिகளே प्रयोजन மென்றும், ''जन्मकर्मच मेदिव्य'' மென்கிற ஶ்லோகத்தில் இவ்अर्थं अनुसन्धिப்பார்க்கு फलமும் சொல்லித்தென்கை. தெளிந்தென்றது, शास्त्रத்தைக்கொண்டு सदाचार्योप देशादि मुखத்தாலே संशय विपर्यय மற निश्चयिத்தென்றபடி. இது இஶ்லோகத்தில் तत्वतः என்கிற पदத்தின் तात्पर्यं. अनुसन्धिப்பார்க்கென்றது ध्यानिப்பார்க்கென்றபடி. इश्लोकत्तिल् ''योवेत्ति'' என்கிறது शब्दजन्यज्ञानमात्र परமன்று. उत्तर ஶ்லோகத்திலே ''बहवो ज्ञानतपसा'' என்றித்தை तपஸ்ஸாகச்சொல்லுகையாலே ध्यान पर्यन्तமென்று கருத்து. இத்தால் जन्मान्तर व्यवधान रहित मोक्षोप युक्तமான இந்தअवतार रहस्यानु सन्धानமே இங்கு अतारங்களையெல்லாம் निरूपिத்ததுக்குअधिक प्रयोजन மென்றभिप्रायं. இந்தअवतार रहस्यानु सन्धानத்துக்கு இஶ்லோகத்தில் फलं சொல்லுகிறது கூடுமோ? प्रारब्ध कर्मावसान एव मोक्ष மென்று शारीरकத்தில் निर्णीतமாயிருக்க जन्मान्तर மன்றிக்கே एकजन्मத்திலே मुक्त रावाரென்கையும், भक्ति प्रपत्ति भ्यामेव मोक्ष सिद्धि என்று नियमित மாயிருக்க இந்த ज्ञानमात्रத்தாலே मोक्ष முண்டென்கையும், विरुद्ध மன்றோ வென்கிற शङ्का वारणार्थं स्वाधिकारेत्याद्युक्ति. अत्रभक्ति प्रपत्योर्द्वयोरपि सङ्ग्रहणार्थं स्वाधि कारानु गुणेत्यादि सामान्य निर्देशः. இங்குउपाय पूर्तिயாவது, जन्मान्तरारम्भक पापांश प्रशमन समर्थ पुष्कलोपाय निष्पत्तिः. இத்தால்उपाय पौष्कल्य हेतुत्वेन परम्परया मोक्षोप योगि யென்றதாகை யால் विरोधமில்லையென்னதாய்த்து. जन्मान्तरेति. प्रारब्धकर्मावसान एवमोक्ष மென்றது औत्सर्गिकமா ...

(सा.प्र.) त्वोक्तेस्तत्व ज्ञानस्यैव मोक्ष साधनत्वादुक्तार्थस्य सर्वस्यतात्विकत्वमेवोक्त मितिभावः. ''अवतारस्य सत्यत्वमजहत्स्वस्वभावता। शुद्ध सत्वमयत्वंच स्वेच्छामात्र निदानता। धर्मग्लानौसमुदय ...

(सा.वि.) सम्भवामि युगे युगे। जन्म कर्मचमे दिव्यमेवं योवेत्ति तत्वतः। त्यक्त्वादेहं पुनर्जन्मनैति मामेति सोर्जुन'' इति गीताचार्योक्ताः पञ्चश्लोकाः. अत्र ''अवतारस्य सत्यत्व मजह त्स्व ...

मूलं- मुक्तராகலாமென்று, ''बहूनिमेव्यतीतानि'' என்றுதொடங்கி ஐந்து श्लोकத்தாலே गीताचार्यன் அருளிச்செய்தான். இது स्वतन्त्र प्रपत्ति निष्ठனுக்கு शरण्यगुण विशेष ज्ञानमुखத்தாலே उपायानुष्ठान क्षणத்தில் महा विश्वासादिகளை स्थिरीकரித்து उपकारकமாம்.

(सा.दी.) श्लोकத்தில் இவ்अर्थं अनुसन्धिப்பார்க்கு फलமும் சொல்லித்தென்கை. अवतार रहस्य ज्ञानमुत्तरोत्तरं आधेयातिशयமாய் चिरकाल साध्यமான भक्तिக்கு पूरकமாகலாம். क्षणकाल साध्यமான प्रपत्तिக்குஎங்ஙன்उपकारकமென்ன வருளிச்செய்கிறார். இது स्वतन्त्रैत्यादिயால்.

(सा.स्वा.) கையாலே இவ்வवतार रहस्यचिन्तन विधानंஅதுக்குअपवादமாகையால்एक जन्मத்திலே मोक्ष முண்டென்கிறது विरुद्ध மன்றென்றுகருத்து: मुक्तராகலாமென்றது இந்த अवतार रहस्य चिन्तनंकर्मयोगादिवदुपासनादि களுக்குஅங்க மல்லாமையால்இதில்லா தொழிந்தாலும் मुक्तராவர். இதுண்டாய்த்தாகில் जन्मान्तरंஎடாதே मुक्तராகலாமென்றபடி. இந்தअवतार रहस्यचिन्तत उपासकனுக்குउपाय पूर्तिயைப்பண்ணி उपकारकமானாலும் स्वतन्त्र प्रपत्तिनिष्ठனுக்குउपकारकமாம்படி எங்ஙனே? प्रारब्ध नाशकत्व सामर्थ्यं प्रपत्तिக்கு स्वतस्सिद्धமாகையால் उपासनத்தைப்போலே अन्यसापेक्षமன்றே யென்னவருளிச்செய்கிறார். இதுவித्यादि. இது என்றது இவ்வनुसन्धान மென்றபடி - आदिशब्देन तीव्रमोक्षाभिलाषादि सङ्ग्रहः - स्थिरीकரித்து. उपायानुष्ठान क्षणத்தில் महाविश्वासादिகள் स्थिरங்களல்லா தபோது जन्मान्तरமும் सम्भावितமாகையாலிது महाविश्वासादि स्थिरीकरण मुखेनஇவனுக்கும் उपायपूर्तिकरமா மென்று கருத்து. ஆனாலும்प्रत्यक्ष सिद्धமான प्राकृत द्रव्यமே ...

(सा.प्र.) स्साधु संरक्षणार्थता। इति जन्मरहस्यं योवेत्तिनास्यपुनर्भव'' इत्यादिरत्रानु सन्धेयः एवमवतार रहस्यज्ञानस्योपासनोप कारकत्व मुक्त्वा प्रपन्नेप्युपयोगमाह - இது स्वतन्त्रप्रपत्ति निष्ठனுக்கிति. गुणविशेषाः, सौशील्य वात्सल्य सत्यकामत्व सत्यसङ्कल्पत्व कारुण्यादयः - ननु परव्यूह विभवान्तर्यामि विग्रहाणां शुद्धसत्वमयत्वाद्धेय प्रत्यनीकत्वेन मुमुक्षूपास्यत्वं युक्तं - अर्चावतार विग्रहस्य प्रत्यक्ष सिद्धत्वेन शुद्ध सत्वमयत्वानुपपत्तेः कथं मुमुक्षुपास्यत्वमित्यत्र ''पञ्चोपनिषदात्मानं दिव्यमङ्गळ विग्रहं। स्वामिन् लक्ष्मीशभगवन् सन्निरुन्धस्वविग्रह'' इत्याद्युक्त प्रकारेणाप्राकृत विग्रह विशिष्टवेषेण भगवदधिष्ठानात्तस्यैव हेय प्रत्यनीकत्व सम्भवात्. ''विशत्यपास्तदोष'' इत्यादि प्रमाणाच्च शुभाश्रयत्वं युज्यत इत्यभिप्रायेण तस्य

(सा.वि.) स्वभावता। शुद्ध सत्वमयत्वंच स्वेच्छामात्र निदानता। धर्मग्लानौ समुदयस्साधु संरक्षणार्थता। इति जन्मरहस्यंयो वेत्तिनास्य पुनर्भव'' इत्युक्तार्थाः विवक्षिताः. नन्ववतार रहस्य ज्ञानं चिरकालसाध्य भक्तियोगस्याहरहरभ्यासाधेयातिशयतया तद्वैशद्य सम्पादकत्वे नोप कारकमपि क्षणकर्तव्यप्रपत्तेः कथमुपकरोतीत्यत्राह. இது इति. नन्वर्चावतार विग्रहस्य प्राकृतत्वेन प्रत्यक्ष सिद्धत्वाच्छुभाश्रयत्वा भावेन मुमुक्षूपास्यत्वं नसम्भवती त्याशङ्कायां ''पञ्चोपनिषतात्मानंदिव्यमङ्गळ विग्रहं । स्वामिन् लक्ष्मीशभगवन् सन्निरुन्ध स्वविग्रह'' मित्युक्त प्रकारेणाप्राकृत विग्रह विशिष्ट वेषेण भगवदधिष्ठानात्तस्य शुभाश्रयत्वं युज्यत एवेत्यभिप्रायेण ...

मूलं- இப்படியே अर्चावतारமும், மி(இ)றுக்கற மோக்ஷத்தைத்தருமென்னு மிடத்தை ''सुरूपां प्रतिमांविष्णोः प्रसन्नवदनेक्षणां । कृत्वात्मनः प्रीतिकरीं सुवर्णरजतादिभिः॥ तामर्चयेत्तांप्रणमेत्तां यजेत्तां विचिन्तयेत्। विशत्यपास्त दोषस्तुतामेव ब्रह्मरूपिणीं'' என்று ஸ்ரீசௌனக பகவானருளிச்செய்தான் ...

(सा.दी.) இப்படியே इत्यादि. विभवं जन्म रहस्य ज्ञानத்தால்उपाय पूरकமாய் मोक्षந்தருமாப்போலே अर्चावतारமும் स्वार्चन प्रणामादि களாலும் उपाय पूरक மாய்अयत्नेन मोक्षप्रदமென்கை. ब्रह्मरूपिणीं, ब्रह्मात्मिकां. मूर्तिं. ब्रह्मத்தோடே अभेदोपचारं - ஆழ்வார்களுமிவ்विभवार्चावतार ...

(सा.स्वा.) अर्चाविग्रहமாகையாலே இது परव्यूहादिवन्मोक्ष प्रदமாக மாட்டாமையாலே இத்தை இங்கு சொன்னது निष्प्रयोजन மன்றோ? बिम्बाकृत्यात्म नेत्युक्तமானतदनु प्रविष्टरूपं शुद्ध सत्वमयமாகையாலே मोक्षप्रदமாக மாட்டுமென்றி ல்அப்போது चक्षुर्गोचरமன்றிக்கே मानसैक वेद्यமாயொழிகையாலே அந்த परव्यूहादिகளேயமையாதோ? அவத்திற்காட்டிலோர்अधिक प्रयोजन முண்டாகிலன்றோஇவ்अवतार முண்டாகவேண்டுவது? அந்தரூபं இந்தबिम्बத்தோடெ नीरक्षीर वदेकीभविத்து चक्षुर्गोचर மாகையாலும், तत्संश्लेष विशेषத்தாலே யிந்தबिम्बமும், तादृश प्रभावातिशय ம்பெற்றதாகையாலும், अर्चन प्रणामध्यानादि सौकर्यातिशयத்தை யிட்டுअनायासेन मोक्षप्रदமாயிருக்கை अर्चावतारத்துக்குअधिक प्रयोजन மென்னில்அதில் प्रमाणமுண்டோ? வென்னவருளிச்செய்கிறார். இப்படீत्यादि. இப்படியே யென்றது अवतार रहस्यानु सन्धानத்தின் படியே யென்றபடி. மிறுக்கற, आयासமற. अवतार रहस्यानुसन्धानं जन्मान्तरानु भवायासமற मोक्षोपयोगि யாகிறாப்போலே अर्चावतारமும் चक्षुर्गोचर மல்லாத परव्यूहादिகளைப்போலன்றிக்கே ''यथोपयोगं शक्यत्वात्कर्तुं पुष्पादि पूजनं। चक्षुषः प्रीतिजनना'' दित्यादिயாலே ஸ்ரீ पाञ्चरात्र रक्षैயில் அருளிச்செய்த படியே अर्चन प्रणामादि களில்आयासமறமோक्षத்தைத்தரு மென்றபடி. तामेव विशति, अर्चन प्रणामादि विषय भूतां तां आप्नोत्येव. नतुतांजहाति. तत्क्रतु न्यायादिति भावः. कथमस्या लौकिकार्चायाः प्राप्यत्व मित्यत्राह. ब्रह्मरूपिणीमिति. ब्रह्म शब्दोत्र मूर्तं ब्रह्मेत्याद्युक्त पर विग्रहपरः. तद्रूपिणीं, तत्स्वरूपां. तदभिन्ना मितियावत्. तदुक्तं तात्पर्य चन्द्रिकायां चतुर्थाध्याये ''अर्चावतार रूपेपि पररूपत्वानु सन्धानन्दर्शितं. यथास्मरन्ति तामेव ब्रह्म रूपिणीमिती''ति. अत्रनीरक्षीरवदेकीभावा भिप्रायेण ब्रह्मरूपिणी मित्य भेदोप चारः. तथाच पर रूपेण संश्लेष विशेषा दर्चाया अपिप्राप्यत्वं युज्यत इति भावः. व्यूह विभवयोरपि पररूप परिणामत्वेन ...

(सा.प्र.) मुमुक्षूपास्यत्वे प्रमाणमाह. இப்படியே आर्चावतारमुमित्यादिना. மிறுக்கற, अनायासेन. आर्जवेनेतिवा. आर्चा विग्रहस्य सन्निहितत्वात्सुलभत्वाच्चाक्षुषत्वाच्च सुखेन ध्यानप्रपदनयो ...

(सा.वि.) तस्यमुमुक्षूपास्यत्वे प्रमाणमाह. இப்படி अर्चावतारमिति. இறுக்கற, अनायासेन. தரும், दद्यात्. तांयजेत्, आत्महविषातत्रैव शरणवरणं कुर्यात्. तांविचिन्तयेत्, उपासनमपि तत्रैव कार्य मित्यर्थः. ब्रह्मरूपिणीमिति, ब्रह्मणासह अभेदोपचारेण निर्देशः. ...

मूलं- ஆழ்வார்களும் இவ்அவதார रहस्यத்தையும் अर्चावतार वैलक्षण्यத்தையும் प्रचुरமாக अनुसन्धिத்து இதற்குப்பேரணியாக परत्वத்தைக்கண்டு போந்தார்கள் - இப்படி யிருக்கிற ईश्वरன் தன்आ नन्दத்துக்குப்परीवाहமாகப்பண்ணும் व्यापारங்கள் सकल जगत्सृष्टिस्थिति संहारमोक्ष प्रदत्वादिகள் ।

(सा.दी.) वैलक्षण्यத்தையே பலகாலம் अनुसन्धिத்து இவைத்துக்கு மூலமானது கொண்டு பரத்வத்தை விரும்பினார்கள் என்கிறார். ஆழ்வார்களும் इत्यादिயால், பேரணியாக, மூலபலமாக अनुसन्धित्ताர்கள். परिवाह:, कडवाय्त्तल् ...

(सा.स्वा.) तदभिन्नत्वात्सर्व स्याप्यर्चाव तारस्य ब्रह्म रूपिणीमिति पररूपाभेदोक्तिर्युज्यत इति ध्येयं. இப்படி अवतार रहस्यமும், अर्चावतारமும், अनायासेन मोक्षந்தரவத்தா யிருக்கஅப்படியே श्रीशौनकादि महर्षिகளும்उपदेशादिகளை நடத்தாநிற்க जन्मान्तरादि विळम्बक्ष मரல்லாத ஆழ்வார்கள் पररूपத்தை अनुसन्धिப்பானேன் என்னஅருளிச்செய்கிறார். ஆழ்வார் களுமित्यादि. प्रचुरமாக வென்றது आश्रयण दशैயையும், भोग दशैயையும் கூட்டிச்சொன்னபடி. பேரணியாக, मूल बलமாக. परत्वத்தைக்கண்டிति. पररूप विशिष्टः परः तस्यभावः परत्वं. पररूप மென்றபடி. கண்டுபோந்தார்கள், கண்டமாत्रமத்தனை போக்கி அவைத்தைப்போலே प्रचुरமாக अनुसन्धिத்ததில்லை யென்றபடி. இத்தாலிவத்தைப்போலே யத்தை இவர்கள் விரும்பினதில்லை யென்றதாகிறது. இப்படி ईश्वरனுக்கு चेतना चेतनापेक्षया स्वरूपभेद मुपपादित மானாலும் स्थिति नित्यैயாகையாலே இது विशेषिத்துச்சொல்லவேண்டா விட்டாலு மிவனுக்கு असाधारणமான व्यापारமெது? "षाड्गुण्याद्वासुदेव" इत्यादि களாலே கீழ்ச்சொன்ன जगत्सृष्टयादिகள் தானென்னில் परिपूर्णत्वेन प्रयोजन निरपेक्षனா யிருக்கிற இவன் व्यापारம்பண்ணும்படி எங்ஙனேயென்ன வருளிச்செய்கிறார். இப்படி யிருக்கிற वित्यादि. இப்படி யிருக்கிற வென்றது सत्यமாய் ज्ञानமாயित्यादिना पूर्वोक्त गुण विग्रहादि सर्वप्रकार विशिष्टனாய் अवतार दशास्वपि परिपूर्णत्वादि स्वभावं குலையாதிருக்கிற வென்றபடி. இவ்अनुवादं प्रयोजन निरपेक्षत्वा द्व्यापारं கூடாதென்கிற शङ्काबीज द्योतनार्थं. ईश्वरனுக்கு स्वरूपभेदं சொல்லித்தாகையாலும், स्थितिயில் वक्तव्य மில்லாமையாலுமினி व्यापार भेदं சொல்லப்படுகிற தென்றிப்படி सङ्गति द्योतनार्थश्च. चतुर्मुखादि व्यापाराद्व्या वृत्यर्थं सकलेत्युक्तिः. आदिशब्देनान्तः प्रवेश नियम नादिकं विवक्षितं. जगत्सृष्टयादिகளை ...

(सा.प्र.) स्संभवादितिभावः - अवतार रहस्यज्ञानस्यार्चावतारानु सन्धानस्यच सर्वसुलभत्वादकिञ्चने तयोरत्यन्तोपयोग इत्यभिप्रायेणाह - ஆழ்வார் களுமித்யादिना. பேரணியாக, नासीरसु भटरक्षार्थं पृष्ठतोनु गच्छदधिकसेनात्वेन दार्ढ्य हेतुत्वेनेतिभावः. கண்டுபோந்தார்கள், अमन्यन्त. एवमीश्वरस्य स्थितिभेद उक्तः. अथप्रवृत्तिभेदं दर्शयति - இப்படி யிருக்கிற ईश्वरनिति. लक्ष्मी विशिष्टस्यैव भगवतो ...

(सा.वि.) பேரணியாக, अग्रेसरभट संरक्षणार्थं पृष्ठतोनुगच्छ दधिकबलं பேரணிइत्युच्यते. परत्वத்தை, परत्वं. கண்டுபோந்தார்கள், अमन्यन्त. अर्चावतारे सौलभ्यादिति भावः. एवमीश्वरस्य स्थितिभेद उक्तः. अथ प्रवृत्तिभेदं दर्शयति. இப்படி இருக்கிற इति. ननु लक्ष्म्याः किंजीवतत्वे प्रवेशः उतेश्वरत्वे नाद्यः. ...

(सा.सं.) नुकूल गुण प्रचुरत्वरूप रहस्यमित्यर्थः. वैलक्षण्य शब्दः परत्वाभि व्यञ्जकत्वदृष्टि चित्ताकर्षकत्वादिपरः. பேரணியாக, निर्वाहकमूलबलतया. इत्थमीश्वर तत्वस्य ईश्वरांशे ...

(सा.स्वा.) இவனுக்கு स्वेतरव्यावृत्त व्यापारங்களாகச்சொன்னதுகூடுமோ? கீழ்அधिकारத்திலே பிராட்டி सर्वावस्थै யிலும் सहधर्मचारिणि யென்று சொல்லியிருக்கையாலே स्वोक्ति विरोधं வாராதோ? இங்குईश्वरனுக்குச்சொன்னதெல்லாம் चेतनाचेतन मात्र व्यावृत्ति परமாகையாலேயும் பிராட்டி ईश्वर कोटिயாகையாலே இவ்விட மவளுக்கும் उपलक्षण மாகையாலும், स्वोक्ति विरोधமில்லை யென்னில் அப்போதுईश्वर द्वित्वं வருகையாலே இவனுக்கு निस्समाभ्यधिकत्व ங்கூடாதொழியாதோ? ''विष्णोश्श्रीरनपायिनी. அகல கில்லேனிறையும்'' इत्यादि वचनங்களாலே இவன் प्रधान னாகவும் அவள் अप्रधानैயாகவு மிப்படி யிருவரும் கூடவே सर्वावस्थान्वயி களாகையாலது கூடுமென்னில் இவ்वचनங்கள்आप्त प्रबन्धस्थங்களோ? இவத்தில் பிராட்டிக்கு सर्वावस्थान्वयित्वம் தான் व्यक्तமாகிறதோ? வென்கிற இश्शङ्कै களை परिहरिயா நின்றுகொண்டு கீழ் चेतना चेतन तत्वங்களிலோ ரொன்றுக்கு स्वरूपस्थिति प्रवृत्ति भेद निरूपणानन्तरं तदवान्तर तत्वங்களுக்கு स्वरूपस्थिति प्रवृत्ति भेदं சொன்னாப்போலே இங்கும்ईश्वर तत्वத்துக்கு स्वरूप स्थिति प्रवृत्ति भेद निरूपणानन्तरं तदवान्तर तत्वத்துக்கு स्वरूपस्थिति प्रवृத்திகளிலுள்ள भेदத்தை प्रमाण...

---

(सा.प्र.) जगत्कारणत्व, मोक्षप्रदत्व, सर्वेश्वरत्वादय इत्यभिप्रायेण लक्ष्म्यास्सर्वावस्थासान्निध्यंसप्रमाण ...

---

(सा.वि.) ''ईश्वरीगं सर्वभूतानां. अस्येशानाजगतो विष्णु पत्नी''त्यादि विरोधात्. ''यथा सर्वगतोविष्णुस्तथैवेयं द्विजोत्तम। त्वयाच विष्णुना चाम्ब जगद्व्याप्तं चराचर'' मित्यादिभि र्विभुत्व प्रतिपादनेन ''एषोणुरात्मे''ति अणुपरिमाणत्वरूपजीवधर्मा भावाच्च. नच धर्म भूत ज्ञानद्वारा सर्वगतत्व प्रतिपादकं तदिति वाच्यं. ''यथासर्वगतोविष्णु''रिति स्वरूपेण सर्वव्यापि विष्णु दृष्टान्त विरोधात्. ''त्वयाच विष्णुना पाम्बे''ति समुच्चय विरोधात्. जीवादतिशयोक्त्य भाव प्रसङ्गाच्च. इतरापेक्षया अतिशयो ह्यस्या अत्रप्रति पादनीय:. नच ''देव तिर्यङ्मनुष्येषु पुन्नामा भगवान् हरि:। स्त्रीनाम्नी लक्ष्मीर्मैत्रेय नानयो र्विद्यतेपर'' मित्यभिमानि देवतात्वेन तद्व्याप्त्या तयोरितर वैलक्षण्योक्त्यैक तात्पर्यकत्व मितिवाच्यं. प्रमाणान्तर विरोधेहि स्वारसिकार्थ परित्यागेन क्लिष्टार्थ परिकल्पनं. नहि श्रियो जीवत्वाणुत्व वाचकं वचनशकल मस्ति. प्रत्युत विभुत्व प्रतिपादक वचनानीश्वरत्वप्रतिपादक वचनानि बहूनि दृश्यन्ते. तानि विनाकारणं नान्यधा नेतव्यानि. नच ''भोक्ता भोग्यं प्रेरितारंच मत्वे'' त्यादि श्रुतिषु प्रेरितारमित्याद्येक वचननिर्देशादीश्वर कोट्यनन्तर्भावा ज्जीवकोट्यन्तर्भाव स्स्वीक्रियत इतिवाच्यं. ''ज्योतिष्टोमेन स्वर्गकामोयजेते'' त्यत्र पुंस्त्वेकत्व निर्देशेपि पत्न्या: कर्तृत्व फलभाक्त्ववत्कारणत्वोपास्य त्वाद्युपपत्ते:. नद्वितीय: ईश्वरद्वित्व प्रसङ्गा दित्यत्र ईश्वरकोटित्वे भगवत: प्राधान्याल्लक्ष्मास्तच्छेषत्वा च्चेश्वरद्वित्वस्या बाधकत्वा त्पतिपत्नीभावस्य परस्परे च्छया नियतत्वा दनुमन्तृतयापि जगत्सृष्ट्यादि कारणत्वोपपत्तेश्च श्रीविशिष्टस्यैव निरतिशय बृहत्व लक्षण ब्रह्मशब्द मुख्यार्थत्वा दीश्वरत्वस्योभय साधारण्येनेश्वर कोटित्वाङ्गीकारे न बाधकं किञ्चिदित्यभिप्रेत्य सृष्टिस्थिति संहारादि सर्वावस्थासु लक्ष्मीवैशिष्ट्येनैब परमात्म स्वरूपमनु सन्धेयमित्याह. ...

मूलं- ष्वानन्त्यादस्तिनास्त्योरनवधिकुहना युक्तिकान्ताः कृतान्तीः।

(सा.दी.) அவைதானும். अनवधिकुहनायुक्तिकान्ताः, अवधियற்றतर्काभासங்களாலா पातरम्यங்களான வை. ...

(सा.स्वा.) द्वापप्रयुक्त सिद्धान्त भेदानामपि संख्येयत्व सम्भवात्कथंतदानन्त्यमित्यत्राह. तत्तदिति. तत्तदर्थेष्व स्तिनास्त्योरानन्त्यादित्यन्वयं. अस्तिनास्त्योरिति, अस्तिनास्तीति प्रयोगयोरित्यर्थः. तत्तदर्थेषु प्रमाण सिद्धाकाराणां परिमित त्वेप्यस्तिना स्तीति प्रयोग मात्र मनन्तमिति ज्ञापनार्थ मस्तिनास्त्योरिति प्रयोग परशब्दोक्तिः. तथाच तत्वावान्तर भेदानां संख्येय त्वेपि एकैकार्थेषु शून्य रूपत्व मिथ्यात्वक्षणिकत्वा द्रव्यत्वावयवित्व समवा यित्वाद्यनन्त कल्पिताकार विषयाणामस्ति नास्तीति प्रयोगाणां तत्तद्वादि कर्तृ काणामानन्त्यात्तेष्वेकैका वापोद्वाप प्रयुक्तानां सिद्धान्त भेदानामानन्त्यं संभवतीति भावः. एवं कल्पितार्थत्वे तत्तत्सिद्धान्ताना माभासत्व स्फूर्त्य वश्यं भावान्न केनापि परिग्रहस्स्यादित्यत्राह. अनवधीति. कुहना, छद्म. तत्सम्बन्धिन्यो युक्तयः कुहना युक्तयः. वस्तुतो हेत्वा भासछल जातिरूपत्वे पि छद्मनास मीचीन युक्तित्वे नोपपादिता इति भावः. ताभिः कान्ताः, सम्यक्त्वेनैवभाताः. उक्तार्थस्यसर्वस्याप्य सम्भावितत्व शङ्का वारणार्थ मनुरूपं दृष्टान्तमाह. कविधीति. कवीनान्थीभिः कृतं काव्यादिकं कविधीचित्रं. तद्वदित्यर्थः. यथैक मेव चरितादिकं तत्तत्कवि कल्पितार्थ मिश्रं तत्रापि तत्तदन्य कविकृता वापोद्वाप भेदै रनन्तविधं तत्तद्धी वैचित्र्य निर्मित सन्दर्भ विशेषै रम्यंच दृश्यते तद्वदिति भावः. अनेन पूर्वार्धेन तत्व त्रय निरूपणस्य निष्फलत्व शङ्कोद्घाटिता. तुःप्रस्तुत शङ्कानिवृ ...

(सा.प्र.) र्नास्तीतिच प्रयोक्तुः योग्यशब्दानन्त्यात् तैस्तैर्व्याख्यातृभिः केषाञ्चिदन्यादृशस्वरूप लक्षणादि परिग्रहेण पूर्वोक्त प्रकारं परित्यज्य प्रतिष्ठिताभिः चरलजाति रूपाभिः परवञ्चन हेतुभूताभिर्युक्तिभिः कान्तत्वेन, समीचीनत्वेन. यथाप्रतीयेरन् तथातत्तत्सिद्धान्तार्थाः कतिकतिसम...

(सा.वि.) प्रयोगनास्ति शब्दप्रयोगस्यचानन्त्यात्केन चित्कस्मिंश्चिदर्थे केनचिद्युक्त्याभासेन अस्तीत्युच्यमाने अन्येनवादिना तद्बाधकं कञ्चिद्युक्त्याभासंपरिकल्प्यनास्तीत्युच्यते. ततोन्यस्तश्च युक्त्याभासं स्वोत्प्रेक्षित युक्त्याभासेन परिहृत्य पुनस्थापयत्य तोन्य स्तंच परिहृत्य नास्तीति स्थापयति. एवमानन्त्या दित्यर्थः. अस्तिनास्तिप्रयोगे हेतुमाह. अनवधि कुहनेति. तर्काप्रतिष्ठा नादिति न्यायेन उत्तरोत्तर परिकल्पित कुहना युक्तिभिः कुतर्कैः. कान्ताः, आपातरमणीयाः कृतान्ताः, सिद्धान्ताः. कविधीचित्रवत्, उत्तरोत्तरं. ''अङ्कंकेपि शशङ्किरे जलनिधेः पङ्कं परेमेनिर'' इत्यादि प्रकारेणोत्प्रेक्षितार्था इव, धीचित्रशब्देन तत्तत्कल्पिता नानार्था विवक्षिताः. आवापो द्वापतः, अविद्यमान तत्वानां प्रक्षेप आवापः - विद्यमान तत्वानां परित्याग उद्वापः ताभ्या मुपलक्षिता ...

(सा.सं.) धर्माणा मानन्त्यात्. अस्तीत्युक्तभावरूप धर्मयोर्मध्येनास्तीत्युक्तानामावापस्स्वीकारः. अस्तीत्युक्तानामुद्वापस्त्यागः. इत्थमावापोद्वापाभ्या मवधि रहित कुत्सितयुक्ति मनोहराः - कृतान्ताः - यमसमास्सिद्धान्ताः. कतिकतिस्युः, सन्तुनामते, तावता नास्माकं क्षतिरितिभावः - ...

मूलं- तत्वालोकस्तुलोप्तुं प्रभवतिसहसा निस्समस्तान् समस्तान्पुंस्त्वे ...

(सा.दी.) तत्वालोकस्तु, यथार्थ ज्ञानरूपतत्वत्रयाध्यवसायम्. वेदान्तविहित மாகையால். निस्समः, सर्वத்திலும் प्रबलமாய்க்கொண்டு - தான் समस्तान्, उक्तங்களான सिद्धान्तங்களை, सहसा लोप्तुम्, निरसिக்கவென்கை. प्रभवति, समर्थமாம். அதில் दृष्टान्तं पुंस्त्व इत्यादि. स्थाणुर्वा पुरुषोवेति ...

(सा.स्वा.) त्यर्थः. यद्यपि सिद्धान्ता अनन्तास्संभवन्ति. अथापिनतेषान्तत्व त्रयनिरूपण वैफल्यापादकत्वं. अपितु तत्वालोक महिम्नात एव लुप्तास्स्युरितिभावः. एतेनोत्तरार्धस्य पूर्वार्धे नान्वय सिध्यर्थ मथापीति शब्दोध्याहार्य इति ज्ञापितंभवति. तत्वालोकः, यथार्थ व्यवसायः. तत्तत्सिद्धान्त निरासार्थ मपेक्षणीया भावात्सहसेत्युक्तिः. निस्सम इति. इदमुपलक्षणं. निस्समाभ्यधिक इत्यर्थः. प्रति रोध बाध रहित इति यावत्. तत्वत्रय विषये तदवान्तर भेद विषये च समीचीनन्यायानु सन्धान पूर्वकंत त्तत्प्रमाणै स्सम्यङ्नि रूपणेन बाध प्रतिरोध रहित तयातत्त दर्थेष्व नारोपि ताकार निश्चये सति कुहना युक्ति मूल कल्पिताकार विषय सिद्धान्त भेदास्स्व स्वकार्य जननाक्षमतया स्वयमेव लुप्ताभवन्तीत्यर्थः. तथा चैवं विधव्यवसाय முடையவனுக்கு பின்புஉண்டாம் विरुद्ध मतங்களொன்றாலும் கலக்கம் संभाविயாதென்று கருத்து. இது सम्भवि யாதென்றக்கூடுமோ? लोकத்தில் विरुद्ध मतங்களால் கலக்கம் வரக்காண வில்லையோ? ஒருக்காலில்லாதொழிந்தாலும் அவத்தால் மத்தொருக்கால்தான் सम्भविயாதோ? வென்ன अर्थान्तरन्यासத்தை யிட்டுउक्तार्थத்தை स्थापिக்கிறார். पुंस्त्व इति. तत्वेन दृष्टे, अनालोपितत्वे. नसाक्षात्कृते. नप्राणिता, नभासेतेत्यर्थः. ...

(सा.प्र.) र्थिता भवेयुः - तथापिनिस्समः, निष्प्रतिद्वंद्वः, सत्प्रति पक्ष शून्य इत्यर्थः. स्वविशेषे स्वगृहीत प्रकार विरोधि प्रकार प्रमापक शून्यश्चेति भावः. तत्वालोकः, ज्ञान विशेषः - प्रमाण प्रदर्शन पूर्वक यथा भूताकाराध्यवसायो बाध प्रतिरोधयोर सम्भवात्तांस्तान् सिद्धान्तान् लोप्तुं, लुप्तान्कर्तुं प्रभवति. तुमुण्णता क्रियायां क्रियार्थायामितितु मुण्. तत्वज्ञान विरुद्धा उपन्यस्यमानाः कूटयुक्तयस्तु "गुरुप्रसदन स्फुरद्गुण गरिम्णियन्मानसे सकृत्स्फुरति वस्तु तन्न हिकिमप्य पभ्रश्यति ऋषिस्तदितरोपिवाय दिगृणाति गत्यन्तरं विकल्प्यतदपिस्वयं विलयमभ्युपैति क्षणा" दित्युक्तप्रकारेण तेनैवबाध्येरन्. यथापुरुष विशेष्यक स्थाणुत्व प्रकारक भ्रमस्य विशेषग त...

(सा.वि.) इति शेषः. तत्वविपर्यास युक्ता इत्यर्थः. कतिकति, केपिकेपि. स्युः, बहवस्सम्भवन्तीत्यर्थः. निस्समः, प्रमाणान्तरा विरुद्ध सत्तर्कानुगृहीत प्रमाणजन्य तयानिष्प्रति द्वंद्वः. तत्वालोकः, तत्वज्ञानं. सहसा, अतर्कितमेव. समस्तान् तान् सिद्धान्तान्. लोप्तुम्, निवर्तयितुम्. प्रभवति, अस्मदाचार्य सिद्धान्तस्य प्रमाणमूलकतया इतर सिद्धान्तानामिव परस्पर प्रत्याहत्य भावा देतत्तत्वज्ञानेनान्येसिद्धान्ता बाधिताभवन्तीति भावः. तत्रदृष्टान्त माह. पुंस्त्व इति. पुरुषत्ववति पुरुषत्व निश्चये ...

(सा.सं.) कुत इत्यत्राह - तत्वालोकस्त्विति. उक्त विधयातत्वत्रय निर्धारण रूपोध्यवसाय स्सत्वालोकः. निस्समस्तान् लोप्तुं निश्शेषतयानिराकर्तुं प्रभवति - कथमित्यत्र दृष्टान्तेनाह, पुंस्त्व इति. ...

मूलं- तत्वेनदृष्टे पुनरपिनखलु प्राणिता (स्थाणुताधीः)

---

(सा.दी.) संशयத்தில் पुरुषत्वं शिरःपाण्यादि चिन्हங்களால் परमार्थतस्साक्षाத்காிக்கப் பட்டால். स्थाणुतादिः, स्थाणुर्वा शिलास्तम्भोवेत्यादि कोट्यन्तரங்கள். पुनरपि नप्राणिताखलु. மீளவும் உதியாதன்றோ வென்கை. இங்கே उत्तराधिकारத்துக்கு प्रसङ्गமாக अर्थान्तरं ध्वनिக்கிறது. परस्य भगवतः पुंस्त्वे, पुरुषोत्तमत्वेप्रमाणैः परमार्थतो निश्चिते सति. स्थाणुतादिः. रुद्रत्व ब्रह्मत्वादि कोटिः नोदेति. ...

---

(सा.स्वा.) सम्यङ्नि रूपण सम्पादित विशेष दर्शनेसति विशेषादर्शनादि रूप संशय विपर्यय सामग्रीलोपादिति भावः. सम्यङ्नि रूपित विषये पुनःकदाचिदपिसंशयादिकं नोदीयादिति ज्ञापनार्थं पुनर पीत्युक्तिः. तथाच, लोकத்தில் विरुद्ध मतங்களால் கலங்கு மவர்களுக்கு सम्यङ्नि रूपण सम्पादिततत्व व्यवसाय மில்லையென்று கருத்து. अत्रादि शब्देन शिलास्तम्भत्वादि सङ्ग्रहः. एवं लौकिक विषयार्थान्तर न्यासवत्त्रय्यन्तार्थ विशेष विषयार्थान्तर न्यासश्चात्रव्यज्यते. ईश्वर रूपस्य जगत्कारण वस्तुनः पुंस्त्वे, पुरुषोत्तमत्वेप्रमाणैः परमार्थतो निश्चितेसति. तद्वस्तुनि ...

---

(सा.प्र.) पुरुषत्व व्याप्यकर चरणादिप्रत्यक्षेण पुरुषत्व निश्चये नबाधेवगतेकालान्तरेपितद्विषयक स्थाणुत्व भ्रमः। प्रबल दोषजन्योपितेनैव करचरणादि प्रत्यक्षेण बाध्यतेतद्वदित्यर्थः - नप्राणिता, नजीविष्यतीत्यर्थः. प्रबलैः प्रमाणैः जगत्कारणवस्तुनि श्रीमन्नारायणत्वेन निश्चितेसति कस्य चिद्रुद्रत्व भ्रमस्यच प्रामाणिकत्वे श्रियः पतित्वरूप विशेषदर्शनेनैव बाधितस्स्यादिति ''भगवानिति शब्दोयं तथा पुरुष इत्यपि। निरुपाधीच वर्तेते वासुदेवे सनातने। स्थाणूरुद्र उमापति'' रित्यादि...

---

(सा.वि.) सतिस्थाणुत्वधीः. स्थाणुत्व ज्ञानं, पुनरपि, पुरुषत्व निश्चयानन्तरमपि. नप्राणिताखलु, नजीविष्यतिखलु. अनद्यतन भविष्यति विहितस्यापि लुटः लक्षणया भविष्यन्मात्रे प्रयोगः. कदापि तत्रस्थाणु त्व बुद्धिर्नो देतीत्यर्थः - अयंभावः. विशेषादर्शनदशाया मूर्ध्वन् व्यक्तौ स्थाणुर्वा पुरुषोवेत्यादि संशयविपर्यया द्युत्पत्तावपि करचरणादि व्याप्यदर्शनेन पुरुषत्व निश्चये कोट्यन्तरभान सामग्रीप्रति बन्धात्संशयादिर्यथानो देतितद्वदस्मत्सिद्धान्त ज्ञानेन इतर मत प्रयुक्तार्थतत्व विषयसंशयादि र्निरस्त इति - अत्र पुंस्त्वे. पुरुषपद वाच्यत्वे - तत्वेन, दृष्टे कारणवाक्येषु परतत्वावबोधकतया दृष्टेसति पुरुष पदस्य भगवत्य साधारणशक्तिकत्वात् स्थाणुत्व रुद्रत्वादेः परतत्वाव ...

---

(सा.सं.) तत्वेन पुरुषत्व कोटि दर्शनेसति स्थाणुतादि कोटिर्नप्राणिताखलु, ...

मूलं- स्थाणुतादि: ।।

इति कवितार्किकसिह्मस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य

वेदान्ताचार्यस्य कृतिषु श्रीमद्रहस्यत्रयसारे

तत्वत्रयाधिकार: पञ्चम: ।।

श्रीमते निगमान्तमहादेशिकाय नम: ।।

---

(सा.दी.) परतत्व धर्मत्वेन नजीवति என்கை ।।१५।।

इति सारदीपिकायां तत्वत्रयाधिकार: पञ्चम: ।।

---

(सा.स्वा.) स्थाणुतादि:, रुद्रत्व चतुर्मुखत्वादिकोटि:, पुन:, कदाचिदपि. नभासेतेति. एव मेतच्छलोक व्याख्यानं सर्वार्थ सिद्धावेतच्छलोक व्याख्यान मनुसृत्य कृतमिति द्रष्टव्यम् ।।१५।।

इति सारास्वादिन्यां तत्वत्रयाधिकार: पञ्चम: ।।

---

(सा.प्र.) प्रमाणानुगुण्यात्पुंस्त्व स्थाणुपदाभ्यां सूचितम् ।।१५।।

इति सारप्रकाशिकायां तत्त्वत्रयाधिकार: पञ्चम: ।।

---

(सा.वि.) ज्ञानं नतिष्ठतीत्युत्तराधिकारार्थ स्सूच्यत इत्याहु: ।।१५।।

इति सारविवरिण्यां तत्वत्रयाधिकार: पञ्चम:।।

---

(सा.सं.) धर्मिणिनस्फुरतिखल्वित्यर्थ: ।।१५।।

इति सारप्रकाशिकासङ्ग्रहे तत्वत्रयाधिकार: पञ्चम:।।

श्रियै नमः

श्रीमते रामानुजाय नमः

श्रीमते निगमान्तमहादेशिकाय नमः

# ।। परदेवतापारमार्थ्याधिकारः ।।

मू– आत्मैक्यं ...

(सा.दी) कृतेतत्वत्रयस्यापि सामान्येन विवेचनं । ऐकान्त्यसिद्ध्यै परमा देवताथ प्रकाश्यते । आत्मैक्यमिति - आत्मशब्दं परमात्मपरं. प्रतिसम्बन्धि निर्देशமில்லாமை चेतन कृत्स्न...

(सा.स्वा) जगत्कारण भूतனான ईश्वरன் பக்கல் पुंस्त्वेतत्वेन दृष्टे என்று पुरुषोत्तमत्वरूपदेवताविशेष निर्णयமொருக்கால் பிறக்கிறதாகச் சொன்னது கூடுமோ? तस्य रुद्रत्वादि साधक प्रमाणங்களும், तन्मूलங்களான मतभेदங்களும், बहुक्कளில்லையோ? அந்த प्रमाणங்கள் समीचीनन्याय कलाप सात्विकपुराणाद्युपबृह्मित अनन्त श्रुतिविरुद्धत्वेन रुद्रत्वादि साधकங்களாகமாட்டாமல் पुरुषोत्तमत्वसाधकप्रमाणங்களோடொக்க एककण्ठங்களாகையாலும் அந்த मतங்கள் अनुपपन्नங்களாகையால் उक्त देवताविशेषनिश्चयं பிறக்கக் கூடுமென்னில் அந்த समीचीनन्यायसहितपुराणादिகளெவை? विरुद्धप्रमाणங்களுக்கு ऐककठ्यंதானெங்ஙனே? அந்த मतங்கள்தான் अनुपपन्नங்களானபடி எங்ஙனேயென்றிப்படிப் பிறக்கும் शङ्कैகளுக்கு-परिहारप्रदर्शनपूर्वकं परदेवतापारमार्थ्यத்தை இவ்வधिकारத்திலே யருளிச் செய்யக்கோலி இதன் अर्थத்தை सङ्ग्रहिக்கிறார். आत्मैक्यमित्यादिயால். आत्मैक्यं, आत्मतत्वस्य एकत्वं...

(सा.प्र) पूर्वाधिकारे चिदचिदुभयनियन्तेश्वर उक्तः - स क इति व्यक्तिविशेष जिज्ञासायां तादृशेश्वरः श्रीमन्नारायण इति प्रतिपाद्यतेऽ स्मिन्नधिकारे - ननु पुरुषशब्दवाच्यस्य नारायणत्वेन निर्णयस्य रुद्रत्वादिसंशयप्रतिबन्धकत्वं पुंस्त्व इत्यत्रोक्तम्. स तुनिर्णय एव न सङ्गच्छते. आत्मैक्यादीनां वेदान्त एव प्रतिपादनादित्यत्राह. आत्मैक्यमित्यादिना. आत्मैक्यं परमार्थः. देवतैक्यं परमार्थः. त्रिकसमधिकता तुल्यता परमार्थः. त्रयाणामैक्यं परमार्थः. अन्यत्रैश्वर्यं...

(सा.वि) एवं तत्वत्रये निश्चिते परदेवतानिर्धारणाभावे मोक्षहेतुभूतपरमैकान्त्यं न सिध्यतीति परदेवतानिर्णेतव्येत्यभिप्रेत्याह. आत्मैक्यमिति. अत्र परमात्मनश्चेतनाचेतनात्मना...

(सा.स) स्यादेवमुक्तविधया तत्वत्रयविनिर्णयः. यदीश्वरतत्वं त्रिमूर्तिष्विदमेवेति निर्धारितं स्यात्. चित्तत्वबहुत्वंवा कुत इत्यात्मैक्यवादाद्युत्थितेस्सङ्गतमधिकारान्तर मारभमाणस्तदर्थमादौसङ्गृह्णाति. आत्मैक्यमिति. विविधचेतनाचेतनस्वरूप एक एवात्मा. नात्मभेदो

(सा.दी) प्रपञ्चैक्य மென்றபடி - இந்த பக்ஷத்தில் स्वभावसिद्धेत्यारभ्य देवतैक्य மென்ற அம்சத்தின் विवरणं - स्वाभाविकजीवेशभेदं प्रमाणसिद्धமாகையால் जीवान्तर्गतரான ब्रह्मादिகள் ईश्वरனோட भिन्नரென்னக்கூடாது. जीवர்களுடைய अन्योन्यभेदं प्रमाणसिद्धமாகையால் देवர்கள்தம்மில் தாம் अभिन्नரென்னக்கூடாதென்றபடி. இப்பக்ஷத்தில் मायिमतம் आदिशब्दग्राह्यं. यद्वा, आत्मैक्य மென்றுமாய் यादवमतद्वयसङ्ग्रहं । அப்போது आत्मैक्यமென்றுपरमात्माவுக்கு चेतनाचेतनैक्यமும் चेतनमात्रैक्यமும் சொல்லப்படுகிறது. அப்போது चेतनाचेतनेत्यादियादवमतविषयं - स्वभावसिद्धेत्यादि प्रमाणिकமென்னுமளவாக...

(सा.स्वा) चेतनत्वाचेतनत्वरूपावस्थाभेदमात्र மொழியद्रव्यान्तरமில்லாமையால்ब्रह्मद्रव्यமொன்றே தத்வமென்கிறयादवमतத்தைச்சொன்னபடி. यादवमतம்போலேशङ्करभास्करमतங்களும் देवताविशेषनिर्णय विरोधिகளானாலும், यादव मतं அடியாக வரும் शङ्कैயை निरसिக்கவே शङ्करभास्करमतங்களடியாக...

सा-प्र- परमार्थ इत्याद्यनिपुणफणितीस्सन्तो नाद्रियन्ते. किञ्चाखिलतनुर्मुक्तिदो मुक्तभोग्यः श्रीमान्नारायणो नः पतिरित्यमुमर्थं त्रय्यन्तैरेक कण्ठैस्तदनुगुणमनुव्यासमुख्योक्तिभिश्चाद्रियन्त इत्यन्वयः, आत्मैक्यं नाद्रियन्त इति. अयं भावः यद्यप्यात्मैक्यं "पुरुष एवेदग्ं सर्वं. सर्वं खल्विदं ब्रह्म. नेह नानास्ति किञ्चन. यत्रत्वस्य सर्वमात्मैवाभू" दित्यादि श्रुतिभिस्सर्वेश्वरस्य सर्वैक्यं प्रतीयते. अथापि "भोक्ता भोग्यं प्रेरितारञ्च मत्वा. सर्वंप्रोक्तं त्रिविधं ब्रह्म चैतत्. पृथगात्मानं प्रेरितारं च मत्वा. समाने वृक्षे पुरुषो निमग्नोनीशया शोचति मुह्यमानो जुष्टं यदा पश्यत्यस्य मीशमस्य महिमानमिति वीतशोकः. द्वासुपर्णासयुजा सखाया समानं वृक्षं परिषस्वजाते. तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योभिचाकशीति. नित्यो नित्यानां चेतनः चेतनानामेको बहूनां यो विदधाति कामा" नित्यादिभिर्भेदस्यापि प्रतीतेः. उभयविधश्रुत्योः परस्परविरुद्धार्थतया प्रतीताव प्युभयाप्रामाण्यस्यान्याय्यत्वादुभयोः प्रामाण्ये संभवत्यन्यतराप्रामाण्यस्याप्य न्याय्यत्वात् "यस्य पृथिवी शरीरं. यस्यापश्शरीरं. यस्य तेजश्शरीरं. यस्य वायुश्शरीरं. यस्याकाश श्शरीरं. यस्य बुद्धिश्शरीर, यस्याव्यक्तंशरीरं, यस्याक्षरशरीरं, यस्यतमश्शरीरं यस्यात्माशरीरं एषत आत्मा अन्तर्याम्यमृतः अन्तः प्रविष्टश्शास्ताजनानां सर्वात्मा, एष सर्वभूतान्तरात्मा अपहतपाप्मादिव्योदेव एको नारायणः. इत्यादिभिः ऐक्य परश्रुतीनां शरीरशरीरि भावेन ऐक्यं विषयः भेद श्रुतीनां स्वरूपभेदो विषय इति भेदाभेदश्रुत्योर्विषयविभागप्रदर्शनपूर्वकं विरुद्धार्थत्वप्रतीतेरपि निवर्तनाच्चिदचितोर्भेदस्याभेदस्यच स्वाभाविकत्वे व्याघातादैक्य साधकानां पुरुषाणामचेतनत्वापादकतया स्व व्याघातकत्वाच्च चिदचिदीश्वराभेदानुपपत्तेस्तेषां...

(सा.सं) परिणामात्सर्वंब्रह्मद्रव्यमिति यादवमतं. परमात्मनश्चेतनाचेतनप्रपञ्चेन सह भेदो ना स्तीति मायिमतं, तेह्येवं वदन्ति. "मानाभावादयुक्तेश्च न भिदेश्वरजीवयोः । जीवानामचितां चैवमात्मनो नपरस्पर" मिति जीवानां परस्परभेदो नास्ति - अचितामात्मनश्चेतनाद्भेदो नास्तीत्यस्ति

मू– देवतैक्यं

(सा.दी) मायिमतविषयं - ஆகையாலீत्यादि देवतैक्यविषयं. यद्वा मायिमतनिराकरण மேயாகவுமாம் -परमात्मजीवात्मैक्यமும், जीवात्माக்களுடைய परस्परैक्यமும் विवक्षितं -प्रथमवाक्यमादि शब्दग्रहीतமான यादवपक्षविषयं. कृत्स्नैक्यजीवैक्यजीवविशेषदेवतैक्यங்களுடைய क्रमத்தை विवक्षिத்துமுந்துற तत्पक्षं சொல்லிற்று. देवतैक्यं; देवतैகளுக்கும் ईश्वरனோடும் अनोन्यமும்ऐक्यं

(स्व.स्वा) வரும்शङ्कैகளும் अर्थान्तिरस्तங்களாமென்கிறகருத்தாலேயவற்றையிங்கு-தனித்தெடாதொழிந்தது. அவையடியாக வரும் शङ्काप्रकारங்களும், तन्निरास प्रकारங்களும் மேலே व्यक्तமாகிறது. देवதைक्यं, देवताया एकत्वं. ब्रह्मविष्णुरुद्रेन्द्राग्न्यादिदेवதை-யெல்லாத்துக்கும் शरीरभेदमात्र...

(सा.प्र) भेदस्सिद्ध इति पुंस्त्वनिर्णयसम्भव इति. अत्र तुल्यन्यायतया शङ्करभास्करपक्षावपि निरस्तौ वेदितव्यौ.(*)यद्यप्येवमात्मनो चिदैक्यमनादरणीयं, अथापि "इष्टापूर्तंबहुधा जातं जायमानं विश्वंबि भर्तिभुवनस्य नाभिः-तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः. अग्निस्सवदिवता" इत्यादिश्रुतिभिः. "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव चे" त्यादिस्मृतिभिरपि सर्वकर्मसमाराध्यदेवतैक्यावगमाद्रुद्रादीनां प्रत्येकपारम्यश्रवणान्यथानुपपत्त्या च देवतानामैक्यावगमा द्देवताविशेष निर्णयोनोपपद्यत इत्यत्रोक्तदेवतैक्यं नाद्रियन्त इति. "तद्ब्रह्म. स आत्मा अङ्गान्यन्या देवताः. चन्द्रमा मनसो जातःचक्षोस्सूर्यो अजायत. मुखादिन्द्रश्चाग्निश्च । प्राणाद्वायुरजायत - नारायणात् द्वादशादित्या रुद्रा वसवस्सर्वाणि च छन्दागुंसि नारायणादेव समुत्पद्यन्ते. अष्टौ वसव एकादश रुद्राद्वादशा दित्या एतावन्तो वै देवाः. त्रयस्त्रिंशद्वै देवतास्ता इन्द्र आत्मन्ननुसमारम्भयते. अग्नाविष्णो सजोषसा. इन्द्राग्नि आगत" मित्यादि श्रुतिभिः "ब्रह्मा शम्भुस्तथैवार्कश्चन्द्र माश्च शतक्रतुः । एवमाद्यास्तथैवान्ये युक्ता वैष्णवतेजसा । जगत्कार्यविसाने तु वियुज्यन्तेच तेजसा । वितेजसश्चते सर्वेपञ्चत्वमुपयान्ति चे" त्यादि स्मृतिरपि सर्वदेवताना मीश्वरस्य परस्परभेद सिद्धे र्देवतासामानाधिकरण्यस्य च "यस्या दित्यश्शरीरं - यस्य चेन्द्रतारकं शरीरं - य आदित्ये यो वरुणे यो वायौ यश्चेन्द्रे यो ब्रह्मणि यो रुद्रे य इन्द्रे यः प्रजापतौ. एष सर्वेश्वर एष भूताधिपतिरेषोन्तर्यामी त्यादिभि श्शरीरशरीरिभावावगमेन ज्योतींषि विष्णुरित्यादिवदन्तर्या मित्वेनैवोपपत्तेः पारम्यप्रतिपादकेषु "न किरिंद्र त्वमुत्तरो न ज्यायानस्ति वृत्रह"न्नित्यस्य प्रकारकवस्वादिष्विन्द्रादधिकनिषेधकत्वा...

(सा.वि) न्वयः । एतन्मतद्वयं आत्मैक्यमित्यनेन सङ्ग्रहीतं. सर्वदेवतानामैक्यमित्येकःपक्षः-तत्पक्षत्रये- "அவ்விடத்தில் चेतनाचेतनங்களுடைய अत्यन्तभेदं प्रमाणसिद्धமாகையாலே इत्युत्तरत्रस्थितेन ग्रन्थेन यादवमतं प्रतिक्षिप्तं "स्वभावसिद्धமானजीवेश्वरभेदமுமப்படியே,, इति शङ्करमतं प्रतिक्षिप्तं. "देवतादिरूपரானजीवர்களுடையே" ति. वाक्येन देवतैक्यमतं प्रतिक्षिप्तं...

(सा.सं) अतस्सर्वमपि ब्रह्मद्रव्यमित्यात्मैक्यवादः. एकैवदेवताहिरण्यगर्भेन्द्रादिबहुरूपा...

मू– त्रिकसमधि(कता)गता तुल्यतैक्यं

(सा.दी)- त्रिकसमधिकता, त्रिकात्समधिकतातुल्यता त्रिकसमधिगता, त्रिकं समधिगता त्रयाणांतुल्यता,

(सा.स्वा) மொழிய आत्मस्वरूपभेदமில்லை யென்கிற मतத்தைச் சொன்னபடி. त्रिकं, ब्रह्मविष्णवादिव्रिकं. समधिगता, सम्यगधिगता - तुल्यता, त्रिमूर्तिகளுக்கு ज्ञानशक्त्यादिष्वत्वन्तसाम्य மென்கிற मतத்தைச்....

(सा.प्र) वगमादेक एव रुद्रो न द्वितीयाय तस्थ'' इत्यादिषु प्रतिपन्नस्य पारम्यस्य ''आखुस्तेरुद्र पशु'' रित्यनेन हविर्विशेषोद्देश्यत्वादिनिबन्धनतया तन्मात्रप्रतिसम्बन्धित्वावगमाच्च सर्वदेवतैक्यासिद्धे र्देवताविशेषनिर्णयो युज्यत इति भावः(*)मास्तु सर्वदेवतैक्यं ''यथा ससर्ज देवोसौ देवर्षिपितृ दानवान् । मनुष्यतिर्यग्यक्षादीन् भूव्योमसलिलौकसः । यद्गुणं यत्स्वभावं च यद्रूपं च जगद्द्विज । सर्गादौ सृष्टवान् ब्रह्मातन्ममाचक्ष्व विस्तरात् । चराचरस्य सर्वस्य रुद्रस्संहारकारकः । ततः कालाग्निरुद्रोसौ संहरत्यखिलं जगत् । न हि पालनसामर्थ्यमृते सर्वेश्वरं हरि'' मित्यादिभिर्ब्रह्मविष्णुशिवानां कार्यत्रये प्रत्येकनिरपेक्षकारणत्वावगमात्तुल्यत्वं स्वीकार्यमतो नारायणस्य परत्वनिर्णयो नोपपद्यते इत्यत्रोक्तं त्रिकसम धिकता तुल्यतातत्वमिति नाद्रियन्ते. अयंभावः नतत्समश्चाभ्यधिकश्च दृश्यते. ''न त्वत्समोस्त्यभ्यधिकः कुतोन्यः. एतौ द्वौ विबुधश्रेष्ठौ प्रसाद क्रोधजौ स्मृतौ । तदादर्शितपन्थानौ सृष्टिसंहारकारकौ । नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमं । ऋते तमेकं पुरुषं वासुदेवं सनातनं । जुषन्रजोगुणं तत्र स्वयं विश्वेश्वरो हरिः । ब्रह्मा भूत्वास्य जगतो विसृष्टौ संप्रवर्तते । सृष्टं च पात्यनुयुगं यावत्कल्पविकल्पना । सत्वभृद्भगवान्विष्णुरप्रमेयपराक्रमः । तमोद्रेकीच कल्पान्ते रुद्ररूपी जनार्दनः । मैत्रेयाखिलभूतानि भक्षयत्यतिभीषणः । ब्रह्माणमिन्द्रं रुद्रं च यमं वरुणमेव च । निगृह्य हरते यस्मात्तस्माद्धरिरितीर्यत'' इत्यादिभिः कण्ठोक्त्या. अर्थाच्च साम्यस्य निषिद्धत्वात्सृष्टिसंहारयोरपि भगवत्कर्तृकत्वावगमाच्च भगवतः परत्वनिर्णय उपपद्यत इति. त्रिकसम धिगतेति तुल्यताविशेषणं. त्रिके, ब्रह्मविष्णुरुद्रात्मके पुरुषत्रये, सम्यक्त्वेनाधिगता ज्ञातेत्यर्थः. एवञ्च ब्रह्मरुद्रयोरपि यत्किंचिदपेक्षयाईश्वरत्वस्यापि विद्यमानत्वात्सामान्यतस्स्याम्यस्येश्वरत्वेन साम्यस्यापि निषेधानुपपत्तेस्सम्यक्तुल्यत्वरूपं सर्वेश्वरत्वेनात्यन्तसाम्यमेव निषेध्य मित्यर्थः एतदर्थानुगुणमेवानन्तरं ''இவ்விடத்தி'' लित्यारभ्य ''பக்ஷங்கள் घटिया'' दित्यन्ते महा वाक्ये तत्तत्पक्षपरिगणने प्रथमं सर्वैक्यपक्षस्य, अनन्तरं देवतैक्यपक्षस्य, तदनन्तरं त्रिमूर्तिसाम्य पक्षस्य तदनन्तरं त्रिमूर्त्यैक्य पक्षस्य, तदनन्तरं त्रिमूर्त्युत्तीर्णत्वपक्षस्य, तदनन्तरं त्रिमूर्तिमध्ये विष्णुव्यतिरिक्त इति पक्षस्य आदि शब्दार्थत्वाभिप्रायेण चोपादानात् त्रिकसमधिकतेति त्रिमूर्त्युत्तीर्णत्व...

(सा.वि) त्रिकसमधिगता, ब्रह्मविष्णुशिवत्रयं प्राप्ता । तुल्यता, त्रयाणां तुल्यतेत्येकः पक्षः.

(सा.सं) न देवताभेदोस्तीति देवतैक्यवादः. त्रिमूर्तिषु परस्परं नन्यूनाधिकभाव इति त्रिकसमधिगता

(सा.प्र) बोधकपाठस्य वेंदान्ताचार्योपात्तक्रमविरोधात्त्रिकसमधिकतेति पाठे त्रिमूर्त्युत्तीर्णत्व परत्वेनान्यत्रैश्वर्यमित्यनेन पुनरुक्तिप्रसङ्गात्तत्परिहारायान्यत्रेत्यस्य विष्णोरन्यत्रेत्यर्थ स्वीकारे अध्याहारप्रसङ्गात् तुल्यत्वस्याविशेषितस्य निषेधे पूर्वाधिकारोक्तस्य चेतनत्व स्वयंप्रकाशत्वप्रत्यक्त्वादिभिस्तुल्यत्वस्यापि निषेधप्रसङ्गेन स्वव्याघातापातात्तत्परिहारस्यापेक्षितत्वात् सम्यक्त्वेनाधिगततया विशेषितायास्तुल्यतायास्तु निषेधे सर्वेश्वरत्वेन साम्यनिषेधपर्यव सानेनोक्तदोषाभावादन्यत्रेत्यस्य प्रतियोगिसाकांक्षत्वेपि त्रयाणामित्यस्य विभक्तिविपरिणामेन पञ्चम्यन्ततयानुषङ्गस्यैवोचितत्वाच्च समधिगतेति पाठएव समीचीनः. न तूत्तीर्ण ब्रह्मबोधक स्समधिकतेति पाठः । नचाधिकरणचिन्तामणौ प्रथममात्मैक्यपक्षस्य, अनन्तरं देवतैक्यपक्षस्य, अनन्तरं त्रिमूर्त्युत्तीर्णत्वपक्षस्य, अनन्तरं त्रिमूर्ति साम्यपक्षस्य, अनन्तरं त्रिमूर्त्यैक्य पक्षस्य तदनन्तरं भास्कराद्यन्यतमेश्वरत्व पक्षस्य चोपन्यासात् स्थानप्रमाणात् त्रिमूर्त्युत्तीर्णत्व पक्षस्य प्रतिपादकतया त्रिकसमधिकतेत्यपि पाठोस्तीति संशयितव्यं. तत्रापि परदेवतापारमार्थ्याधिकारगत ''அவ்விடத்தி'' लित्यादिवाक्यगतषण्णामेव पक्षाणा मुपन्यासात्. तस्य च वाक्यद्वयस्याप्यात्मैक्यमिति श्लोकव्याख्यानात्मकतया उभयत्रादि शब्दार्थस्य वर्णनीयत्वेनोभयत्रचरमोपात्तपक्षस्यादिशब्दार्थत्वमावश्यक मिति तद्व्यतिरिक्तानाञ्च पक्षाणां पञ्चसंख्याकत्वात्त्रिकसमधिकतेति पाठस्य स्वीकारे कण्ठोक्तपक्षाणां षट्संख्याकत्वस्यावर्जनीयतयोभयत्र कण्ठोक्तेषु कस्यचित्पक्षस्यवा आदिशब्दार्थस्य वोपन्यासाभावप्रसङ्गात्. त्रिकसमधिगतेति पाठे तुल्यताविशेषणतया पक्षान्तरत्वप्रसङ्गाभावेन कण्ठोक्तपक्षपञ्चकस्यादिशब्दार्थस्य चोपन्यस्तत्वसिद्धेरुभयत्रादि शब्दार्थोपन्यासा नङ्गीकारेण समधिकतेति पाठाङ्गीकारेपि चरमोपात्तस्यान्यत्रैश्वर्यमिति पक्षस्य विष्णोरन्यत्रेति वेदान्ताचार्योक्तार्थव्यतिरिक्तार्थस्य वरदाचार्यैर्वर्णनवैयर्थ्यात्. वेदान्ताचार्यकण्ठोक्त पक्षव्यतिरिक्तस्य कृत्स्नस्यापि पक्षस्यादिशब्दार्थत्वसंभवेन भास्कराद्यन्यतमेनेश्वरत्व पक्षस्यान्यत्रैश्वर्यमित्यत्रविवक्षानुपपत्तेर्वेदान्ताचार्यैरेवात्म्यैक्यमित्यस्य प्रतिबिम्बव्याख्यानतया ''அவ்விடத்திலி'' त्यारभ्योक्ते वाक्ये तृतीयपर्क्षार्थतया साम्यपक्षस्य द्विप्रकारपरिगणनात्पक्ष चतुष्टयनिरासहेतुसंग्राहके तत्रैववाक्ये साम्यनिरासकस्य ब्रह्मरुद्रयोः कार्यत्वकर्मवश्यत्वरूपहेतोःप्रथममुपादानात्. तत्रक्रम विवक्षां विहाय वरेदाचार्योक्तक्रमविवक्षा-स्वीकारानौचित्याच्च। एवमधिकरणचिन्तामणावपि समधिगतेति पाठव्याख्यानतयैव क्रममनादृत्य पर पक्षोपन्यासःकृतः । एवञ्च श्लोके कंठोक्तपक्षपञ्चकातिरिक्तपक्षाणां सर्वेषामादि शब्दार्थत्वज्ञाप-नार्थं वेदान्ताचार्यैरादिशब्दार्थत्वेनोपात्तंत्रिमूर्तिषु विष्णुव्यतिरिक्तपक्षं विहाय ''हरिर्देवो हरो देवो भास्करो देव इत्यपि । कालएवे'' त्यादिषूक्तः परपक्षविशेषो वरदाचार्यैरादिशब्दार्थत्वेनोक्त इति प्रयोजनवानेव वरदाचार्याणां पक्षान्तरोपन्यास इति त्रिकसमधिगतेति पाठएव वेदान्ताचार्य वरदाचार्ययो...

मू– त्रयाणामन्यत्रैश्वर्य

(सा.दी) त्रयाणामैक्यं. अन्यत्र, विष्णोरन्यत्र

(सा.स्वा)சொன்னபடி.त्रयाणामैक्यं, तेषामात्मस्वरूपैक्यं. अग्नीन्द्रादिदेवतानामात्मस्वरूपभेदेपि त्रिमूर्तिमात्रस्यात्मस्वरूपभेदमில்லை என்கிறமதத்தைச்சொன்னபடி. अन्यत्र, त्रिकतोन्यत्र - ऐश्वर्यं,

(सा.प्र) रभिमत इति न सङ्कटं किंचित्(✲) मास्तु त्रिमूर्तिसाम्यं. अथापि ''ब्रह्मनारायणत्वेन कल्पादौ भगवान्यथा । प्रजास्ससर्जभगवान् ब्रह्मा नारायणात्मकः । ततस्सभगवान्विष्णूरुद्ररूपधरोव्ययः । ततःकालाग्निरुद्रोसौभूत्वा सर्वहरो हरिः । सर्ग स्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकां । ससंज्ञां याति भगवा नेकएव जनार्दन'' इत्यादिप्रमाणात् त्रिमूर्त्यैक्यमङ्गीकार्यं अतो नारायणास्य परत्वनिर्णयो नोप पद्यत इत्यत्रोक्तं त्रयाणामैक्यं नाद्रियन्त इति. अयं भावः, ''नारायणाद्ब्रह्मा जायते. नारायणाद्रुद्रो जायते. नारायणादिन्द्रो जायते. नारायणात् द्वादशादित्यारुद्रा वसवस्सर्वाणिछन्दाँसि नारायणादेवसमुवत्पद्यन्ते एकोहवै नारायणआसीन्न ब्रह्मा न शङ्करःसमुनिर्भूत्वाचिन्तयत् - अत एते व्यजायन्त - विश्वो हिरण्यगर्भोग्निर्यमवरुणरुद्रेंद्रादयःयन्नाभिपद्मादभवन्महात्मा प्रजापतिः तत्रब्रह्माचतुर्मुखोजायत. सोऽग्रेभूताना मृत्युमसृजन् त्रैक्षं त्रिशिरस्कं त्रिपादं खण्डपरशुं ब्रह्मणः पुत्राय ज्येष्ठाय - ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः । विभूतयो हरेरेता जगतस्सृष्टिहेतवः । रुद्रः कालान्तकाद्याश्च समस्ताश्चैव जन्तवः. चतुर्धाप्रळयायैते जनार्दनविभूतयः । आद्यो नारायणो देव स्तस्माद्ब्रह्मा ततोभवः । परो नारायणो देवस्तस्माज्ञातश्चतुर्मुखः । तस्माद्रुद्रोभवद्देवि । क इति ब्रह्मणो नाम ईशोहं सर्वदेहिनां । आवां तवाङ्गे संभूतौ तस्मात्केशवनामवान् । एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ । तदादर्शीतपन्थानौ सृष्टिसंहारकारकौ । विष्णुरात्मा भगवतो भवस्यामित तेजस'' इत्यादिषुभगवतस्तयोश्च परस्परभेदावगमात्सामानाधिकरण्यस्य च ''सृष्टिं ततः करिष्यामि त्वामाविश्यप्रजापते । हरो हरति तद्वश, इत्याद्यानुगुण्येनान्तर्यामित्वेनाप्युपपत्तेर्भेदाबाधाद्देवताविशेषनिर्णयो युक्त इति(✲)ननु ''विष्णुर्मन्वादयःकाल'' इति विष्णोरप्यन्यविभूतित्व श्रवणात् ''तेनेदं पूर्णं पुरुषेण सर्वं. ततो यदुत्तरतरं तद्रूपमनामयं. य एतद्विदुरमृतास्ते भवन्ति'' इति पुरुषशब्दनिर्दिष्ट नारायणातिरिक्तस्य मोक्षहेतुत्वोक्तेः. ''अमृतस्यैष सेतु''रिति सेतुवत् भगवतोस्यप्रापकत्वोक्तेश्च त्रिमूर्त्युत्तीर्णमेव सर्वजगत्कारण मिति नारायणरूपपरदेवतानिर्णयोनुपपन्न इत्यत्रौक्तमन्य त्रैश्वर्थं नाद्रियन्ते इति. ''विश्वमेवेदं पुरुष स्तद्विश्वमुपजीवति. पतिं विश्वस्यात्मेश्वरं. यदन्तस्समुद्रे कवयोवदन्ति...

(सा.वि) त्रयाणामैक्यमित्यन्यः पक्षः. अन्यत्र, मूर्तित्रयादन्यत्र. ऐश्वर्यं ईश्वरत्वं. उत्तीर्ण शिवः...

(सा.सं) तुल्यतेति वादः. वस्तुत एकएवात्मा - त्रिकत्वोक्तिवादः न तेषु वस्तुतः परस्परभेद इति त्रयाणामैक्यवादः. त्रयाणां मध्ये अव्यवस्थया यः कश्चनेश्वर इति अन्यत्रैश्वर्यवादः. आदिपदात्

सा-प्र- न तस्येशे कश्चन तस्य नाम महद्यशः. परात्परं यन्महतो महान्तं. न तत्समश्चाभ्यधिकश्च दृश्यते. अग्निरवमो देवतानां विष्णुःपरमः. मत्तः परतरं नान्यत्किंचिदस्ति धनञ्जय । आभूत संप्लवे प्राप्ते प्रलीने प्रकृतौ महान् । एकस्तिष्ठति विश्वात्मा स तुनारायणःस्मृतः । न परं पुण्डरीकाक्षाद्दृश्यते पुरुषर्षभ । परं हि पुण्डरीकाक्षान्न भूतं न भविष्यति । न विष्णोः परमो देवो विद्यते नृपसत्तम । न वासुदेवात्परमस्ति दैवतं न वासुदेवंप्रणिपत्य सीदति । देशतःकालतो व्याप्तिर्मोक्षदत्वं तथै वच । हरेर्विभूतिमात्रं तु केवलं सप्रभाषितं । अतो महिम्नस्स्वल्पांशात् ज्यायानेवपरः पुमान् । ज्यायस्त्वं तस्य सर्वैर्हि सुदुर्ज्ञानतरं सदा । ब्रह्मादिस्तंम्बपर्यन्तं जगत्स्थावरजङ्गमम् । सर्वमेतस्य महिमा स च ज्यायानतो हरिः । ब्रह्मांडेभ्योखिलेभ्यश्च भूतमात्रेभ्यएवच । ब्रह्मादिदेवसंघेभ्यो ज्यायानेव परः पुमान् । ओजसा रूपतो वापि यशसा वीर्यतोऽपि वा । विभुत्वादीशनाद्वापि ज्यायानेव जनार्दनः । एकतोवाजगत् कृत्स्नं एकतोवा जनार्दनः । सारतो जगतः कृत्स्नादतिरिक्तो जनार्दनः । न दैवं केशवात्परं । राजाधिराजस्सर्वेषां विष्णुर्ब्रह्ममयो महान्. परः पराणां सकला न यत्र क्लेशादयस्संति परावरेश'' इत्यादिभिर्विष्णोस्सर्वाधिकत्वप्रदर्शनपूर्वकं तदधिकदेवतानिषेधात्त्रिमूर्तिमध्ये रक्षकत्वेनावतीर्णस्य नारायणस्य ''अस्येशाना जगतोविष्णुपत्नी'' त्यादिना लम्क्षीपतित्वेनावगतस्य ''अद्भ्यस्संभूत'' इत्यत्र पूर्वानुवाकोक्तं सकलकारणभूतसहस्रशीर्षमहापुरुषत्वं ''वेदाह'' मित्यनेनैव वाक्येन प्रत्यभिज्ञाप्य तस्य श्रियःपतित्वमोक्षप्रदत्व, सर्वातिशायिदीप्तियोगित्व, सर्वदीप्तिहेतुत्वश्रवणात्तमेव सर्वोत्तरं महापुरुषं, यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोस्ति कश्चित् - वृक्ष इव स्तब्धोदिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेणसर्व'' मिति प्रत्यभिज्ञाप्य उपरिच ''सर्वानतशिरोग्रीव स्सर्वभूतगुहाशयः । सर्वव्यापी च भगवा'' निति सहस्रशीर्षत्व, सर्वभूतान्तरात्मत्व, सर्वव्यापकत्व निर्दोषकल्याणगुणाकरत्वानां ''एष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायणः. ज्ञानशक्तिबलैश्वर्य वीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विनाहेयैर्गुणादिभिः । भगवा निति शब्दोयं तथा पुरुष इत्यपि । निरुपाधि च वर्तेते वासुदेवे सनातन, इत्यादिभि र्नारायणासाधरणतया प्रमितानां प्रत्यभिज्ञापनादनयोर्वाक्ययोर्मध्येप्रयुक्तस्य संदंशन्यायान्नारायणपरत्वस्यावश्यकत्वात्तत इत्यस्य शब्दतोर्थतश्च प्रत्यभिज्ञापिततत्तद्धेतु परामर्शस्यैव न्याय्यत्वात्. अन्यथा यस्माद् पुरुषादपरं व्यतिरिक्तं परमुत्कृष्टं नास्तीति पूर्ववाक्येनोक्तं पुरुषमेव परामृश्य तद्व्यतिरिक्तस्योत्तरतरत्वप्रतिपादने पूर्वापरव्याघातप्रसंगान्नारायणानुवाकाभ्यामुपायान्तरनिषेधपूर्वकं मोक्षसाधनतया बोधितस्य लक्ष्मीपत्युपासनस्य अत्राप्यस्य निषेधपूर्वकं श्रवणा च्चोत्तरतरशब्देन सर्वोत्तरस्य नारायणस्यैव प्रतिपादनौचित्यात् - ''सोश्नु ते सर्वान्कामान् सह ब्रह्मणा विपश्चिता. रसो वै सः - रसगंह्येवायं लब्ध्वानन्दी भवति. परात्परं पुरुषमुपैति दिव्यं. नारायणसायुज्यमवाप्नोति'' इत्यादिभिर्नारायणरूपिणो ब्रह्मण एव...

मू- मित्याद्यनिपुणफणितीराद्रियंते न संतः ।

(सा.दी) केवलनारायणன் ईश्वरன். श्रीविशिष्टனன்றென்றது आदिशब्दार्थம். ஆனால் परतत्वமெதென்னவருளிச்செய்கிறார்...

सा - स्वा - ईश्वरत्वं. त्रिमूर्त्युत्तीर्णன் परदेवतैயென்கிறமதத்தைச்சொன்னபடி. इत्याद्यनिपुणफणिती:। इतिरत्र उक्तिपर:. आत्मैक्यं देवतैक्यं त्रयाणां तुल्यता त्रयाणामैक्यमन्यत्रऐश्वर्यमित्येवं रूपा उक्ति रादि: यासां अनिपुणफणितीनां ता इत्यर्थ: अत्रादिशब्देन त्रिमूर्त्यन्तर्गतस्य रुद्रस्यैव परदेवतात्वं. चतुर्मुखस्यैव परदेवतात्वं. श्रीविनिर्मुक्तस्य केवलनारायणस्य परदेवतात्व மென்கிற उक्तिகள் विवक्षितங்கள். अनिपुणा:. सम्यङ् न्यायनिरूपणानभिज्ञा:- एतेन तन्मतानामनुपपन्नत्वं ख्यापितं. नहित्वदुक्ति मात्रेणानिपुणफणितित्वं सिध्यतीत्यत आह. आद्रियन्ते न सन्त इति. सन्त:, ''सारासार विवेकज्ञा'' इत्याद्युक्तलक्षणा:. तथाविधसद्भिरनादरणादेव तासामनिपुणफणितित्वं सुव्यक्तमिति भाव:. तन्मतानामनुपपन्नत्वेन देवताविशेषनिर्णयप्रतिबन्धाक्षमत्वेपि...

(सा.प्र) प्राप्यत्वावगमात्प्राप्यान्तराभावेपि स्वप्रापकतया सेतुत्वसंभवात्स्थि तेर्निमित्तभूतस्य विष्णोर्विष्णु विभूतित्वोक्तावप्यन्य विभूतित्वानवगमाच्च नारायणस्यैव सर्वस्मात्परत्वनिर्धारणं युज्यत इति भाव: ।

(*) मास्तु त्रिमूर्त्युत्तीर्णं परतत्त्वं. तथापि ''ब्रह्म विष्णुरुद्रेंद्रास्ते सर्वेसम्प्रसूयन्ते'' इति ब्रह्माद्य विशेषेण विष्णोरप्युत्पति श्रवणात् हिरण्यगर्भस्समवर्तताग्रे भूतस्यजात: पतिरेक आसीत् प्रजापति: प्रजा असृजत. प्रजापतिर्देवानसृजत न सन्न चासच्छिव एव केवल:. विश्वाधिकोरुद्रोमहर्षि: हिरण्यगर्भंजनयामासपूर्वंहिरण्य गर्भं पश्यत जायमान'' मित्यादिभिर्हिरण्यगर्भ शिवयोस्सर्वकारणत्वश्रवणाच्च विष्णुं विहाय हिरण्यगर्भ श्शिवो वा सर्वस्मात्परत्वेनाङ्गीकार्य इत्यादिपक्ष: आदिशब्दार्थ:. अनिपुणै: तत्वनिर्णयसामर्थ्य हीनैरेवं रूपेणोच्यमानान्पक्षान् ''जायमानं ही''त्या द्युक्त जायमानं कालीन भगवत्कटाक्षवत्तया तत्त्वनिर्णय प्रवीणास्सन्तो नाद्रियन्ते. अयं भाव:. ''एको ह वै नारायण आसीन्न ब्रह्मा नेशान:. नारायणाद्ब्रह्मा जायते. नारायणाद्रुद्रो जायते. स प्रजापतिरेक: पुष्कर पर्णे समभवत्. यन्नाभिपद्मादभवन्महात्मा प्रजापतिर्विश्वसृग्विश्वरूप:. यो ब्रह्माणं विदधाति पूर्व, मित्या दिभिस्तत्तन्नामग्रहण पूर्वकमुत्पत्तिविनाशप्रतिपादनात्. भगवतस्तु ''अथ नित्यो नारायण:. नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमं । ऋते तमेकं पुरुषं वासुदेवं सनातन, मित्यादिभि:...

(सा.वि) कारणमित्यपर:पक्ष: । इत्यादीत्यादिशब्देन त्रयाणां मध्ये अन्यतमस्य ब्रह्मणो वा रुद्रस्य वा कारणत्वमिति पक्षस्संगृहीत:. एतेन सर्वेपक्षा:. இத்தேவதைகளில் प्रधानरानेत्यारभ्य साम्यैक्योत्तीर्ण व्यक्त्यन्तर पक्षங்கள் घटिயா. इत्युत्तरग्रन्थ संदर्भेण प्रतिक्षिप्ता वेदितव्या:. सन्त:, ब्रह्मनिष्ठा:. अनिपुण फणिती:, प्रमाणानां प्रतीयमानविरोधपरिहाराचतुरबुद्धीनामुक्ति:. नाद्रियन्ते...

(सा.सं) त्रिमूर्त्युत्तीर्ण ब्रह्मवादसंग्रह:...

मू– त्रय्यन्तैरेककण्ठै

(सा.दी) त्रय्यंतैरित्यादि. एककंठैरित्यादि. पक्षान्तरங்கள் परस्परविरुद्धமாமென்றுகருத்து.

(सा.स्वा) विरुद्धप्रमाणानांबहूनां सत्वात्कथं देवताविशेषनिर्णय इत्यत आह. त्रय्यन्तैरिति. ''एकएवरुद्रः नकिरिंद्रत्वदुत्तरः. अग्निस्सर्वा देवता'' इत्यादीनां कर्म भागस्थानां कर्मविधिशेषत्वेन तत्त्वैदंपर्यं नास्तीत्यभिप्रायेण त्रय्यन्तग्रहणं. एककण्ठैरिति. प्रमाणங்கள் मतान्तरங்களில் परस्पर विरुद्धங்களாக மத்தனைபோக்கி श्रीमन्नारायणன் परदेवतैயென்கிற सिद्धान्तத்திலீषத்தும் विरोधियாது. प्रत्युतஇவை யெல்லாமிந்த ஓரர்த்தத்திலே स्वरसங்களா இருக்குமென்றபடி.

(सा.प्र) नित्यत्वावगमादनित्यतया नारायणादुत्पन्नयोर्ब्रह्मरुद्रयो स्तस्मात्परत्वं नोपपद्यते. किंच. ''सोग्रे भूतानां मृत्युमसृजत्र्यक्षं त्रिशिरस्कंत्रिपादं खण्डपरशुं तस्य ब्रह्माबिभीत, इति. हिरण्यगर्भस्य भीति योगश्रवणाद्भगवतः ''एषसर्व भूतान्तरात्मापहतपाप्मा दिव्यदेव एको नारायण'' इत्यपहत पाप्मत्वश्रवणाच्च ब्रह्मरुद्रयोर्नारायणात्परत्वं नोपपद्यते. एवं पक्षान्तराणां श्रुतिस्मृतिविरोधं जानन्तः. प्रतप्तैर्भगवद्दिव्यायुधैर्गात्रेषु लांछनं । सततं च हरिक्षेत्रोद्धृत मृत्स्नोर्ध्व पुण्ड्रकं । पद्मबीज मयामाला तुलसीमणि मिश्रितावेषश्चानुल्षणश्शौकल्यं दन्त स्रक् पुण्ड्र वाससाम् विष्णोस्तत्सेश्रयाणां वा चेतनाचेतनात्मनां । आख्याय व्यपदेशश्च लक्षणानि सतांविदु'' रिति भरद्वाजोक्त सल्लक्षण लक्षिताः प्रामाणिकाः ''आलोड्य सर्व शास्त्राणि विचार्य च पुनःपुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायण स्सदा । सत्यं सत्यं पुनस्सत्यमुद्धृत्य भुजमुच्यते । वेदशास्त्रात्परं नास्ति न दैवं केशवात्पर'' मित्याद्युक्त प्रकारेण श्रीमन्नारायण एव सर्वेश्वर इति जानन्तः पक्षभेदान् ताननङ्गीकुर्वन्तीत्यर्थः (✲) ननु यद्य प्यन्ये पक्षभेदाःप्रमाणविरुद्धा इत्यनादरणीयाः. तथापि ''सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्म. आत्मा वा इदमेक एवाग्र आसीत्. ब्रह्म वा इदमग्र आसीत् - सर्वाणि ह वाइमानि भूतान्याकाशा देव समुत्पद्यन्ते. हिरण्यगर्भस्समवर्तताग्रे. भूतस्य जातः पतिरेक आसीत्. न सन्न चासच्छिव एव केवलः. एको ह वैनारायण आसी'' दित्यादिभिन्नाभिन्नतया सद्ब्रह्मात्माकाशहिरण्यगर्भशिवनारायणादीनां सकलजगत्कारणत्वेन प्रतिपादनात्सर्वासा मुपनिषदां च श्रुतित्वाविशेषेण प्रामाण्याविशेषात्कथं नारायण एव सकलजगत्कारणमिति सर्वस्मात् परत्वेन निर्णयः स्यात्; रथगोपुरादिष्विव समुच्चित्य नारायणत्वसंभवादित्यत्राह. त्रय्यन्तैरेककण्ठैरित्यादि - किं त्वखिलतनुत्वान्मुक्तिप्रदत्वान्मुक्त भोग्यत्वाच्छ्रीमत्वाच्च नारायण एव नःपतिरित्येककण्ठै. परस्परविरुद्धार्थप्रतिपादनराहित्यादेकार्थनिष्ठै

(सा.वि) नश्लाघन्ते. स्वसिद्धान्तमाह. त्रय्यन्तैरिति. अखिलतनुस्सर्वशरीरकः. श्रीमान्नारायणः नः, जीवानामस्माकं पतिरिति स्वीकारेण न प्रमाणानां कुत्रापि विरोधप्रतीतिः. सर्वेषां वाक्यानां एकतात्पर्यकत्वेन सामरस्यं सिध्यतीत्यभिप्रेत्योक्तं. एककण्ठैरिति. अत्रतादृशानैपुण्यं नेति सूचितं. परमाप्त

मू– स्तदनुगुणमनुव्यास मुख्योक्तिभिश्च श्रीमान्नारायणो नःपतिरखिलतनु र्मुक्तिदो

(सा.दी) श्रीमच्छब्दத்தால் केवल नारायणेश्वरत्वमतव्यावृत्ति. नारायणशब्दத்தால் व्यक्त्यन्तरोत्तीर्णपक्षव्यावृत्ति. नः पतिः என்று जीवानांपरस्परं ईश्वरனோடும் ऐक्यव्यावृत्ति. अखिलतनुरित्यादியால் देवतैक्य त्रिमूर्त्यैक्यतुल्यत्वादिपक्षव्यावृत्ति. अखिलशब्दमचिद्ब्रह्मरुद्रादि देवता...

(सा.स्वा) ஆனாலும் शैवपुराणादिகளான उपब्रह्मणங்கள் विरोधिயாநிற்க नारायणன் परदेवतैயென்று निर्णयिக்கशक्यமோ? வென்ன வருளிச்செய்கிறார். तदनुगुणेति. अत्रानुगुणत्वोक्त्या शैव पुराणादीनामननुगुणत्वं ख्याप्यते. मनुव्यासेति विशेषनिर्देशेन तेषां श्रुतिप्रसिद्धत्वेनाप्त तमत्वं तदुक्तीनां सर्वपरिगृहीतत्वंच व्यज्यते. मुख्यशव्देन प्राचेतस, पराशर, शुक, शौनकादयो गृह्यन्ते. ततश्चानुगुणोप-ब्रह्मणानां बहुत्वं द्योत्यते. तथा चानुगुणसर्व परिग्रहीत सात्विकबहूप ब्रह्मणोपब्रंह्मितैस्त्रैय्यंतैरर्थनिर्णयि सिद्धे अनेवंविधानां शैवपुराणादीनां शारीरकस्मृत्यधिकरण निश्चलीकृतविरोधाधिकरणनयेन विधूननं युक्तमिति भावः. पतिக்கு विशेषणமாய்க்கொண்டு श्रीயும் परदेवதையாயிருக்குமென்கைக்காக श्रीमानिति विशेषणं. कारणवाक्यस्थानामुपासनवाक्यस्थानांच रुद्रेन्द्रप्राणादिशब्दानां शरीरिपर्यन्तत्वेन सर्वेषामपि त्रय्यन्तानामैककण्ठ्यसिद्धिरित्येव मैककंठ्योपपत्तिसूचनार्थ मखिलतनुरित्युक्तिः. मुक्तिदोमुक्त-भोग्य इति परदेवतात्वघटकाकारोक्तिः आराध्यःफलप्रदश्चेतनविशेषो हि देवताशब्दार्थः. तस्य परत्वमपि हि. स्वव्यतिरिक्तपरम प्राप्याभावेन स्वस्यैव परमप्राप्यत्वमिति भावः. नः अखिल तनुर्मुक्तिदो

(सा.प्र) वेंदांन्तैस्तदनुगुणमनुव्यासवाक्यैः पराशरादिवाक्यैश्च अङ्गीकुर्वन्तीत्यर्थः - अयं भावः. ''सदेवे'' त्यादिवाक्येषु कण्ठोक्त्या सर्ववाक्यं सावधारणमिति न्यायाच्च सावधारणेषु प्रत्येकमैकैकस्य स्वव्यतिरिक्त समस्तकारणत्वबोधनात्समुच्चित्य कारणत्वानुपपत्तेः - कारणतोपास्यत्वबोधकवाक्यस्थित सामान्यशब्दानां विशेषवाचिपदे सति तत्पर्यवसानस्य छागपशुन्यायसिद्धत्वाद्विशेष्यवाचिपदानां सामान्य शब्दार्थ पर्यवसानस्य पशोश्छागत्वनिर्णीतौ निपुणन्यायपूर्वकं ''गर्दभादिषु तुल्यत्वं गर्दभप्रायकल्पित'' मित्युक्त प्रकारेणापहास्य'त्वात्. अनुवादानां पुरोवाद पर्यवसानेपि पुरोवादस्याप्यनेक विधत्वेन तत्रत्य सामान्यशब्दाना मनेकार्थवाचितया किंचिदर्थ व्यवस्थापकत्वानुपपत्या असाधारण्येन विशेषवाचिनः पदस्यैवार्थ विशेषव्यवस्थापकत्वात्...

(सा.वि) तममहर्षिवाक्योपब्रह्मणानुगुण्यं चात्रैवास्तीत्यभिप्रायेणोक्तं तदनुगुणमनुव्यासेति- ''भोक्ता भोग्यं। नित्यो नित्याना'' मित्यादिभिर्भेदस्य श्रुतत्वात्. ''यस्य पृथिवी शरीरं - यस्यात्मा शरीरं. यदंबुवैष्णवः कायस्तत्सर्वं वै हरेस्तनु'' रित्यादिभिस्सर्वस्य भगवच्छरीरतया प्रमाणसिद्धत्वात् ''अयमात्मा ब्रह्म तत्त्वमसि सर्वं खल्विदं ब्रह्म स ब्रह्मा स शिवस्सेन्द्रस्सोक्षरःपरमःस्वराट्'' इत्याद्यभेदनिर्देशानां शरीर शरीरिभावेनोपपन्नत्वात्. ''एको ह वै नारायण आसी'' दितीतरनिषेधपूर्वकं नारायणस्यैव जगत्कारणत्वोक्तेः ''न सन्नचासच्छिव एव केवल'' इति शिवशब्दस्य ''शाश्वतगं

(सा.प्र) अचिद्विशेषवाचि पदस्य विशेष्यसमर्पकत्वे ''कारणंतुध्येय'' इति सकल कारणभूतस्यै वोपास्यत्वात्तदुपासनेच ''यथाक्रतुरस्मिल्लोंके पुरुषोभवति. तथेतः प्रेत्यभवती'' त्युक्ततत्क्रतु न्यायादचित्प्राप्तेरावश्यकत्वात्तस्याश्चपूर्वमेवसिद्धत्वादपुरुषार्थत्वाच्चप्राप्यत्वानुपपत्या चितस्सर्वकारणत्वानुपपत्तेरीक्षणाद्यर्थ विरोधाच्च विशेष्यव्यवस्थापनानुपपत्तेश्चिद्विशेषा साधारणरुद्रेन्द्रवैश्वानरादि पदवाच्यानां प्रसिद्ध रुद्रेन्द्रादीनां कार्यत्व कर्मवश्यत्वयोः श्रुत्यैवप्रतिपन्नत्वात्तद्वाचिनां तेषां विशेषव्यवस्थापकत्वानुपपत्तेः श्रीपतेरसाधारणपुरुष, नारायण, विष्णु, वासुदेव, नृसिह्म, भगवदादि पदवाच्यस्य कुत्रापिकर्मवश्यत्वाश्रवणात्तदुत्पत्तेश्च ''अजायमानो बहुधाविजायत'' इत्यवताररूपत्व श्रवणेन कर्मकृतत्वस्यापोदितत्वादित रोत्पत्ते स्तथावादा भावात्तस्य सर्वकारणत्वोपपत्तेस्तस्य सकलजगत्कारणत्व बोधक श्रुत्यैकार्थ्यान्नारायण परत्वंसर्ववेदान्तवाक्यानामेष्टव्यं. अन्यथापुरोवादानां सद्ब्रह्मात्मपुरुषनारायणादिभिन्नार्थ बोधक पदवत्तया प्रत्येकं स्वव्यतिरिक्तसमस्तकारणत्वेनानेक बोधकत्व प्रसङ्गेन परस्परं व्याहतार्थत्व प्रसङ्गात्. किञ्च, ''वेदाह मेतंपुरुषं महान्तं. आदित्यवर्णं तमसः परस्तात्. तमेवं विद्वा नमृत इहभवति. नान्यः पन्थाविद्यतेयनाये'' त्यादिना लक्ष्मीपतेः स्वोपासनायाः मोक्षप्रदत्व मन्यनिषेधपूर्वक मुच्यते. तस्य ब्रह्मशब्द प्रवृत्तिनिमित्तभूत ब्रह्मणत्व रूपस्यानेक निष्ठत्वे परस्पर प्रतिक्षेपकत्वेनाप्रमाण्यापातादेकनिष्ठत्वे आवश्यके ''ब्रह्मविदाप्नोति परं. अथपरा यया तदक्षरमधिगम्यते. ज्ञात्वाशिवंशान्तिमत्यन्तमेति. ज्ञात्वादेवं मुच्यतेसर्वपाशैः शम्भु राकाशमध्ये ध्येयः. ज्ञात्वातं मृत्युमत्येति नान्यः पन्थाविमुक्तये - नारायणे प्रलीयन्ते. नारायणसायुज्यमवाप्नोती'' त्यादि सकलपरविद्यागतानां ब्रह्माक्षरशिव शम्भुनारायणादि शब्दानामे कार्थपर्यवसान बोधके नारायणानुवाके ''विश्वाक्षं विश्वशंभुवं. विश्वंनारायणं देवमक्षरं परमं प्रभुम् । पतिं विश्वस्यात्मेश्वरँ शाश्वतँ शिवमच्युतम् नारायणपरंब्रह्म तत्वं नारायणः परः नारायण परोज्योति रात्मानारायणः परः, सब्रह्मा सशिवस्सेन्द्र स्सोक्षरः परमस्वराट्''. इत्यन्तेन ''ब्रह्मानारायणः. शिवश्च नारायणः. शक्रश्चनारायण'' इत्यादिनाच तत्तदुपनिषद्गतब्रह्माक्षर देवशम्भु शिवपरंज्योतिः परमात्म परमस्वरा डित्यादिशब्दान्विशिष्योपादाय नारायण शब्देनसमानाधि करणतया निर्देशादेषां शब्दानां नारायण वाचित्वसिद्धे स्सर्व वेदान्तानां नारायण परत्वं ''सब्रह्मासशिव स्सेन्द्र'' इत्यनेन ब्रह्मरुद्रेन्द्राद्यसाधारण लिङ्गयुक्तानामुपनिषदां प्रतर्दनविद्यान्यायेन तत्तदन्तर्यामितया तत्तद्विशिष्टनारायण परत्वं प्रदर्शितं. ननु ''विश्वाधिको रुद्रोमहर्षिः. हिरण्यगर्भं जनयामास पूर्वं. विश्वाधिको रुद्रोमहर्षिः. हिरण्य गर्भं पश्यत जायमानं. कारणंतुध्येयः. सर्वैश्वर्य सम्पन्नस्सर्वेश्वरश्शम्भु राकाशमध्येध्येयः. नसन्नचासच्छिव एवकेवलः. तस्मात्सर्वगतश्शिवः. विश्वंस्यैकंपरिवेष्टितारमीशंतंज्ञात्वा. यदा

(सा.प्र) चर्मवदाकाशं वेष्टयिष्यन्तिमानवा:- तदाशिवमविज्ञायदु:खस्यान्तोभविष्यति - हृ त्पुण्डरीकं विरजं विशुद्धं विचिन्त्यमध्ये विशदं विशोकं - अनन्तमव्यक्त मचिन्त्य रूपं शिवं प्रशान्त ममृतंब्रह्मयोनिं - तदादि मध्यान्तविहीन मेकं विधुंचिदानन्द मरूप मद्भुतं - उमासहायंपरमेश्वरंप्रभुं त्रिलोचनं नीलकण्ठंप्रशान्तं - ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमस:परस्तात् - सब्रह्मासशिव स्सेंद्रस्सोक्षरः परमस्वराट्. सएवविश्व स्सप्राणास्सकालोग्निस्सचन्द्रमाः - सएवसर्वं यद्भूतं यच्छभव्यं सनातनं - ज्ञात्वातं मृत्युमत्येति नान्यः पन्थाविमुक्तय'' इतिश्रुत्यानुगुण्यात्सर्ववेदान्तानां शिवपरत्वंकिं-नस्यादिति चेन्न. ''ब्रह्म वा इदमग्र आसीत् - तदेक मेव तदेकं सन्नव्य भवत्तच्छ्रेयोरूपमत्यसृजत - क्षत्रंयान्येतानि क्षत्रादिन्द्रोवरुणस्सोमोरुद्रः पर्जन्योयमोमृत्युरीशानइति - एकोहवैनारायणः आसीन्नब्रह्मानेशानः - एकोहवैनारायण आसीन्नब्रह्मानशंकरः तत एते व्यजायन्त विश्वेहिरण्यगर्भोग्नि यमवरूण रुद्रेन्दाः विष्णुस्तदासी द्धरि रेव निष्कलङ्कः अग्निर्वै देवानामवमोविष्णुःपरमः. तदन्तरेण सर्वान्या देवताः - अग्निरवमोदेवतानां विष्णुः परमःसोन्त स्सरुद्र स्सप्राणभृत्सप्राणनाय कस्स ईशोयोहरि-रीड्योनन्तोयो विष्णुर्यः परोवरीयान्. नारायणा द्रुद्रो जायते. तदिदा सभुवनेषु ज्येष्ठं. यतोजज्ञउग्रस्त्वैष-नृम्णो सद्योजिज्ञानो निरणातिशनून्. ललाटात्क्रोध जोरुद्रो जायते अथ पुनरेव नारायणस्सोन्यंकामं मनसाध्यायीत. त्र्यक्ष श्शूलपाणिः पुरुषोजायत. आभूद्वाइदमप्रतिष्ठे'' त्यारभ्य ''भूतानांच प्रजापति स्संवत्सरायादीक्षिते'' त्युक्त्वा ''भूतानां पतिस्संवत्सर उषसिरेतो सिञ्चत्. तत्संवत्सरे कुमारोजायत. सोरोदीत्. तंप्रजापतिरब्रवीत्. कुमार किं रोदिषि. यच्छ्रमात्तपसोधिजातो सीति. सोब्रवी दनप हत पाप्माहमस्मि, नाम मेदेहिपाप्मनोपहत्या इति. तंप्रजापति रब्रवीत्. रुद्रोसीति. तस्य तन्नामाकरोत्. अग्निष्टद्रूपमभवत्. अग्नेर्वैरुद्रोयदरोदीत्. तस्माद्रुद्रस्सोब्रवीत्. जायान्वा अहमस्मिदे ह्येवंनामेति. तंप्रजापतिरब्रवीत्. भवोसीति. शर्वोसीति. ईशानोसीति. पशुपतिरसीति. उग्रोसीति. भीमोसीति. महादेवोसीति. प्रजापतिर्देवानसृजत. तेपाप्मनासन्दिता अजायंत. विरूपाक्षायदत्तांतु. जयेब्रह्मणःपुत्रा-यज्येष्टायश्रेष्ठाया मोघायकर्माधिपतये सोब्रवी द्वरं वृणा अहमेव पशूनामधिपतिरसानीति तस्माद्रुद्रः पशूनामधिपतिः तस्य देवस्यमीडुषोवया विष्णोरेषस्य, प्रगृहे हविभि विदेहि रुद्रो रुद्रीयं महित्वं इत्यादिभिः शिवस्य कार्यत्व, कर्मवश्यत्व ब्रह्म पुत्रत्व, अनपहत पाप्मत्व, देवता वरदान लब्ध पशु पति विष्ण्वाराधनकत्वा देरगवतत्वाद्विश्वाधिक इत्यस्यश्वेताश्व तरगतत्वात्त स्याश्चोपक्रमे ''ब्रह्म वादिनो-वदन्ति. किंकारणं ब्रह्मे'' त्यारभ्य ''आत्माप्यनीश स्सुखदुःखयो'' रित्य नेन कालस्वभाव नियत्यात्मा दीनामचेतनत्व, कार्यत्व, कर्म वश्यत्वादिना कारण ब्रह्मत्वं निषिध्यते. ''ध्यनयोगानुगता अपश्यन् देवतात्मशक्तिंस्वगुणैर्नि गूढां यःकारणानि निखिलानितानि. कालात्मयुक्तन्यधितिष्ठत्येकः. अनन्तश्चात्मा विश्वरूपोन्य कर्ते'' त्यादिना ''एष सर्व भूतान्तरात्मापहत पाप्मा दिव्योदेव एको नारायणः. सहस्र...

(सा.प्र) शीर्षदेव'' मित्यारभ्य. ''यच्चकिंचिज्जगत्यस्मिन्दृश्यतेश्रूयतेपिवा. अन्तर्बहिश्चतत्सर्वं व्याप्य नारायणः स्थितः. एकोदेव स्सर्वभूतेषु भूत स्सर्वव्यापी सर्वभूतान्तरात्मा. मृत्योर्वैप रोदेव एकीभवति. येनेदं विश्वं परिभूतं यदस्ति. प्रथमजं देवंहविषा विधेम. स्वयंभु ब्रह्मपरमं तपोयत्. श्रद्धया देवः. यस्सदेवो मयादृष्टःपुरा पद्माय तेक्षणः । सएषपुरुष व्याघ्र स्संबंधीते जनार्दन'' ।। इत्यादिभिर्नारायणा साधारणतया वगत सर्वान्तिर्यामित्व निरुपधि देवशब्द वाच्यत्वयोः प्रत्यभिज्ञापनादनन्त शब्दोपादानात् - ''ज्ञात्वादेवं मुच्यते सर्वपापैः, क्षरं प्रधानं अमृताक्षरंहरः, क्षरात्मनाविशते देव एकः ज्ञात्पादेवं सर्वपाशहानिः. अद्भुवं सर्वतत्वैर्विशुद्धं. एकोहिदेवःप्रदिशोनुसर्वाः. यो देवो अग्नौयो अप्सुयो विश्वं भुवनमाविवेश - य ओषधीषु वनस्पतिषु तस्मै देवाय नमोनमः.'' इत्यादि लक्ष्मीपत्यसाधारण सर्वान्तिर्यामित्व, मोक्षप्रदत्वयोरुक्तेरेतदुभयसमभिव्याहार बलादेत दुभयं त देवलक्ष्मीपत्यसाधारणनि-रूपक देवशब्दवाच्यत्वस्य चप्रत्यभिज्ञानात् - व्यक्तं भारते - ''विश्वमीश'' इत्यत्रेश शब्दस्य पूर्वोक्तानां व्यक्ताव्यक्तात्मक विश्वभरणहेतु सामर्थ्य सत्तासाधकत्वात् - ''अनीशश्चात्मे'' त्युत्तरवाक्येनैव पूर्व वाक्यगतस्येश शब्दस्यर्योगिकत्व स्फुटीकरणात्. ''अनन्तश्चात्मा विश्वरूपो ह्यकर्ते'' त्युपक्रम वाक्येचात्मशब्देन ''आप्नोतीत्यात्मा'' इति व्युत्पत्या सर्वदेश सर्वकाल व्याप्त्यभि धानाद्देश काल परिच्छेद राहित्ययोर्विरूप शब्देन वस्तु परिच्छेद राहित्यस्य चोक्तेर्यौगिकत्वेन शङ्कितु मयोग्यस्य भगवति रूढ स्यानन्दपद स्योपादानात्. द्वितीय खण्डेचोपासन प्रकार मुक्त्वा तद्विशेष्यस्य नारायणा साधारणतया श्रुति पुराणादि प्रसिद्ध समुद्र शायित्व लिङ्गोप क्रमाम्भ सीत्यनुवाकगत वाक्येनैव समुद्रशायिनः प्रत्यभिज्ञापन पूर्वकं पुंसूक्तगतैरेव बहुभिर्वाक्यैः पुंसूक्त प्रतिपाद्यस्यच प्रत्यभिज्ञापना च्चुतुर्थे चाम्भ सीत्यनुवाक गतैरेव ''तदेवाग्निः इत्यादिभिश्च बहुभिर्वाक्यै स्तत्प्रकरण गततया अणो रर्णायान् इत्यनुवाक गतैर्वाक्यैश्च समुद्र शायिनः प्रत्यभिज्ञापनान्मोक्षप्रदत्वोक्तेर्देव शब्दस्य सर्वान्तिर्यामि विषय उपक्रमे प्रयुक्तस्य अत्रापि बहुश उपा दानात्पञ्चमेपि ''एवं सदेवो भगवान्वरेण्य'' इत्येव मेष महाशब्दो मैत्रेय भगवानिति. परब्रह्म भूतस्य वासुदेवस्य नान्यग इति वासुदेव शब्दवाच्य नारायणासाधारण तयोक्त भगवच्छब्दे नोपादानात् - ''सलिलस्य मध्य'' इति समुद्र शायित्वोक्तेः ''विश्वस्यैकं परिवेष्टितार'' मितिसर्वान्तिर्यामित्वोक्तेः ''येविदुस्ते जहुस्तनु'' मिति मोक्ष प्रदत्वोक्ते र्देवशब्दस्य बहुश उपादानात्. षष्ठेच निरुपपद देवशब्द स्योपादानात्सर्वान्तिर्यामित्व स्यापि बहुश आवर्तनान्मोक्षप्रदत्वस्यापि बहुश आवर्तनात् - ''भुवनस्य सलिलस्य मध्य'' इति समुद्र शायित्व प्रत्यभिज्ञापनाल्लक्ष्मीपत्यसाधारणस्यन्यनिषेध विशिष्ट मोक्षसाधन वेदन विषयत्वस्य निर्देशा न्नारायण विषय तयोपनिषदन्तरेषु स्फुटा वगतानां वाक्यानां तत्र तत्र बहुश उपा दाना दन्तेचसर्वान्तिर्यामि विषय तयोप क्रमोक्तस्य निरुपपद देवशब्दस्यैव ''यदा चर्म वदा काशंवेष्टयि...

(सा.प्र) ष्यन्तिमानवाः । तदादेव मविज्ञायदुःखस्यान्तो भविष्यति । यस्यदेवेपराभक्ति'' रित्युपसंहाराच्च भूयो लिङ्गाना मनुरोद्धव्यत्वात् शम्भुशिवशब्दयोश्च शिव मस्माद्भवतीति व्युत्पत्या, शिवयति परिशुद्धान्करोतीति व्युत्पत्याच नारायण परत्वोपपत्तेः. ''शाश्वतँशिवमच्युतं - नारायणं. शिव श्शिवानां. अशिवो शिवानां. शिवास्ते सन्तु पन्थानः - शिवं कर्मास्तु. विश्व शम्भुवं. विश्वं नारायणं देवं - शम्भुस्स्वयं द्रुहिणः. शृणुमेवचनं शम्भो पितामह पितामह । इति नारायण श्शम्भु र्भगवान् जगतः प्रभु'' रित्यादि प्रयोगै स्साधारण्यावगमाच्च कारण वाक्यस्थयो र्नारायण विषयत्वेनान्यथासिध्या शिवशब्दस्य नारायणा तिरिक्त वस्तु बोधकत्वानुपपत्तेरीशशब्दस्य ''दिशामीश'' इत्यादिषु सर्व साधारणतया प्रसिद्धेः निरुपपदस्यापि तस्य निरुपाधिकसर्व स्वामितया. ''दास भूता स्स्वत स्सर्वे ह्यात्मानः परमात्मनः । अतोहमपिते दास इति मत्वानमाम्यह'' मिति रुद्रेण स्वस्य सर्वेषांच निरुपाधिक स्वामित्वेनोक्त नारायण विषयत्व स्यैवमुख्यत्वात्. ''शम्भुर्ध्येयः. शिव एव केवलः. ईशंतंज्ञात्वा तथा शिव मविज्ञाये'' त्या दीनां नारायण विषयत्व मेव. एवञ्च श्वेताश्वतरोपनिषदि उपक्रमे. ''अच्युतानन्त गोविन्द मन्त्र मानुष्टु भंपरं । ओं नम स्सम्पुटी कृत्य जपन्विष धरोहरः । अच्युतानन्त गोविन्द नामोच्चारण भेषजा'' दित्यादि प्रसिध्यालक्ष्मीपत्यसाधारणस्य मोक्षहेतूपासन विषयत्वस्य बहुधानिर्देशात्सर्वान्तिर्यामित्वस्यच, बहुधानिर्देशान् मध्येच भगवच्छब्दवाच्यत्वस्यनिरुपपदपुरुष शब्दवाच्यत्व महापुरुषत्व. सहस्रशीर्ष पुरुषत्व, सर्वोत्तरत्वादीनां प्रत्यभिज्ञापनपूर्वकं सर्वान्तिर्यामित्वस्य बहुश उपादानात्. ''योहखलुवा अस्य सात्विकांशः सोसौब्रह्मचारिणो योयंविष्णुः. यत्सत्वंयोहरिर्देवोयोहरिस्तत्परंपदं । सत्वेनमुच्यतेजन्तुस्सत्वं नारायणात्मकं । सत्वेन सर्वगोविष्णुस्सर्वत्मा सदसन्मयः । तत्स्वरूपात्स्वयंविष्णुस्सत्वेनपुरुषोत्तमः । सत्वेन सर्वभूतानां परमेश्वर'' मितिनारायणा साधारणतयावगतस्य सत्वप्रवर्तकत्वस्य स्फुटंप्रतिपादनाद्बहुधामोक्ष प्रदत्वोक्तेरन्तेचसमुद्र-शायित्वसमाधिकरहितत्वसर्वोत्तरत्वादीन्यनिषेधपूर्वक, मुमुक्षूपास्यत्व चतुर्मुख जनकत्वादि-नारायणासाधारणानां प्रत्यभिज्ञापनाच्चोप्रक्रमोपसंहाराभ्यासोपूर्वताफलं. अभ्यासोर्थवादोपपत्तिश्च लिङ्गंतात्पर्य निर्णय इत्युक्त षड्विध तात्पर्य लिङ्ग सद्भावान्नारायण परत्वं सिद्धम्. ननु प्रत्यभिज्ञायालिङ्गत्वाच्छिवादि श्रुतिभ्यो दौर्बल्य मितिचेन्न - शिवादिश्रुतीनां सामान्यशब्दतयान्यधासिद्धि संभवादनन्त फलश्रुते र्भगवत्पर श्रुतेश्चोक्तप्रकारेणानन्यथासिद्ध्या तादृशश्रुति संहितसलि लशायित्वादि लिङ्गानामाकाशाधिकरणे सामान्यानेक श्रुतिभ्योप्यनन्यधासिद्धलिङ्ग प्राबल्योक्तिन्यायेन प्राबल्याच्छ्वेताश्वतरोप निषदोक्तनारायण परत्वं सुगमं, अथर्व शिरस्युपक्रमे सर्वान्तरात्मत्वस्योपरिचानन्त शब्दवाच्य त्वस्य, पुरुषशब्दवाच्यत्वस्य, मोक्ष प्रदत्वस्य प्रत्यभिज्ञापनात्. तिस्रोमात्राः परस्तुस'' इति प्रणवार्थ मात्रा प्रतिपाद्य पुरुषत्व प्रत्यभि ज्ञापनात्सर्व सामानाधि करण्य प्रतिपादनेच प्रति पर्यायं भगवच्छब्द वाच्यत्वेनैव सर्व सामानाधिकरण्यनिर्देशाच्च...

(सा.प्र) नारायणपरत्वमपरिहार्यम्. अथर्वशिखायामपि ''प्रोक्तोविष्णुश्शिखाया मयमपिपुरुषः प्राप्तत।रार्थमात्र'' इत्युक्त प्रकारेणयोवसाने चतुर्थ्यर्थ मात्रासाविद्युमति. सर्व वर्ण पुरुष दैवत्येति तत्प्रतिपाद्यस्य पुरुषत्वोक्त्यामोक्षप्रदत्वान्तर्या मित्वयो रुक्त्याच नारायण परत्व मवर्जनीयं. किञ्च, ब्रह्माक्षरादि शब्दवन्मुमुक्षूपास्य सर्वकारण प्रकरण पठिताः शम्भु शिवरुद्रे शानादिशब्दाः ''सहस्र शीर्षा पुरुष'' इत्यारभ्य मोक्ष प्रदतया सकल जगत्कारण तयोक्त सहस्र शीर्ष देव विषय स्यानन्य साधारणस्य नारायण शब्दस्यार्थे छाग पशुन्याया त्पर्यवस्यन्ति. किञ्च. ''सोकामयत बहुस्यांप्रजायेयेति. सतपो तप्यत. सतपस्तप्त्वा. इदं सर्व मसृजत. यदिदं किञ्च. तत्सृष्ट्वा. तदेवानु प्राविशत्. तदनुप्रविश्य. सच्चत्यच्चाभवत्. हन्ताहमिमास्तिस्रो देवताः. अनेन जीवेनात्मना नुप्रविश्यनामरूपेव्याकरवाणि. अनुप्रविश्य नामरूपेभ्यो व्याकरो'' दितिहि. सर्वान्तिर्यामित्वेनैव सर्वकारणत्वावगमा दन्तर्यामित्वस्यच. ''एषसर्वभूतान्तरात्माऽपहतपाप्मादिव्योदेवएकोनारायण, इत्यादिभिर्नारायणासाधारण्या वगमात्सर्वविदान्तानांनारायणपरत्व मवर्जनीयं. किञ्च, शम्भुशिवशब्दयोः ''कारणन्तुध्येयः - सर्वैश्व सम्पन्न स्सर्वेश्वर श्शम्भु राकाशमध्ये ध्येयः. यदातमस्तं नदिवानरात्रं नसन्नचा सच्छिवयेव केवल.'' इति कारणवादेन विधिपरयो र्वाक्य योःस्थितत्वात्पुरोवादरूप पुरुषसूक्त सुबालोपनिषदादिषु सकल कारणतयोक्त नारायणविषयत्वमेव निरवधिक सुखप्रदत्वाभव त्वात्यन्तिक शुद्धिहेतुत्वरूपावयवार्थ पौष्कल्याद्युक्तं. ननु शम्भुशिव शब्दयोरुमापति समाख्यत्वात्तत्परत्वं किंनस्या दितिचेन्न. ''विश्वाक्षं विश्यशम्भुवं. विश्वंनारायणं देवं. शाश्वतग्ंशिवमच्युतं. सर्वश्शर्वश्शिवस्थाणु'' रिति - ''नारायणश्शम्भुर्भगवानजःप्रभु'' रित्यादिषु तयोर्नारायणसमाख्यत्वस्याप्य वगमेन व्यवस्थापकत्वानुपपत्तेः किंच, ''यदातमस्तं न दिवानरात्रं. न सन्नचासच्छिवएव केवल'' इत्येव तमोधिष्ठातार मनूद्य तस्यशिवत्व ज्ञापकतयोपुरोवादाकांक्षायामनुवादलिङ्गशून्यतयापुरोवादभूतायांसुबालोपनिषदि ''यस्याव्यक्तं शरीरं. यस्याक्षरं शरीरं. यस्यमृत्युश्शरीरं - एष सर्वभूतान्तरात्मापहत पाप्मादिव्योदेव एकोनारायणः. अव्यक्तमक्षरेलीयते. अक्षरंतमसिलीयते. तमः परेदेव एकीभवति. तस्मात्तमस्सञ्जायत'' इत्यादिभिर्बहुधानारायणशब्दवाच्यस्यैवतमोधिष्ठातृत्व प्रतिपादनात् - स्मृतिष्वपि. ''आसीदिदंतमोभूत'' मित्या रभ्य ''प्रादुरासीत्तमोगुण'' इत्यन्तेन तमोधिष्ठातृत्व मुक्त्वातस्यरेन नारायण स्मृत इत्युक्त त्वेन नारायणत्वोक्तेः - ''तमआसीत्तमसागूढमग्रे प्रकेत'' मित्यस्यापि तमसो नारायणाधिष्ठितत्वा विरोधित्वात्तमः प्रापकसर्ववाक्यानां सुबालोपनिषदेकार्थस्या वश्यकत्वाच्च शिवशब्दस्य नारायणपरत्वं सिद्धं. किञ्च, ''अग्निमीडेपुरोहितं - अभित्वाशूर नोनुम. स्तौमीन्द्रंनाधितेजोहवीमी'' त्यादिवत्स्ववाक्यात् स्तुतिपरत्वा वगमात् - ''अर्हन्विभर्षिसायकानिध न्वेत्याह स्तौत्येवैनमेतत् - ततोदेवा ऊर्ध्वबाहव रुद्रमस्तुव, न्नित्यादेरिव वाक्यान्तरेणापि स्तुति परत्वानवगमात् -''नमस्ते अस्तुमामाहिग्ंसीः - मानस्तोकेतनये मान...

(सा.प्र) आयुषि मानो गोषुमानो अश्वेषु रीरिषः. वीरान्मानो रुद्र भामितोव धीर्ह विष्मन्तोनमसा विधेमते. अग्नेनयसुपथाराये अस्मान्. भूयिष्ठांतेनम उक्तिं विधे'' मेत्यादि ष्वि वनमस्कारा निष्ट निवृत्तीष्ट प्राप्ति प्रापकाना मुप स्थापक शब्दशून्यतया स्तुतिपरत्व लिङ्गशून्यत्वात्. ''विश्वाधिको रुद्रो महर्षिः. एकएव रुद्रोन द्वितीयायतस्थे. अनपहत पाप्मावा अहमस्मि नाम मेदेहि पाप्मनो पहत्या इति. विश्वस्मा इन्द्र उत्तरः. तस्य वज्र मादाय शीर्षाण्यच्छिनत्. तंभूता न्यभ्य क्रोशन् ब्रह्महन्निति. अग्नि रग्रेप्रथमोदेवतानां. अग्निं वैजातं पाप्मा जग्रा हे'' त्यादिषु सर्वोत्कृष्ट तया प्रति पन्नाग्नि रुद्रादेः कर्म वश्यत्वावगमात्पुं सूक्त प्रतिपाद्यस्य कर्म वश्यत्वानवगमात्तस्य विशिष्यापहतपाप्मत्वश्रवणात्. ''आकाशोह वैनाम रूपयोर्निर्वहिता. यदातमस्तं नदिवान रात्र'' मित्यादीना मिवानु वादरूपत्वा भावात्. ''तदेषा भ्युक्ता तदेत दृचा भ्युक्त'' मिति वत्सोपदिष्टार्थ साक्षि त्वेन प्रमाणान्तरानुपस्थापनः दन्यनैरपेक्ष्येण स्वार्थ व्यवस्थापकत्वात्. ''तदेतदृचा भ्युक्ता. एतावानस्य महिमा. अतो ज्याया ँश्च पूरुषः पादोस्य विश्वा भूतानि. त्रिपा दस्या मृतं दिवी'' त्यादिभि रस्य प्रमाणान्तरार्थ व्यवस्थापक तयोदाहृत त्वेन कैमुतिकन्यायेन स्वार्थ व्यवस्थापकत्वात्सर्वेषु वेदेषु पठिततयापरिग्रहाधिक्यात्तत्तद्वेदगता नेकार्थ शब्दयुक्त तत्त्वपर वाक्या नामर्थ व्यवस्थापनाया पेक्षित विशेष समर्पकत्वो पपत्तेः. ''एष वैष्णवी नाम संहिता. एतां प्रयुञ्जन्विष्णुं प्रीणाती'' ति छान्दोग्ये पुंसूक्तस्य विष्णु परत्वोक्तेः. अथर्वणे अष्टादश महा शान्ति प्रकरणेतत्तद्दैवत्य मन्त्र विनियोगा वसरे ''वैष्णव्यं पुरुष सूक्त'' मिति वैष्णव्यां शान्तौ विनियोगात्. ''एत त्पुरुष सूक्तंहि सर्व वेदेषुपठ्यते । अतःश्रुतिभ्यस्सर्वाभ्यो बलवत्स मुदी रित'' मिति मोक्षधर्मे सर्वाभ्यश्श्रुतिभ्यो बलवत्तरोत्वोक्त्या ''वेदेषुपौरुषं सूक्तं धर्म शास्त्रेषु मानवं । भारते भगवद्गीता पुराणेषुच वैष्णवं । श्रुतिषु प्रबला मन्त्रास्तै ष्वप्यध्यात्मवादिनः । तत्रापिपौरुषंसूक्तंनतस्माद्विद्य तेपर'' मितिपाद्मेपि. पुरुषसूक्तस्य प्राबल्योक्त्या अस्यतत्व निर्णये अन्य नैरपेक्ष्योपपत्तेः. एवं भूत पुंसूक्तस्य ''परमव्योम वासीच पुरुषो देवता भवत् । यत्र यत्र कर्म भ्रष्टोवा, यज्ञकर्म भ्रष्टोवा, तत्र तत्रपुरुषार्थाय पुरुष सूक्त मुच्चार येत्. पूर्व सिद्धत्वात्पुरुष इति विज्ञायत'' इति शौनक वाधूल सूत्र वचनाभ्यां विष्णुदैवत्य त्वावग मात्. यम स्मृतौ. ''ब्रह्म यज्ञेजपेत्सूक्तंपौरुषं चिन्तयन्हरिम्। ससर्वं जपते वेदान् साङ्गोपाङ्गान्द्विजोत्तमः,। जप्त्वातुपौरुषं सूक्तं मुच्यते गुरुतल्पगः । योनूचानं द्विजं मर्त्यो हतवानर्थलोभतः। सजपेत्पौरुषं सूक्तं स्मरन् विष्णुं जले सकृदित्युक्तेः'' ''आद्ययावाह येद्देव मृचातु पुरुषोत्तम'' मित्यारभ्य ''षोडश्योद्वासनं कुर्या देव माराधयेद्धरि'' मित्यनेन शौनकेन विष्णवाराधने विनियोगः ''ततोगत्वाहरेर्वेश्म पावनं सुमनो हरं. सर्वदा पौरुषं सूक्तं मनसैव जपेच्छुचि'' रिति वासिष्ठयोग रत्नोक्तेः. ''सर्वं वशेम मभवे दिति सञ्चिन्तयन्मुनिः। ध्याये त्पुरुष सूक्तेन...

(सा.प्र) प्रतिपाद्यंजनार्दन'' मित्युत्तरगार्ग्योक्तः ऋग्भिष्षोडशभिस्सम्यगर्चयित्वाजनार्दनं । चरुं पुरुष सूक्तेन जुहुया त्पुत्रकाम्यये'' तिऋग्विनोक्तेः. आसीनः प्राङ्मुखः शुद्धश्चिन्तयन्मन साऽहरिं । पौरुषेणैव सूक्तेन जुहुयाद्धव्य वाहन'' मिति योग वसिष्ठोक्तेः ''पठेत्तु पौरुषं सूक्त मेकान्ते संस्मरन्हरि, मिति पाद्मोक्तेश्चास्य परत्व शङ्कादवीयसि पुंसूक्ते तत्समानार्थान्तर नारायणेच पुरुष शब्दस्य नारायणा साधारणत्वा वगमात्तथैव नारायणे पुरुष शब्द मुख्यार्थत्वा साधारणस्य ''भगवानिति शब्दोयं तथा पुरुष. इत्यपि - निरुपाधीच वर्तेते वासुदेवे सनातने । सर्वलोक प्रतीत्याच पुरुषः प्रोच्यते हरिः । तंविना पुण्डरीकाक्षं कोऽन्यः पुरुष शब्दभाक् । गोवर्धनादि धरणा न्नाथनन्द सुतोपिसन्। पुरुषस्यांशसंभूत त्वाश्चय न्निरणैष्महि । असौ रामो महा बाहु रति मानुष चेष्टया । तेजो महत्तया चापि सस्मर यतिपूरुषं यथाभास्करशब्दोयं आदित्ये प्रतितिष्ठति । यथाग्नौतु बृहद्भानुः यथाबायू सदागतिः। यथा पुरुष शब्दोयं वासुदेवे वतिष्ठते । तथा शङ्कर शब्दोयं महा देवे व्यवस्थितः । यएव वासुदेवोयं पुरुषः प्रोच्यते बुधैः। प्रकृतिस्पर्श राहित्यात् स्वातन्त्र्यात् वैभवादपि । सएव वासुदेवोयं साक्षात्पुरुष उच्यते । स्त्रीप्राय मितरत्सर्वं जगद्ब्रह्मपुरस्सर'' मित्यादिभिर्वचनैः पाद्म हरि वंशोत्तर श्रीरामायण स्कान्द नारसिह्मादिपुराणेषु कण्ठोक्तेर्मुख्य वृत्या नारायण पुरुष शब्देन प्राप्यं निर्दिश्य प्राप्ति साधनस्यैव कैवल्योपनिषदुपक्रमे ''अथाश्व लायनो भगवन्तं परमेष्ठिन मुपसमेत्यो वाचाधीहि भगवन् ब्रह्मविद्यां. वसिष्ठसदायतिभि स्सेव्य मानानि गूढा यथा चिरात्सर्वपापं व्यपोह्य. परात्परं पुरुषमुपैति विद्वा'' नितिपृष्टत्वात्, ''तस्मैसहोवाच पितामहश्च श्रद्धाभक्तिज्ञानयोगादवेहि भगवन्नकर्मणा नप्रजये'' त्यारभ्य ''परामृतात्परिमुच्यन्तिसर्वे'' इत्यन्तमुक्त्वा ''विविक्तदेशेच सुखा सनस्थश्शुचिस्समग्रीव शिरश्शरीरः. वन्याश्रमस्थस्सकलेन्द्रियाणि निरुध्य भक्त्यास्वगुरुं प्रणम्य. हृत्पुण्डरीकं निरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकं - अनन्त मव्यक्त मचिन्त्य रूपं शिवं प्रशान्तममृतं ब्रह्मयोनिं - तथादिमध्यान्त विहीनमेकं विभुं चिदानन्दमनूपमन्तं - उमासहायं परमेश्वरंप्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं - ध्यात्वामुनिर्गच्छतिभूतयोनिं समस्तसाक्षिं तमसःपरस्तात्. सब्रह्मासशिवस्सेन्द्रस्सोक्षरः परमस्स्वराट् - स एवविश्वस्सप्राणस्सकालोग्निस्सचन्द्रमाः. सएवसर्वंयद्भूतं यच्चभव्यं सनातनं. ज्ञात्वातं मृत्युमत्येतिनान्यःपन्थाविमुक्तय.'' इतितदुत्तरत्वेनावतीर्णत्वावगमादस्मिन्वाक्येचमध्ये ''हृत्पुण्डरीक'' मिति सर्वभूतान्तरात्म स्वरूपवस्तु परिच्छेदराहित्यस्यपृथगुक्त्या अन्यथासिद्धशङ्कानाघ्रातस्यानन्दपदस्यो पादनात्पूर्णताधिकरण न्यायात्. ''रुद्रोवैक्रूर'' इतिक्रूरतयोक्ताद्रुद्रात् ''शिवंप्रशान्त'' मितिव्यतिरेकावगमाद्ब्रह्माशिव इत्यादि नारायणानुवाक प्रत्यभिज्ञापनात्. ''सएवसर्वंयद्भूतंयच्च भव्यं सनातन'' मित्यादिना - पुरुषएवेदग्ं सर्वं यद्भूतं यच्चभव्य ''मित्यादि पुंसूक्तप्रत्यभिज्ञानात् -''तमेवं विद्वानमृतइह भवति. नान्यःपन्था अयनायविद्यत'' इत्युक्त

(सा.प्र) उपायान्तर निषेधपूर्वक मोक्ष साधनोपासनस्य ''ज्ञात्वातंमृत्युमत्येतिनान्यःपन्थाविमुक्तय'' इत्यनेन प्रतिपादनात्. ''तस्माद्विराडजायत'' इत्यारभ्योक्त सर्वकारणत्वस्य ''कोह्येवान्यात्कः प्राण्यात्. नहिपालनसामर्थ्यमृते सर्वेश्वरंहरि'' मित्युक्तसर्वरक्षकत्वस्य ''नारायणाद्द्वादशादित्या रुद्राव सवस्सर्वाणि छन्दाग्सि. नारायणादेवसमुत्पद्यन्ते. नारायणे प्रलीयन्ते'' इत्युक्तस्य सर्वोत्पत्ति लयप्रकृतित्वस्य ''मय्येवसकलं जातं मयिसर्वंप्रतिष्ठितं । मयिसर्वंलयंयातितद्ब्रह्मद्वयमस्म्यह'' मिति प्रत्यभिज्ञापनादस्यापिनारायणविषयत्वमेव ''भूयोलिङ्गा नामनुरोद्धव्यत्वा दुपक्रमप्राबल्याच्च. एवंचोमासहायत्वादिविशेषलिङ्गानां प्रतर्दन विद्याग तत्वाष्ट्रवधादि विशेषलिङ्गाना मिन्द्रान्तर्यामि नारायणोपासन रूपत्वबोधकत्ववत्प्रसिद्ध रुद्रान्तर्यामि नारायणोपासन रूपत्वावग मकत्वमेव श्वेताश्वतरप्रभृतिगत विशेष लिङ्गानामपिरुद्रान्तर्याम्युपासनरूपत्वज्ञापकत्वमेव - अन्यधा कैवल्योप निषदादिषु नारायण व्यतिरिक्तस्यकस्य चिदुपासने मोक्षसाधनत्व मुक्त्वा तद्व्यतिरिक्तस्य मोक्ष साधनत्व निषेधाच्च परस्पर प्रतिक्षेपकत्व प्रसङ्गः - ननु, प्रतर्दन विद्यान्यायेनैव नारायणोपासन पराणां नारायणान्तर्यामी रुद्रोपासन परत्वं किं नस्यात्. तथापि व्याघात शान्तेरितिचेन्न. विकल्पासहत्वात् - नारायणस्या प्यन्तर्यामीरुद्र इति किंप्रसिद्ध रुद्र एवोच्यते? उतप्रसिद्ध रुद्रातिरिक्तः कश्चिदिति - नाद्यः. तस्य ''नारायणात् रुद्रोजायते - नारायणाद्द्वादशादित्यारुद्रावसवस्सर्वाणि छन्दाग्ंसि. नारायणा देवसमुत्पद्यन्ते. नारायणाद्वा दशादित्या रुद्रावसव स्सर्वर्विदेवा स्सर्वऋषय स्सर्वाणिच भूतानि नारायणा देवसमुत्पद्यन्ते नारायणे प्रलीयन्ते'' इत्यादिभिः कार्यत्व कर्मवश्य त्वाद्यवगमात्सर्वकारणत्वानुपपत्ते स्तद्व्याप्य सर्वान्तिर्यामित्वाभावेन नारायणान्तर्यामित्वा नुपपत्तेः. नापिद्वितीयः सर्वेषु वेदान्तेषुप्रयुक्तानां शम्भु शिवरुद्रादिशब्दानांतद साधारण धर्म प्रतिपादकानाञ्च -अस्मदुक्तन्यायेन साक्षान्नारायण परत्वेन प्रसिद्ध रुद्रान्तर्यामि नारायण परत्वेन चान्यथा सिध्यातद तिरिक्तवस्तु बोधकत्वासिद्धे स्स्वरूपेणा सिद्धत्वेनान्तर्यामित्वस्य दूर निरस्तत्वात् - ननूक्तन्यायेनैवप्रसिद्धरुद्रतदितर रुद्रातिरिक्त नारायणासिद्धिः- किंनस्यादिति चेत्सत्यं - प्रसिद्ध रुद्र चतुर्मुखेन्द्रादीनांकार्यत्व कर्मवश्यत्वादिना कृत्स्नजगत्कारणभूतस्य कस्यचित्सिद्धौतस्य ''सहस्रशीर्षापुरुष'' इत्यादिनान्य लिङ्गशून्येन सर्वकारणत्वं प्रत्यभिज्ञाप्य पुरुषशब्दवाच्यत्वं मोक्षसाधन विद्या वेद्यत्वं चावगमय्यतस्यैव ''अद्भ्यस्संभूत'' इत्यत्रन्यायानपेक्षमेव स्वेच्छया जातत्व लक्ष्मीपतित्वयोः प्रतिपादनात् ''सहस्रशीर्षापुरुष'' इत्यस्य ''सहश्रशीर्षंदेव'' मित्यत्रनारायणशब्दे तत्पुरुष बहुव्रीहि समासद्वयार्थभूत सर्वान्तिर्व्याप्ति बहिर्व्याप्त्योर्बहुशः प्रदर्शनपूर्वकं नारायण शब्दवाच्यत्वस्य बहुधोक्तत्वात्तत्तद्विद्यासु वेद्यवाचि तत्तद्विशेषशब्द वाच्यत्वस्यचप्रत्यभिज्ञापना त्सुबालोप निषदादिषु अन्यलिङ्ग शून्येषुसर्वान्तिर्यामिणः...

(सा.प्र) सर्वकारणभूतस्यनिर स्तनिखिलदोषस्यनारायणत्वप्रतिपादनाच्च नारायणस्यसिद्धेः तस्योभयवादि सिद्धतया तदसिद्धिशङ्का नुत्थानाच्च. अन्यथा ''हिरण्यगर्भ स्समवर्त ताग्रेभूतस्य. अग्निरग्रे प्रथमो देवतानां - नकिरिन्द्रत्व दुत्तर'' इत्यादि श्रुतिभि स्तत्तत्पुराणानुगृहीताभिः प्रसिद्ध व्यतिरिक्तहिरण्य गर्भाग्नीन्द्रादि कल्पनया सर्ववेदान्तानां तत्तत्परत्व प्रसङ्गेन सदाशिव परत्वक्लप्तेर्निर्मूलत्व प्रसङ्गात्. ननु ''तस्मात्सर्वगतश्शिवः. विश्वस्यैक्यं परिवेष्टितार मीशंतं ज्ञात्वा - विश्वस्यैकंपरिवेष्टितारं ज्ञात्वाशिवंशान्त मत्यन्तमेती'' त्यादिभिः ''योवैरुद्र स्सभगवा न्यश्चब्रह्मे'' त्यादि सामानाधि करण्याच्च सर्वान्तिर्यामित्वं रुद्रस्याप्यस्तीतिज्ञाप्यतइतिनान्तर्यामित्वस्य भगवदसाधारण्य मिति चेन्न. एतेषुवाक्येषु नारायणस्यैव प्रतीतेः. तथाहि ''सर्वाननशिरोग्रीव स्सर्वभूत गुहाशयः । सर्यव्यापीच भगवान् तस्मात्सर्वगतश्शिवः'' इत्यत्रान्तर्यामिण स्सहस्र शीर्षत्व प्रत्यभिज्ञापन पूर्वकं भगवच्छब्देन निर्देशा त्पूर्ववाक्येच ''यस्मात्परं नापरमस्ति किञ्च'' दित्यारभ्य ''तेनेदं पूर्णं पुरुषेण सर्वं'' मिति पुरुष शब्देननिर्देशा त्पुरुषशब्दस्य निरुपपदस्य महच्छब्द समानाधिकृतस्यच ''अथ पुरुषोहवै नारायणोकामयते'' ति नारायणेप्रयोगात् ''पूर्वमेवाह मिहासमिति. तत्पुरुषस्य पुरुषत्व'' मितिकूर्मरूपी नारायणे प्रयोगात्. मैत्रायणीये - ''योहखलुवा अस्य सात्विकोंश स्ससो ब्रह्मचारिणो योयंविष्णु'' रितिसत्वप्रवर्तकतयावगते विष्णौ ''महान्प्रभुर्वै पुरुष स्सत्व स्यैषप्रवर्तक'' इतिप्रयोगात्. ''वेदाहमेतं पुरुषं महान्तं. आदित्य-वर्णंतमसःपरस्ता'' दिति श्रियःपति विषये प्रयोगात्. ''सोध्वनःपारमाप्नोति. ''तद्विष्णोःपरमंपद'' मिति कठवल्युक्तविष्णु विषये ''पुरुषान्नपरंकिञ्चि'' दिति तस्यैव प्रयोगात्. ''विश्वं नारायणं देव मक्षरं परमं प्रभुं. सोक्षरःपरमस्स्वराट्'' इत्यादिषु नारायणशब्द पर्यायितया वगताक्षरशब्दवाच्यान्तर्यामिविषये ''येनाक्षरंपुरुषं वेदसत्यं. दिव्योह्यमूर्तः पुरुषः तेनेदंपूर्णं पुरुषेणसर्व'' मिति मुण्डकोपनिषत्प्रयोगात्. ''जह्नुर्नारायणोनर'' इति नरशब्द वाच्य नारायणे ''यदायंनारायणाख्यः पुरुषोमहान्भवति. तदानीमेवाणु र्भवती'' ति शतपथ ब्राह्मणे प्रयोगात्. ''महादेवंवा महापुरुषंवार्चये'' दितिकल्पसूत्रकारैर्नारायणेप्रयोगात्. पुंसंज्ञेतु शरीरेस्मिन् शयना त्पुरुषोहरिः । शकारस्यषकारोयं व्यत्यासेन प्रयुज्यत'' इति षकारस्यव्यत्यास-सिद्धिवदुकारस्यापि व्यत्याससिद्धिरेष्टव्या - यद्वा, पुरेशरीरेस्मिन्नास्त इतिपुरुषोहरिः - ''यदिवापुरवासीति पुरुषः प्रोच्यते हरिः । यदिवा पूर्वमेवाह मिहेतिपुरुषं विदु'' रिति ''यदिवाबहुधानाद्यैर्विष्णुः पुरुषउच्यते । पूर्णत्वात्पुरुषोविष्णुँ पुराणत्वाच्च पूरुषः । पुराणभजनाद्वापिविष्णुःपुरुष ईर्यते । यद्वा पुरुषशब्दोयं रुढ्यावक्ति जनार्दन'' मिति विष्णवसाधारण्यावगमादुत्तरवाक्येच ''महाप्रभुर्वैपुरुषस्सत्वस्यैष-प्रवर्तक'' इतिपूर्ववाक्योक्तस्य एष इत्य व्यवहित प्रकृतपरामर्शिनैतच्छब्देन प्रत्यवमर्शपूर्वकं शिवशब्दनिर्दिष्टस्य मैत्रायणीय श्रुत्यवगतप्रवर्तक विष्णुत्वा वगमाच्च श्रीपति रेवान्तर्यामीति सत्व प्रवर्तक महापुरुषस्य...

(सा.प्र) प्रत्यभिज्ञापनात्. ''विश्वस्यैकंपरिवेष्टितारं. ज्ञात्वाशिवं सर्व भूतेषुगूढं विश्वस्यैकं परिवेष्टितारं ज्ञात्वा देवं मुच्यत'' इत्यादीना मुपक्रमावगतस्याप्यन्ते पुरुष देवादि शब्दार्थपर्यवसानस्यैव न्याय्यत्वात्. ''सर्वगतश्शिवः. विश्वस्यैकं परिवेष्टितार'' मित्यनयोरपि ''सर्वव्यापीचभगवान् तस्मात्सर्वगतश्शिव'' इति. यतः ''सर्वव्यापीचभगवान् विनाहेयै र्गुणादिभि'' रित्युक्त हेयप्रत्यनीकः तस्मात्सर्वगतत्वेपि परिशुद्ध इत्यर्थस्वीकारौचित्येन पूर्वोक्त शिववाच्य नारायण विषयत्व स्यैव युक्तत्वा देतेषामुत्तरत्रच ''हृदा मनीषे'' त्यादिना ''नैनमूर्ध्वं नतिर्यञ्च'' मित्यादिना ''नसंदृशे तिष्ठती''त्यादिनाच ''अम्भस्यपार'' इत्यत्र समुद्रशायि प्रत्यभिज्ञापनाच्च नारायणपरत्वंसिद्धं. ''योवैरुद्रस्सभगवा'' नित्यादि सर्व सामानाधिकरण्य बोधक पर्यायेषु प्रति पर्यायं ''योवैरुद्रस्सभगवान् योरुद्रस्सभगवा'' निति नियमेन भगवच्छब्दसामानाधिकरण्याद्रुद्रभगवच्छब्दयो रैकार्थ्यस्यावश्यकत्वा देवमेषशब्दो मैत्रेय भगवानिति परब्रह्मभूतस्य वासुदेवस्य नान्यगइतिवासुदेवशब्दवाच्य नारायणविषयत्वस्यान्य विषयत्व निषेधपूर्वकं प्रतिपादनादन्तर्यामी नारायण इतिसिद्धं. ननु यद्यपि पूर्वापरवाक्येषु प्रत्यभिज्ञा. अथापि उदाहृत वाक्यस्थ विशेष्य शब्दैरन्तर्यामि त्वस्यरुद्रधर्मत्वेनिश्चितेएतदैकार्थ्या त्तेषामपिरुद्रपरत्वे अन्तर्यामि त्वस्यरुद्रासाधारण्यमेव स्यादिति चेन्न. उदाहृत वचनानां प्रसिद्ध रुद्रपरत्वानुपपत्तेर्नारायणपरत्वे अन्तर्यामित्वस्य नारायणा साधारण्य सिद्धेः. उभयातिरिक्तान्तर्यामी परत्वस्य उभयपरत्वानुपपत्त्य-धीनत्वादनुभयपरत्वानुपपत्त्या चान्यत्र तात्पर्य निश्चयाधीनत्वे थस्संश्रयादि प्रसङ्गाद्बहुषूपनिषद्भागेषु नारायणस्य सर्वान्तिर्यामित्व प्रतिपादने नान्तर्यामि त्वस्य नारायण शब्दार्थत्वेन तद्विरोध प्रसङ्गाच्च. ततश्च वेदान्तेषु तत्रतत्रश्रुतानां चिद्विशेषलिङ्गानां भगवदसाधारण धर्माणांच भगवद्विशेषण भूतजीव विशेषणतया साक्षाद्विशेषण तयाच नारायण निष्ठत्वोपपत्तेस्सर्व वेदान्तानां नारायण परत्वंसिद्धं. ननु ''ब्रह्मविष्णुरुद्रेन्द्रा स्तेसर्वेसम्प्रसूयन्ते'' इतीन्द्र रुद्राद्यविशेषेण विष्णोरप्युत्पत्ति श्रवणान्नारायण स्यापि कर्मवश्यत्व प्रसक्त्या सर्वकारणत्वं नोपपद्यत इति चेन्न. नारायणोत्पत्तेरुत्पत्तित्व प्रयुक्त कर्मवश्यत्वस्य ''अजायमानोबहुधा विजायत'' इति श्रुत्यैवापो दितत्वात्तस्य सर्वकारणत्वोपपत्तेः ननु नारायणपरवाक्यैर्नारायण सिद्धिवद्रुद्र शिवादि परवाक्यैः कार्यरुद्रातिरिक्त कारणरुद्रस्सिध्य तीति चेन्न. एषां वाक्यानां नारायण परत्वाभावे नान्यधासिद्धौ तादृग्रुद्र सद्भावे तत्परत्वान्नारायण परत्वा भावे नान्यधासिद्धिरिति मिथस्संश्रयणात् नारायणादिपदवद्वाक्यैर्नारायण सिद्धावप्यन्योन्याश्रयणं स्यादितिचेन्न. नारायणस्योभयवादि सिद्धत्वेन तदसिद्धि शङ्काया अनुत्थान पराहतायामिथ स्संश्रयणस्य दूरनिरस्तत्वात्. किञ्च प्रसिद्ध नारायण प्रसिद्ध रुद्रारिक्त सदाशिवक्लप्ताविव तदुभयातिरिक्त नारायणकल्प नस्यान्योन्या श्रयग्रस्तत्वेपि प्रसिद्धनारायण स्यैव सर्वकारणत्वाङ्गीकारे प्रसिद्धरुद्रस्य सर्वकारणत्व बाधककार्यत्व, कर्मवश्यत्वानपहत पाप्मत्वादि

(सा.प्र) वद्बाधकाभावेनातिरिक्तकल्पनाप्रसङ्गरहिततयामिथस्संश्रयणप्रसङ्गाभावात्. किञ्च, हिरण्यगर्भ रुद्रेन्द्रादीनांकार्यत्व कर्मवश्यत्व श्रवणात्तेषामपि कारणत्वेन कस्यचिदपेक्षितत्वे ''अजायमानोबहुधाविजायते-एष सर्वभूतान्तरात्मापहत पाप्मादिव्य'' इत्यादिभिर्नारायणस्य स्वेच्छाकृतावतारत्वापहत पाप्मत्वादेःश्रवणात्तस्यैव श्रियःपतिभूतनारायणत्वाच्च तस्मादेव सर्वोत्पत्युपपत्तौतेनैव सर्ववेदान्तानां निराकाङ्क्ष त्वोपपत्तेरतिरिक्तकल्पने गौरवात्. ननु ''सहस्राणिसहस्रशोयेरुद्रा अधिभूम्या'' मित्यादि रुद्रान्तरस्यापि-सिद्धिरिति चेन्न - वेदभाष्ये एवमादीनां कोपपरतया व्यख्यात तया रुद्रपरत्वासिद्धेः. ननु प्रसिद्ध हिरण्यगर्भ रुद्रेन्द्राद्यतिरिक्तः कश्चिदङ्गीक्रियते चेत्तस्यैव सदाशिवत्वं वदाम इतिचेन्न. नारायणस्याप्यङ्गी कारेगौरव तादवस्थ्यात्तदङ्गी कारेऽस्मदुक्तस्य सर्वशब्द वाच्यस्य नारायणस्यैव नामान्तर व्यवहार प्रसङ्गात्. ''सहस्रशीर्षापुरुष'' इत्यत्र सर्वकारणत्वेनोक्तस्यहिरण्यगर्भ रुद्राद्यतिरिक्तस्योत्तरानुवाके ''वेदाहमेत'' मित्यादिभिरेववाक्यैःप्रत्यभिज्ञापनपूर्वकं लक्ष्मीपतित्व प्रतिपादनाल्लक्ष्म्याश्चोमातो व्यतिरेकेणैव प्रसिद्धत्वान्न तस्यविष्ण्वतिरिक्त सदाशिवत्वमिति - किञ्च ''तद्ब्रह्म परमं नित्यमजमक्षरमव्ययं । एकस्वरूपञ्च सदा हेयाभावाच्च निर्मल'' मित्याद्युप बृह्मणानु गुण्येना नेकार्थगो शब्दस्यादित्यस्य भाव इत्यादिन्यायादनेकार्थ शिवशब्दस्य सदाशिव मित्यादिषु सदापदयोगान्नित्यशुद्धि परत्वमेव. नन्वेवंतर्हि ''अजायमान'' इत्यस्यापि रुद्रविषयत्वं; ततश्च तदुत्पत्तेरवताररूपत्वं; तथाचसतितस्ययोग्यार्थत्वं; ततश्च परमकारणत्वं, परमकारणत्वेन ''अजायमान'' इत्यस्यापि रुद्र विषयत्वमिति चक्रकाश्रय प्रसङ्गात् - नारायणेपीदं समानमितिचेन्न - ''ह्रीश्चते लक्ष्मीश्च पत्न्यौ'' इत्याद्य साधारणलिङ्गेन तत्प्रकरणस्य नारायणपरत्वात्तदुत्पत्ते रवताररूपत्वा वगमाद्योग्यार्थत्व सिध्यातस्य परमकारणत्व सिद्धेरिति. कालाग्निरुदोपनिषदस्तु ''प्रस्तुत्यरुद्रवपुषः पुरुषोत्तमस्य विद्यामथर्व शिरसीरित मङ्गमस्य । भस्मप्रसक्तिरितरत्रनचास्तियद्वत्सौत्रामणि प्रकरणोक्त-सुराग्रहस्ये''त्युक्तरीत्या अथर्वशिरसिसर्वान्तिर्यामिणं नारायणं तदसाधारणैर्भग वदनन्त पुरुषदेवादिशब्दैः प्रस्तुत्य ''तस्यद्वितीयाविद्यामति कृष्णविष्णुदैवत्यायावसानेचतुर्थ्यर्थमात्र साविद्यामति सवर्णः पुरुषदैवत्ये'' त्यथर्व शिरोक्त द्वितीय चतुर्थमात्र देवताभूत विष्णवाख्य पुरुषत्वं ''हृदित्वमसियोनित्यं तिस्रोमात्राः परस्तुस'' इति प्रत्यभिज्ञातस्यैव ''विश्वं देवंजातवेद संवरेण्यं तमात्मस्थंयेन पश्यन्तिधीरा'' इत्यनेन रुद्रान्तर्यामि तयोपासनं विधायैवं भूतोपासनङ्गतया ''अग्निरिति, भस्मवायुरिति, भस्मजालमिति, भस्मेत्या''दिना ''भस्मगृहीत्वा विमृज्याङ्गानि संस्पृशेत्तस्माद्व्रत मेवतत्पाशुपतं पाश चिन्मोक्षाये'' त्युक्त भस्मधारण प्रकार विशेष प्रश्नोत्तर रूपतया नारायण परत्वमावश्यकं. किञ्च पुरुषसूक्त कठवल्ली मुण्डकोपनिषत्सुबालोपनिषन्महोप निषत्काण्वमाध्यन्दिनशाखागतद्वित द्विविधान्तर्यामि ब्राह्मणतैत्तिरीयोपनिषत्तापनीयोप-निषद्ब्रह्मबिन्दूपनिषदादीनामनेकेषां...

(सा.प्र) वेदान्तानांनारायणपरत्वस्यस्पष्टत्वात् ''भूयसांस्याद्बलीयस्त्व'' मितिन्यायात्तत्रतत्रनारायणा साधारणान्तर्यामित्व, अपहतपाप्मत्व, मोक्षप्रदत्व, अन्यनिषेध पूर्वकमोक्षसाधन विद्याविशेष्यत्व, मुक्त प्राप्यत्व, सकल जगत्कारणत्व, ब्रह्मरुद्रादि कारणत्व, विष्णुवासुदेव देवकीपुत्रनारायण राम पुरुषानन्त जनार्दन भगवदादिशब्दवाच्यत्वादि लिङ्गयोगाच्चगतिसामान्यन्यायात्सर्ववेदान्ताना मेकार्थ परत्व मपरिहार्यम्. एवं स्थालीपुला कन्यायेनकाश्चन श्रुतयः प्रदर्शिताः एवं अन्यासां श्रुतीनामपि नारायण परत्वं उक्तन्यायेनावगन्तव्यं. एवमेव लक्ष्मीपतेः परत्व प्रतिपादकानि परस्सहस्र मुपबृह्मण वचनानि दृश्यन्ते - तत्र श्रुत्यैव ''यद्वैकिञ्चमनुरवदत्तद्भेषजं. सहोवाचव्यासः पाराशर्य'' इतिचाप्ततमत्वेनोक्तयोः स्मृतौ. ''मन्वर्थ विपरीतातुया स्मृतिस्सानशस्यते । वेदे रामायणेचैव भारते भरत र्षभ । आदा वन्तेच मध्येच विष्णुस्सर्वत्र गीयते । वेदा नध्या पयामास महा भारत पञ्चमा'' नित्यादिभि र्वेदवत्प्रमाण भूत प्रबन्ध प्रणेतृत्वेनाव गत मनु व्यासयोः कृतिषु. मनु स्मृत्या तावत्. ''आसीदिदंतमोभूत मप्रज्ञातम लक्षण'' मित्यारभ्य ''आपोनारा इति प्रोक्ता आपोवैनरसूनवः । ता य दस्यायनं पूर्वंतेन नारायण स्स्मृत'' इति नारायण एव सर्व कारणत्वेनोक्तः. महा भारते ''एक स्तद्वेद भगवान् धाता नारायणस्स्वयं । विष्णु रेवादि सर्गेषु स्वयं भूर्भवति प्रभुः । नारायणः परोदेवः परमात्मा सनातनः । इति नारायण श्शंभु र्भगवान् जगतः प्रभुः । सोनिरुद्धस्स ईशानो व्यक्तिस्सा सर्वकर्मसु । रुदो बहु शिरा बभ्रु र्विश्वयोनि श्शुचि श्रवाः । जय विश्वमहा देव जय लोक हितेरत'' इत्यारभ्य ''सुदुष्फार जयशार्ङ्ग धनुर्धर । भोक्तारं यज्ञतपसां सर्वलोक महेश्वरं । सुहृदं सर्व भूतानां ज्ञात्वामां शान्ति मृच्छति । ततस्ते विबुधास्सर्वे ब्रह्मातेच महर्षयः । वेददृष्टे नविधिना वैष्णवं क्रतुमारभ'' न्नित्यारभ्य ''तेनते युग धर्माणो भागाः परम सत्कृताः । प्रापु रादित्य वर्णन्तं पुरुषं तमसः परं । बृहन्तं सर्व गंदेव मीशानं वरदं प्रभुं । ततो थ वर दोदेवस्तान् सर्वान् अमरान् - स्थितान् - अशरीरो बभाषेदं वाक्यंखस्थोमहेश्वरः । नारायणात्परो देवोनभूतो नभविष्यति । एतद्रहस्यं देवानां पुराणानांच सम्मत'' मित्यादिभि स्तदुक्तं. उप निषद्गत धातृ, स्वयंभु, शंभु, रुद्र, महादेव, महेश्वरादि वाच्यत्वं नारायणस्य वदता सूत्र कारेण स्वरसेन सर्व वेदान्त प्रतिपाद्य श्श्रीमन्नारायण एवेति स्थापितं. ननू दाहृत वचनेषु बहुभिः रुद्रवाचि शब्दैः नारायण शब्दस्य सामानाधिकरण्य निर्देशोभूय सांन्याया न्नारायण शब्दस्य रुद्ररूपार्थ विवक्षै वेति नभारतादिभिः नारायणस्यपरत्व सिद्धिरिति चेन्न. नारायण शब्दस्य रुद्रपरत्व विवक्षायां एकेन रुद्रवाचि शब्देन सामानाधिकरण्य निर्देश वैपरीत्य शङ्कावहत्वेपि द्वाभ्यांत्रिभि र्वासमानाधि करणतयानिर्देशेनापि भूयसां न्यायसिद्धेस्ततोधिकैस्सामानाधि करण्य निर्देशस्यवैय्यर्थ्यं. ''ऋतेनारायणा...

(सा.प्र) दीनिनामानिपुरुषोत्तमः । प्रादादन्यत्रभगवान्भजतेवै स्व कंपदं । नतुनारायणादीनां नाम्ना मन्यत्र संभवः । अन्य नाम्नां गतिर्विष्णु रेक एव प्रकीर्तित'' इत्यादि स्कान्द वामनपुराण वचन विरोधश्चस्यात्. तेषां शब्दानां नारायणत्वे ज्ञाप्येतु कस्यचि त्समानाधिकरणतयानिर्देशाभावे तस्य नारायण परत्वज्ञापनं नसिध्यतीति सर्वेषां शब्दानां प्रत्येकं सामानाधि करण्यनिर्देशो पेक्षित एवेति सिद्धं. भारतादौ सर्व वेदान्त प्रति पाद्यतया श्रीमन्नारायण एव प्रतिपाद्यत इति ''रुजद्रावयते यस्मात्तस्मा द्रुद्रोजनार्दनः। ईशनादपि चेशानो महा देवोमहत्वतः । ब्रह्मणाद्ब्रह्म नामासा वैश्वर्यादीशउच्यते । एवं नानाविधैः शब्दैरेक एवत्रि विक्रमः । वेदेषुच पुराणेषुगीयते पुरुषोत्तम'' इति. ब्रह्माण्ड पुराणे रुद्रादि शब्दानांवेदान्त गतानांनारायणपरत्वं स्पष्टमुक्तं. यमस्मृतिलोकाक्षि गृह्ययोश्च ''अग्नयेपृथिव्यधिपतये स्वाहा. महासेनाय सनोधिपतये स्वाहा, रुद्राय भूताधिपतयेस्वाहा, ब्रह्मणे लोकाधि पतयेस्वाहा, विष्णवे सर्वाधि पतयेस्वाहे'' ति कृच्छ्रहोममन्त्रे विष्णोस्सर्वाधिपत्यंमहीधारणं श्रुतं ''नतेवाग नृताकाव्ये काचिदत्र भविष्यती''ति ब्रह्मदत्तवर वाल्मीकि प्रोक्ते श्रीरामायणेच ''जृम्भितं तद्धनुर्दृष्ट्वाशैवं विष्णुपराक्रमैः । अधिकंमेनिरे विष्णुंदेवा ऋषिगणा स्तदा। व्यक्तमेष महायोगी परमात्मा सनातनः । अनादि मध्यनिधनो महतः परमो महान् । तमसःपरमोधाता शङ्खचक्र गदाधरः । श्रीवत्स वक्षा नित्यश्री रजय्यश्शाश्वतोध्रुवः । मानुषं वपु रास्थाय विष्णुस्सत्यपराक्रमः । भवान्नारायणोदेवः श्रीमांश्चक्रायुधोविभुः । एकशृङ्गवराहस्त्वं भूतभव्य स्सपत्नजित् । सीतालक्षी र्भवान्विष्णुर्देवःकृष्णः प्रजापतिः । अक्षयंमधुहन्तारंजानामित्वांसुरोत्तम'' मित्यादिभि र्बहुशः श्रीमन्नारायण एव सर्वेश्वर उक्तः. ''देवता पारमार्थ्यञ्चयथावद्वेत्स्यतेभवान् । देवता पारमार्थ्येचविज्ञानाच्चप्रसादतः पुराणकरणाच्चैवपुलस्त्य स्याज्ञयागुरो'' रिति वैष्णव भारत लैङ्ग पुराणादिषु देवता पारमार्थ्यवक्तयोक्तपराशरोक्त-स्मृतौ श्रीमन्नारायणस्यैव मोक्षोपायत्वमुक्त्वा तस्यैवाराधनक्रियाभिगमनादेरुक्तेश्चस एव परदेव तेति निर्णीतः-किञ्च, पराशरेण ''यन्मयंचे'' त्यादि मैत्रेय कर्तृक जगत्कारण विषय सामान्य प्रश्नस्य ''विष्णोस्सकाशा दुद्भूतं जगत्तत्रैवचस्थितं । स्थितिसंयम कर्तासौ जगतोस्य जगच्चस'' इत्यारभ्य श्रीविष्णुपुराणे आदिमध्यावसाने सर्वत्र विष्णोरेव सर्व जगदुत्पत्ति स्थिति विनाश हेतुत्वोक्ते र्बहुश स्सर्वेश्वरत्वोक्तेश्च नारायणस्य तस्य सर्वस्मा त्परत्व मुचितं. रुद्रादिमाहात्म्यपर पुराणेष्वपि लैङ्गेतावत्, ''नहिविष्णुसमाकाचि द्गतिरन्याविधीयते इत्येवं सततंवेदा गायन्तेनात्र संशयः । त्वत्कोप संभवोरुद्र स्तमसाच समावृतः । त्वत्प्रसादाज्जगद्धातारज साचपितामहः । त्वमादिस्त्वमनन्तश्च प्रकृतिस्त्वंजनार्दनः । पुरुषस्त्वंज गन्नाथोविष्णुर्विश्वेश्वरोभवान् । परंब्रह्मादिपुरुषो विश्वमूर्तिः पितामहः । तत्वमाद्यंभवानेव परंज्योतिर्जनार्दनः । परमात्मापरंधाम श्रीपतेपरमप्रभो'' इति विष्णोः परत्वमुक्तं ...

मू– मुक्तभोग्यः ।।

(सा.दी) गणग्राहकं. शरीर शरीरि दातृयाचितृ कालविशेषानुभाव्यानुभविताக்களுக்கு ऐक्य तुल्यत्वादिகூடாதிறே.

अमृतत्वसाधनமான तत्वत्रयज्ञानं பிறந்தால் देवतापारमार्थ्यज्ञानமெதுக் கென்னவருளிச் செய்கிறார். ...

(सा.स्वा) मुक्तभोग्यः श्रीमन्नारायणः पतिरित्यर्थः प्रमाणैक शरणानामस्मद्दर्शनस्थानामुक्ताकार विशिष्टः श्रीमन्नारायण एव परदेवतेति निष्कर्ष इत्युक्तंभवति ।।

இப்படி देवता विशेष निष्कर्षம் பண்ணவேணுமோ? मोक्षसिद्धिக்கு पूर्वाधिकारसिद्ध तत्वत्रय विवेकमात्रமமையாதோ? ईश्वरனை विशेषिத்தறிய வேணுமென்றாலும் विभु चेतनत्वादिகளாலே जीवादि व्यावृत्तமாக வறிகையாலதுவும் सिद्धமன்றோ? जीवादि व्यावृत्तனென்று பொதுவிலே யறிந்தாலும் இன்ன देवता विशेषமென்றறியவேணு மென்றில் இந்த जीवादिव्यावृत्तत्वज्ञानமே मोक्षोप युक्तமென்று ''भोक्ताभोग्य'' मित्यादि श्रुतिகளிலே सिद्धமாயிருக்க देवताविशेष ज्ञानத்துக்கு विशेष प्रयोजन முண்டோ? परमैकान्तित्व सिद्धिயிதுக்கு प्रयोजन மென்றிலதுவே प्रयोजनமாக மாட்டாமையால் அதுக்கு प्रयोजन மெது? व्यवधानरहित मोक्षसिद्धि யென்றில் परमैकान्तित्वமாவது मोक्षैक प्रयोजनत्व மாகையால் அதுக்கு वैराग्यादि मात्रமமையாதோ? देवताविशेष निश्चयं வேணுமென்றாலும் அது पूर्वाधिकारத்திலே ईश्वरன் श्रियः पतिயென்று சொன்னத்தாலே தானே सिद्धமன்றோ? அங்கு श्रीमन्नारायणனே परदेवतैயென்கிற அம்சம் उपदेश मात्र पर्यवसन्नமாயிருக்கையால் அதுக்கு उपयुक्तங்களாய் सारतमங்களுமான प्रमाणोपपत्तिகளையும்,

(सा.प्र ) शैवेपि ''अहमेव परंब्रह्म परंतत्वंपितामह । अहमेवपरंज्योतिः परमात्मात्वहंविभु'' रितिब्रह्माणमुद्दिश्य भगवद्वचनतया विष्णुपरत्वमेवोक्तं - एवं नानापुराण पर्यालोचने नारायणपरत्व पराणां श्लोकानां दशसहस्र पर्यन्त मुपपादनसंभवेपि ग्रन्थ गौरव भयान्नलिख्यन्ते ।।१७।।

एवं चोक्त प्रकारेण सर्ववेदान्तानां नारायण परत्वात्सात्विक पुराणानामेवैवं विध वेदान्तानुगुण्यात्तदुप बृह्मित पूर्वोक्त श्रुतिविरुद्धानि राजस तामस पुराणान्य प्रमाणानीति नारायणे सर्वोत्तरत्वस्य व्यतिरेकेव गतेपि वेदान्तेषु परत्वेन प्रतिपादितानां नारायण हिरण्यगर्भरुद्राणां त्रयाणां समुच्चित्याश्रयणस्य प्रसक्तत्वात्तेष्वेवकस्य चिदीश्वरत्वात्स ईश्वरो मोक्षं दास्यतीति परदेवता विशेषोन निर्णेतव्य इति शङ्कायां ''नान्यं देवं नमस्कुर्यान्नान्यं देवं प्रपूजयेत् । नान्यंदेवंस्म रेन्नित्यं विष्णु पादाम्बुजाश्रयः । एकान्तिनस्सदाब्रह्म ध्यायिनोयोगिनोहिये । तेषांतत्परमंस्थानं यद्वै पश्यन्तिसूरयः । तेषामेकान्तिनश्श्रेष्ठास्तेचैवानन्यदेवताः । अहमेवगतिस्तेषां निराशीः कर्मकारिणां । येतुशिष्टास्त्रयो भक्ताः ...

(सा.वि) शिवमच्युत'' मित्यादि प्रयोगानुसारेण भगवतिवृत्ति सम्भवान्नारायणशब्दस्य देवतान्तरे वृत्य सम्भवात्तस्यपरत्वसिद्धौ सर्वसामञ्जस्या दैक्यादिपक्षाणां नावकाश इतिभावः ।।

मू- **उक्तवैधर्म्य**ங்களாலே பொதுவிலே **प्रकृति पुरुषेश्वर विवेक**ம் பண்ணினாலும் "ஒன்றுந்தேவு" **मित्यादिक**ளிற் படியே **परदेवताविशेष निश्चय** மில்லாதபோது "உன்னித்து மற்றொரு தெய்வம் தொழாளவனையல்லால்" என்கிற **परमैकान्तित्वं**கூடாமையாலும், **परमैकान्ति**க்கல்லது **व्यवधानरहित** மாக **मोक्ष**ம் கிடையாமையாலும்...

(सा.दी) उक्त वैधर्म्यங்களாலே इत्यादियால். உன்னித्त्यादि. அவனை. भगवाனை. அல்லால், மற்றொரு दैवத்தை परत्वेन நினைத்துத் தொழாளென்கை. एकस्मिन्नेव परमपुरुषे अत्यन्त परत्वेनोपायत्वे नोपेयत्वेनचनिश्चयोयस्स एकान्ती. परमश्चासावेकान्तीचपरमैकान्ती. विलम्बः, व्यवधानं. "शङ्करस्यतु...

(सा.स्वा) बाधक परिहारங்களையும், विशेषिத்து निरूपियாதபோது அது कार्यकरமாகமாட்டா, தென்றில் रहस्यत्रय निष्ठனுக்கு மற்றுள்ள उपयुक्तार्थங்களில்போல் उपदेश मात्रமமையாதோ? देवताविशेष निश्च यத்தில் प्रमाणोपपत्ति निरूपणமும் வேணுமென்கைக்கு सम्प्रदायமுண்டோ? வென்ன இश्शङ्कैகளுக்கு उत्तर மருளிச்செய்கிறார். उक्तवैधर्म्येत्यादियால். उक्तवैधर्म्यங்கள், गुणत्रयाश्रयत्वाणु चेतनत्व विभुचेतनत्वादिகள். பொதுவிலே யென்றது विष्णु रुद्रादि व्यक्ति विशेष निर्धारण மன்றிக்கே யென்றபடி. मोक्षोपयुक्तदेहात्म विवेके कालादिर्नातीवोपयुक्त इत्यभिप्रेत्यात्र प्रकृतिमात्रोक्तिः ஒன்றுந் தேவுமிதி अत्रादिशब्देन "திண்ணம் வீடு" முதலான திருவாய்மொழிகள் विवक्षितங்கள். இத்திருவாய் மொழிகளிலே श्रुतिस्मृति पुराण प्रक्रियैகளைக்கொண்டு सोपपत्तिकமாக विस्तरेण परदेवता निष्कर्षம்பண்ணுகையாலே रहस्यत्रय निष्ठனுக்கு மிப்படி निरूपणம் பண்ண வேணுமென்கைக்குத்திருவாய் மொழிகளே सम्प्रदायरूप प्रमाणங்களென்று கருத்து. உன்னித்தி त्यादि. உன்னித்து, நினைத்து. தொழாள், सेवियாள். தொழாளென்றிவ்வளவே யமைந்திருக்க உன்னித்துத் தொழாளென்றிங்ஙனே சொன்னது अन्यदेवतै யையொருக்காலுந்தொழாதாப்போலேயத்தை स्वप्नத்திலும் நினைப்பதும் செய்யாளென்கைக்காக. परमैकान्तित्वं प्रयोजनान्तर वैमुख्य मात्रமன்றிக்கே இப்பாசுரத்தாலே देतवतान्तर वैमुख्य विशिष्टமென்று சொன்னதாகையாலிதுக்கு परदेवता विशेष निश्चयமும் வேணுமென்று கருத்து. கூடாமையாலுमिति - परदेवता विशेष विषयத்தில் विप्रति पत्तिகள் बहுக்களாகையாலே கலக்கம் எவனுக்கும் வருமாகையால் देवतान्तरसम्बन्धं வாராதொழியா தென்று கருத்து. व्यवधानशब्देन स्वपरिगृहीतो पायव्यतिरिक्तोपाय परिग्रहेणवा प्रयोजनान्तर...

(सा.प्र) फलकामाहि तेमताः । सर्वेच्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभाक् । वैष्णवःपरमैकान्ती नेतरोवैष्णवस्स्मृतः । नावैष्णवोवृजेन्मुक्तिं बहुशास्त्रश्रुतोपिवे" त्युक्तमोक्षहेतुपार मैकान्थ्य सिध्यर्थं देवता विशेष निर्णय आवश्यक इति परिहरति. उक्तवैधर्म्यங்களாலே इत्यादिना - உன்னித்து, सेव्यत्वेन निश्चित्य. மற்றொருதெய் வந்தொழாளவனை யல்லால், तंविनादेवतान्तरंनभजते. व्यवधानरहितेति

(सा .वि) பொதுவிலே, सामान्येन. ईश्वर इति कश्चिदस्तीति सामान्येन विवेकसिद्धा वपीत्यर्थः. உன்னித்து, सेव्यत्वेननिश्चित्य. அவனையெல்லால், तांविना மற்றொருதெய்வம், देवतान्तरं. தொழாள், नाराधयति. என்கிற, इत्युक्तं. व्यवधान रहितமாக, "सूर्यस्यैवतुयोभक्त स्सप्त जन्मान्तरं नरः"

(सा.सं) देवताविशेष निर्णयस्य अकिञ्चन मुमुक्ष्व नपेक्षितत्वं परिहरति उक्तेत्यादिना, பொதுவிலே, परत्वेन शङ्कितरुद्रादिव्या वृत्तिमनभिसन्धाय - உன்னித்து, भगवदितरेषु परत्वा सम्भवंनिश्चित्य ...

मू– இவ்ஈஶ்வரன் இன்ன देवताविशेषம் என்று निष्कर्षिக்க வேணும். அவ்விடத்தில் चेतनाचेतनங்களுடைய...

(सा.दी ) योभक्त'' इत्यादिகளாலே अन्यர்க்கும் विलम्बेन मोक्षமுண்டென்று கருத்து...

(सा.स्वा) अनुभवेनवा व्यवधानंविवक्षितं. नतुविळम्ब मात्रं. अन्यथा देवतान्तरங்கள் பக்கல் विळम्बेन मोक्षसिद्धियுண்டென்றதாக प्रसङ्गिக்கையால் ''देवतान्तरங்கள் பக்கல் मोक्षंविळम्बिத்தும் கிடையாதெ''ன்று மேல் சொல்லப்புகுகிறது विरोधिக்குமிறே. கிடையாமையால் इति ''मयिचानन्ययोगेन भक्तिरव्यभिचारिणी'' என்கிற अनन्यभक्ति யில்லாமையாலென்று கருத்து. ईश्वरன் இன்ன देवताविशेष मिति. परदेवता विशेष निश्चय மென்று पूर्वं निर्देशिத்ததுக்கு अनुगुणமாக இங்கு परदेवतैஇன்ன व्यक्तिविशेष மென்று निर्देशिக்க வேண்டியிருக்க ईश्वरன் இன்ன देवताविशेष மென்றிங்ஙனேनिर्देशिத்தது पूर्वाधिकार सङ्गति द्योतनार्थं. पूर्वाधिकारத்திலே ईश्वर शब्दமொழிய परदेवताशब्द மில்லையிறே. तथाच चिदचिन्नियन्तृत्वादिना सामान्येन पूर्वाधिकारेनिरूपित ईश्वरो नारायणाख्यदेवता विशेषरूपत्वेनास्मिन्नधिकारेविशेषतो निरूप्यत इतिसङ्गति रित्यभिप्रायः. ஆனால் पूर्वं परदेवताशब्द घटितமாக निर्देशिப்பானே னென்றில் ईश्वरविषये देवता विशेषनिश्चय மில்லாத போது परमैकान्तित्वं கூடாதாப்போலே निस्समाभ्यधिक त्वेन परனென்று निश्चय மில்லாதபோதும் அதுகூடாதென்கைக்காக அங்கு परदेवताशब्द घटितமாக निर्दे शिத்து. ततश्च पूर्वाधि कारनिरूपित ईश्वरो निस्समाभ्यधिकत्वेन सर्वस्मात्परो नारायण एवेत्यस्मिन्नधिकारे निरूप्यते என்று இம் महावाक्य तात्पर्य மாகிறது. निष्कर्षिக்கविति. अनेकेषु प्रसक्तेषु प्रमाणोपपत्ति निरूपणेनेतर व्यवच्छेदपूर्वक मेकस्यैवनिर्धारणं निष्कर्षः. परदेवतैயாவது जगत्कारण மாகையாலே ब्रह्मமன்றோ? அந்த ब्रह्मरूपமான द्रव्यமென்று தானே तत्तदवस्थापत्तिमात्रத்தைக்கொண்டு सकल चेतनाचेतन रूपமாயிருக்கு மென்று சிலர் उपपादिக்க வில்லையோ? ஆகையாலித்தை एकव्यक्ति विशेष मात्ररूपமாக निष्कर्षिக்கப்-போமோ? வென்னவருளிச்செய்கிறார். அவ்விடத்திலित्यादि. அவ்விடத்திலென்றது विषयसप्तमी. देवताविशेषத்தை निष्कर्षिக்கையாகிற இவ்விषयத்தில் विरोधित्वेन प्रसक्तமான இப்पक्षं கூடாதென்றபடி. இப்படியே இस्सप्तम्यन्त पदं पक्षान्तरनिरसन परங்களான उत्तर वाक्यங்களுக்கும் शेषमाயிருக்கிறது. चेतनेति. चेतनனுக்கு अचेतनाद्भेद மென்னாதே चेतनाचेतनங்களுடைய வென்று சொன்னவித்தால் இவத்துக்கு अवान्तर भेदங்களும் विवक्षितங்கள். अनेनप्रामाणिकस्य चेतना चेतनयो रन्योन्य भेद स्येव...

(सा.प्र) ''सूर्यस्यैवतुयोभक्तस्सप्तजन्मान्तरं नरः। तस्यैवतुप्रसादेनरुद्रभक्तः प्रजायते। शङ्करस्यतुयोभक्तस्सप्तजन्मान्तरंनरः । तस्यैवतुप्रसादेन विष्णुभक्तः प्रजायते । वासुदेवस्ययोभक्तस्सप्त-जन्मान्तरंनरः । तस्यैवतुप्रसादेन वासुदेवेप्रलीयत'' इत्युक्तव्यवधानराहित्ये नेत्यर्थः - एवं देवता विशेष निर्णय प्रयोजनं प्रथमं प्रदर्श्य आत्मैक्यमितिश्लोकंक्रमेण व्याचष्टे. அவ்விடத்திलित्यादिना - तत्रचिद चिदैक्यमितियाद वीयं पक्षं प्रतिक्षिपति - चेतना चेतनங்களுடையேதி ...

(सा.वि) इत्युक्तव्यवधानंविना. கிடையாமையாலும், दुर्लभतयाच...

(सा. सं) அவ்விடத்தில், निष्कर्षणेकार्येसति...

मू– अत्यन्तभेदம் प्रमाणसिद्धமாகையாலே யெல்லாம் परदेवतैயா யிருக்கிற ब्रह्मद्रव्यं என்கிற पक्षம் घटिயாது. स्वभावसिद्धமான जीवेश्वरभेदமும் அ(இ)ப்படியே देवादिरूपரான जीवர்களுடைய अन्योन्यभेदமும் सुखदुःखादिव्यवस्थैயாலே प्रामाणिक மாகையால்...

(सा.दी) अत्यन्तभेदமென்று भेदाभेदव्यावृत्ति. स्वभावसिद्धமானவென்று भास्कराभि मतौपाधिक भेदव्यावृत्ति - அப்படியே. स्वभावसिद्धமாகவே. सुखेत्यादि "नानात्मनोव्यवस्थातः" என்று सूत्रोक्तन्यायத்தால்...

(सा.स्वा) तदवान्तरभेदानामपिप्रामाणिकानामनन्तानांबाधः प्रसजेदितिपरपक्षे नुपपत्तिभूयस्त्वमुक्तं भवति. अत्यन्तपदेनभेदाभेदव्यावृत्तिः. प्रमाणेति. यथा संभवं प्रत्यक्षानुमानागमरूपप्रमाणत्रयமும் विवक्षितं. எல்லாமென்றது चेतना चेतन रूपद्रव्यங்களெல்லா மென்றபடி. இதுக்கு ब्रह्मद्रव्य மென்கிறதோடு अन्वयम्. घटिயாது, चेतना चेतनங்களுக்கு स्वरूपतोऽत्यन्तभेदம். प्रमाण सिद्धமாகையால் இவற்றுக்கு ब्रह्मத்திற் காட்டில் स्वरूपतोभेदமில்லை யென்கிறयादववक्षं उपपत्ति विरुद्ध மென்றபடி - तथाचपरदेवतै இன்ன व्यक्ति विशेष மென்று निश्चयिக்ககூடுமென்று கருத்து. இங்கு चेतनानामन्योन्यं स्वरूपतोऽत्यन्तभेदं சொன்ன வித்தாலேதானே तेषा मन्योन्यं स्वरूपैक्यं சொல்லுகிற शङ्कर भास्करमतங்களும் अर्थान्निरस्तங்கள். ஆனாலும் "तदेवाग्नि स्तद्वायुः - हव्यकव्यभुगेक स्त्वंपितृ देवस्वरूपधृक् - आपोवा इदग्ंसर्वं - अग्नि स्सवर्देवताः. सर्वोवैरुद्रः. पुरुष एवेदग्ंसर्वं. प्रजापतिस्सवदिवता" इत्यादि प्रमाणங்களாலே देवतैகளெல்லார்க்கும் स्वरूपैक्यं கொள்ள வேண்டாவோ? अन्यथा अग्न्यादिக ளெல்லார்க்கும் प्रत्येकं सर्वात्मत्वं சொல்லுகிற இந்த प्रमाणங்கள் अन्योन्य विरुद्धங்களாகாதோ? सर्वान्तिर्यामि யொருவனென்கை யன்றோ उपपन्नम् - இப்படி देवतैகளெல்லாரும் एकतत्वமாய்க்கொண்டு अभिन्नரென்று கொள்ளவேண்டுகையால் ईश्वरன் இன்ன देवता विशेषமென்று निष्कर्षिக்ககூடுமோ? என்கிற शङ्कैயிலிங்கு देवतैகள் अभिन्नரென்றது "तदेवाग्नि" रित्यादि प्रमाणங்களைக்கொண்டு ईश्वरனோடு अभिन्न ரென்றபடியோ "अग्निस्सवदिवता" इत्यादिகளைக்கொண்டு देवतैகளெல்லாரும் தன்னில் தான் अभिन्न ரென்ற-படியோ? என்று विकल्पिத்து उत्तर மருளிச் செய்கிறார். स्वभा वेति. அப்படியே யென்றது स्वभावसिद्धமாகவே யென்றபடி. सुखेति. आदिशब्देन ज्ञानतारतम्यादिकं गृह्यते - प्रामाणिकमिति. जीवेश्वरभेदं. पृथ गात्मानं - "द्वासुपर्णा" इत्यादिप्रमाणங்களாலும், देवतैகளுக்கு अन्योन्य भेदं "अष्टौवसवः एकादश रुद्राद्वादशादित्या" इत्यादिप्रमाणங்களாலும் सिद्धமென்றபடி...

(सा.प्र) अत्र "पृथगात्मानं प्रेरितारञ्चमत्वा. भोक्ताभोग्यं प्रेरितारञ्चमत्वे" त्यादिकं विवक्षितं. अत्रतुल्यन्याय तया शङ्करभास्करपक्षावपिनिरस्तौ वेदितव्यौ - चेतनाचेत नैक्यस्थापक युक्तीनां तत्पक्षस्थापकस्याप्य चेतनत्वा पादकत्व रूपं स्वव्याघातंच न जानन्तीतिभावः - देवतैक्यपक्षं व्युदस्यति. स्वभावसिद्धमानेत्यादिना अत्र "यस्यादित्यश्शरीररं. यस्याग्निश्शरीरं. भीषास्माद्वातः ...

(सा.वि) அப்படியே, तेनैवप्रकारेण. प्रामाणिकமாகையால் जीवன்परदेवतैயாயிருக்கிற, ब्रह्मद्रव्यपक्षं घटियाது इति वाक्य भेदेनसम्बन्धः...

**मू- सर्वान्तर्यामि ஒருவனேயாகிலும் ब्रह्मरुद्रेन्द्रादि सर्वदेवतैகளும் ईश्वरனோடும் தன்னில் தானும் अभिन्न ரென்கிற पक्षம் கூடாது...**

(सा.स्वा) அந்த जीवेश्वर भेदमौपाधिक மானாலோ வென்று शङ्कियாமைக்காக स्वभावसिद्ध மானவென்கிற विशेषणं "निरञ्जनः परमंसाम्यमुपैति. ममसाधर्म्यमागताः" इत्यादि भिर्मुक्ति दशायामपि भेद முண்டென்று परिपूर्ण ब्रह्मानुभवाधि कारத்திலே பரக்க उपपादिக்கப்புகுகிற தாகையாலிந்த जीवेश्वर भेदमौपाधिक மன்றென்று अभिप्रायं. ஆகையால் उक्तविकल्पத்தில் आद्यकोटि கூடாதென்று கருத்து. देवतैகளுக்கு अष्टौवसव" इत्यादिகளிற்சொன்ன अन्योन्य भेदमौपाधिक மானாலோவென்று शङ्कियாமைக்காக அப்படியேயென்றிந்த भेदத்துக்கும் स्वभावसिद्धत्वमति देशिக்கப்பட்டது. இந்த भेदं स्वभाव सिद्ध மென்கைக்கு नियामकமேதென்கிற शङ्कावारणार्थं सुखेत्या द्युक्तिः. "नानात्मनोव्यवस्थातः" என்கிறन्याय सूत्रத்தில் जीवानां स्वभावसिद्ध भेदத்துக்கு साधक மாகச் சொன்ன व्यवस्थै யாலே என்றபடி. அந்தव्यवस्थैயாலே जीवர்களுக்கு अन्योन्यमनौपाधिक भेदं सिद्धिக்கிற தத்தனை யொழிய देवतैகளுக்கு सिद्धिக்குமோ? வென்று शङ्कियாமைக்காக देवादि रूपரான வென்கிற विशेषणम्. ब्रह्मादि देवानामपि जीवत्वान्नोक्त शङ्कावकाश इतिभावः. ஆகையால் उक्त विकल्पத்தில் द्वितीयकोटिயும் கூடா தென்று கருத்து. सर्वान्तर्यामीति - सर्वान्तर्यामि யொருவனே யாக வேணுமென்கிற இவ்வளவைக்கொண்டு ब्रह्मादि देवतैகளெல்லாரும் ईश्वरனோடும் தன்னில் தானும் अभिन्न ராக வேணுமென்கிற निर्बन्धமில்லை. இவர்கள் भिन्नர்களானாலும் सर्वान्तर्यामिயா யிருப்பானொருவனேயாயிருக்கலா மிறே என்று கருத்து. तथाच, "तदेवाग्निस्त द्वायु स्तत्सूर्यः. अग्निस्सर्वदेवताः" इत्यादिகள் अग्न्यादि देवानां जीवत्वात् அவர்களுக்கு सर्वात्मत्वத்தைச்சொல்லமாட்டாமையால் अन्यपरங்களா மென்று अभिप्रायम्. देवர்கள் जीव ரென்கைக்கு नियामक முண்டோ? மத்தदेवர்களுக்குண்டானாலும் ब्रह्मरुद्रர்களுக்கதுண்டோ? जगत्सृष्ट्यादिகளைப்பண்ணுகையாலே இவர்களும் ईश्वरकोटि யென்னவேண்டாவோ? किञ्च त्रिमूर्तिमध्ये नारायणனே परனென்றும், மற்றிருவரும் परர் அல்லரென்று निष्कर्षिக்கத்தான் கூடுமோ? त्रिमूर्तिகளும் समரென்றும் त्रिमूर्तिகளும் एकतत्वமென்றும், त्रिमूर्त्युत्तीर्णன் ईश्वरனென்றும், त्रिमूर्तिகளுக்குள்ளே ब्रह्माவாதல், रुद्रनाதல் ईश्वरனென்றும், पक्षங்கள்...

(सा.प्र) पवते भीषोदेति सूर्यः - तंदैवतानां परमञ्च दैवतं - चन्द्रमामनसोजातः - चक्षो स्सूर्यो अजायत - अग्निरवमोदेवतानां विष्णुः परम" इत्यादि प्रमाणं विवक्षितं - एवमात्मैक्यं, अनन्तरोक्तं देवतैक्य पक्षञ्च निरस्य तदनन्तर मुपात्तान् त्रिमूर्तिसाम्यैक्योत्तीर्णविष्णुव्यति रिक्तत्व...

(सा.वि) सर्वान्तर्यामि யொருவனேயாகிலுமிதி. ईश्वरனோடும், ईश्वरेणसहच - தன்னிலுந்தானும், स्वेषां परस्परंच। अन्तर्याम्यैक्येपिनतच्छरीरभूतजीवानामैक्यंनशरीरस्य शरीरिणाचैक्यं संभवतीति

(सा.सं) सर्वान्तर्यामीति. यदिसर्वदेवाः ईश्वरेणाभिन्नास्स्यु स्तर्हि "यआत्मनितिष्ठन्नित्यादिना एकस्सर्वान्तर्यामीति नश्रूयेत. देवास्सर्वेपि सर्वान्तर्यामिण इत्येव श्रूयेत. तथाऽश्रवणात् - सर्वान्तर्यामी एकएवेति श्रवणाच्च. नदैवतैक्यात्मैक्यवादयोरुपपत्ति रित्यर्थः...

**मू - इद्देवतैகளில் प्रधानராகச் சொல்லுகிற ब्रह्मरुद्रेन्द्रादिகளுக்கு कार्यत्वकर्मवश्यत्वங்கள் प्रामाणिकங்களாகையாலும், "आभूतसंप्लवेप्राप्तेप्रलीने प्रकृतौमहान्। एकस्तिष्ठतिविश्वात्मा सतु नारायणः प्रभुः। आद्योनारायणोदेवस्तस्माद्ब्रह्माततोभवः। परोनारायणोदेव स्तस्माज्जातश्चतुर्मुखः। तस्माद्रुद्रोभवद्देवि" इत्यादिகளிலே...**

(सा.दी) "ब्रह्मविष्णु रुद्रेन्द्रास्ते सर्वेसंप्रसूयन्ते" என்று त्रिमूर्तिக்கும் उत्पत्तिதோன்றுகையாலே उत्तीर्णமே जगत्कारण மென்னும் शङ्कैயை परिहरिக்கிறார். स्वेच्छावतीर्णனாய் त्रिमूर्ति मध्यस्थனானவென்று. இதில் उपब्रह्मणं ।। ततस्त्वमपीत्यादि. आभूतसंप्लवः, प्राकृत : प्रळयः...

(सा.स्वा) நடக்கவில்லையோ? வென்னவருளிச்செய்கிறார். इद्देवतैகளிலித्यादि. प्रधानेति. प्रधानानां कार्यत्वकर्मवश्यत्वाभ्यांजीवत्वे तदन्य देवानांजीवत्वंकैमुत्य सिद्धमितिभावः. प्रामाणिकेति. प्रमाणங்களைअनन्तरं தாமேவெளியிடப்புகுகிறார் - आभूतेति. आभूतसंप्लवः. संप्लवः, लयः. आङ शब्दः अत्र अभि व्याप्तिपरः. व्यष्टि कार्याणां स्वकारणभूतसमष्टिरूप पञ्चभूतान्यभिव्याप्यलये प्राप्तेसतीत्यर्थः समष्टिभूतानामपिलये सतीतियावत्. महानिति. विभक्तिव्यत्ययः. महतीत्यर्थः. महत्तत्वेप्रकृतौप्रलीन इत्यन्वयः. अत्र इन्द्रिया हङ्काराणा मपिलयोर्थसिद्धः. तिष्ठति, ब्रह्मादिदेवाना मत्यन्त सङ्कुचितज्ञान त्वादिरूपलयेसत्यपि तदस्पृष्टोवर्ततइत्यर्थः. "जगच्चस" इत्यादिभिरीश्वरस्यैव प्रपञ्चरूपत्वात्तस्यकथं प्रळयेवस्थान मित्यत्राह. विश्वात्मेति. नहि शरीरनाशेआत्म नाशोस्तीतिभावः. इत्यादिகளிலே என்கிறத்துக்கு सर्वजगत्तुக்கும் कारण மென்கையாலும் என்கிறத்தோடே अन्वयम्. नारायणன் चतुर्मुख जनकனானாலும் இவனை सर्वजगத்துக்கும் कारणமென்னப்போமோ? त्रिमूर्तिகளுக்குள்ளே ஒருவனாய்க்கொண்டு विष्णु शब्दवाच्यனா யிருக்கிறவனேயன்றோ नारायणशब्द वाच्यனும்? அந்த विष्णु வக்கு "ब्रह्मविष्णु रुद्रेन्द्रास्तेसर्वेसम्प्रसूयन्त" इत्यादिகளிலே ब्रह्म रुद्रர்களோடு तुल्यமாக

(सा.प्र) पक्षानेकेनवाक्येनक्रमेणदूषयति. இத்தேவதைகளித்यादिना. इन्द्राग्न्यादीति दृष्टान्तार्थम् - यथाश्रुतिषु ईश्वरत्वेनप्रतिपादितानामग्नीन्द्रादीनांकार्यत्व कर्मवश्यत्वाभ्यामनीश्वरत्वं तथाताभ्यामेवकार्यत्व कर्मवश्यत्वाभ्यां ब्रह्मरुद्रयोरप्यनीश्वरत्वमितिभावः - ननु "हिरण्यगर्भस्समवर्तताग्र" इत्यादिभिः प्रसिद्ध हिरण्यगर्भादीनां सृष्टृत्वावगमान्नारायणस्य सर्वकारणत्वं नोपपद्यत इत्यत्राह. आभूत संप्लव इत्यादिना - "ब्रह्मादिषु प्रलीनेषु नष्टेलोके चराचर" इतिहि ततः पूर्व मुक्तं - एवञ्च "नब्रह्मा नेशान" इतिवन्नारायणा भाव बोधक प्रमाणाभावात्. तयो र्नारायणा ज्जातत्वस्य श्रुतिष्वे वदर्श नाच्च तयोर वरत्वं नारायणस्य परत्वंच सिद्धमिति भावः - तस्यापि "ब्रह्म विष्णु रुद्रेन्द्रास्तेस र्वे...

(सा.वि) भावः तस्माद्रुद्रोभवद्दे वीत्यादिகளிலே इत्यस्य सर्वजगத்துக்கும் कारण மென்கையாலு मित्यने नान्वयः - ननु "ब्रह्मविष्णुरुद्रेन्द्रास्तेसर्वेसंप्रसूयन्ते" इतिविष्णोरुत्पत्ति श्रवणात्कथं कारणत्वं...

(सा. सं) - आभूतसंप्लवे. आङ्भींविधौ - सकलभूतनाश इत्यर्थः - इत्यादिகளிலே इत्यस्य என்கையாலு

मू– ''ततस्त्वमपिदुर्धर्ष स्तस्माद्भावात्सनातनात् । रक्षार्थंसर्वभूतानां विष्णुत्व मुपजग्मिवान्'' என்கிறபடியே **स्वेच्छावतीर्ण**னாய் **त्रिमूर्ति मध्यस्थ**னான **विष्णुनारायणादिशब्दवाच्य**ன் தானே தன்னுடைய **पूर्वावस्थै**யாலே **सर्वजग**த்துக்கும் **कारण** மென்கையாலும்...

(सा.दी) तस्माद्भावात्, नारायणभावात्. परस्माद्भावाதென்கை. रक्षार्थं, नतु कर्म फल...

(सा.स्वा) उत्पत्तिश्रुतैயாயிருக்கையாலே இந்த विष्णु नारायणादि शब्दवाच्यனுக்கு सर्वजगत्कारणत्वंகூடாமையால் त्रिमूर्त्युत्तीर्ण மேजगत्कारणமென்ன வேண்டாவோ? அந்த श्रुतिயில் विष्णुவுக்கு उत्पत्ति कर्मकृतैயென்று कण्ठोक्ति யில்லாமையாலும் प्रायपाठादिन्यायं विष्णोरुत्पत्ति स्वेच्छा मात्र मूलैயென்று विशेषित्துச்சொல்லுகிற वचनத்தோடு विरोधத்தாலே अवतरिக்கமாட்டாமையாலும் இவனுக்கு ब्रह्मरुद्रतुल्योत्पत्ति யில்லாமையாலே இவன்தானே सर्वजगत्तुக்கும் कारण மாகலாமே என்னில் இவனுக்கு उत्पत्ति स्वेच्छा मात्रमूलैயென்று சொல்லுகிற அந்த वचन மேதென்ன வருளிச்செய்கிறார். ततस्त्वमित्यादि. इदंचतुर्मुख वाक्यं. ततः, मत्कृतोपासनानन्तरमित्यर्थः. तस्माद्भावात्, पूर्वप्रकृता द्रूपादित्यर्थः. पूर्वत्रहि पद्मेदिव्य इत्यादिना नाभिपद्मे चतुर्मुखोत्पादकं नारायणस्य रूपं प्रकृतं. तथाच स्वस्मादेव स्वस्योत्पत्तिरूपत्वादियं उत्पत्तिर्न कर्मकृतेति भावः- रक्षार्थमिति, नतुकर्मफलभोगार्थ मितिभावः. विष्णुत्वं त्रिमूर्ति मध्यस्थविष्णवाख्यावतार विग्रहविशिष्टत्व मित्यर्थः, अत्र विष्णु रजनिष्ठा इत्यनुक्त्वा विष्णुत्व मुपजग्मि वानित्येव मुक्त्या चतुर्मुखादि जनिवदस्य जनिर्नास्ति. किन्तुस्वेच्छया स्वय मेवा वतीर्णत्वमात्र मितिव्यज्यते. त्रिमूर्तिमध्यस्थस्यकथं- सर्वजगत्कारणत्वं तस्यब्रह्मोत्पत्यनन्तरोत्पन्नत्वादित्यत्राह. தன்னுடையवित्यादि. पूर्वावस्थै...

(सा.प्र) संप्रसूयन्ते'' इत्युत्पत्ति श्रवणात्त्रिमूर्तिव्यतिरिक्तः कारणवाक्य प्रतिपाद्य इत्यत्राह - ततस्त्वमपि दुर्धर्ष इत्यादिना - ततस्त्वमित्यस्मा त्पूर्वत्र ''पद्मे दिव्येर्क सङ्काशेनाभ्या मुत्पाद्यमामपि । प्राजापत्यंत्वयाकर्म सर्वंमयिनिवेशित'' मित्युक्तत्वान्नारायण एव विष्णुत्व मापन्न इति विष्णु नारायणयोरैक्या वगमात्तदुत्पत्तेश्च ''अजायमानो बहुधा विजायत'' इत्यादि श्रुत्यावतार रूपत्वावगमाद्ब्रह्मरुद्रयो रुत्पत्ति मत्व प्रयुक्त कर्मवश्यत्वस्यानपोदि तत्वाच्च नारायण एव परमकारण मितिभावः- ''तस्माद्रुद्रोभवद्देवी'' त्यादिகளிலே इत्यस्य सर्वजगத்துக்கும் कारणமென்கையாலு मित्यनेनान्वयः. एतदुक्तं भवति -''ब्रह्मादिषु...

(सा.वि) इत्यत्राह - ततस्त्वमपीति. सनातनाद्भावात्. परभावाद्विष्णुत्वमुपजग्मि वानिति त्रिमूर्तिमध्ये रक्षार्थं स्वेच्छावतीर्ण इत्यर्थः. ''अजायमानोबहुधाविजायत'' इति श्रुत्याकर्माधीन जननराहित्याध्यवसायात्. सनातनादित्येतत्पदं नारायणपरमेव - ''पद्मेदिव्यार्क सङ्काशे नाभ्यामुत्पाद्यमामपि । प्राजापत्यंत्वयाकर्म सर्वंमयिनिवेशितं'' इति पूर्व वचने भगवन्तंप्रतिचतुर्मुखोक्तेः. पूर्वावस्थैயாலே, सृष्टिप्राक्काल वृत्यवस्थया- अतो नातिरिक्त कारणशङ्केतिभावः...

(सा.सं) मित्यनेनान्वयः - विष्णुत्व मुपजग्मिवान्, विष्णुत्वेनावतीर्णवान्...

मू– ''नित्यंहिनास्तिजगतिभूतं स्थावरजङ्गमं ऋतेत मेकंपुरुषं वासुदेवंसनातनं'' என்கிறபடியே அவனே नित्यனென்கையாலும், त्रिमूर्तिகளும் समரென்றும், त्रिमूर्तिகள் एकतत्वமென்றும், त्रिमूर्त्युत्तीर्णன் ईश्वरனென்றும், त्रिमूर्तिகளுக்குள்ளே ब्रह्माவாதல் - रुद्रனாதல் ईश्वर னென்றும் சொல்லுகிற साम्य ऐक्य उत्तीर्ण व्यक्त्यन्तरपक्षங்கள் घटियाது. ब्रह्मरुद्रादिகள் सर्वेश्वरனுக்கு कार्यभूतரென்னுமிடம்...

---

(सा.स्वा) - तस्माद्वावा दित्युक्तावस्थै. नित्यंहि नास्तिजगती वासुदेव विग्रहस्य नित्यत्व पर मिदं वचनं. ''नित्यत्वं वासुदेवाह्वयवपुषिजगा'' विति तत्व मुक्ताकलापोक्तेः. साम्येत्यादि. ब्रह्मरुद्रयोः कार्यत्व कर्मवश्यत्वाभ्यां साम्यैक्य व्यक्त्यन्तर पक्षங்கள் மூன்றும் चतुर्मुखोत्पादकனாய்க்கொண்டு मूलकारण மானவனே स्वेच्छैயாலே ब्रह्मरुद्रमध्यத்தில்अवतरித்தானத்தனைப்போக்கி இந்த त्रिमूर्ति मध्यस्थனுக்கு அந்த मूलकारणத்தில் காட்டில் भेदமில்லை என்கையாலே उत्तीर्ण पक्षமுமிந்த त्रिमूर्ति मध्यस्थனே सर्रजग த்துக்கும் कारण மென்கையாலே पक्ष चतुष्टयமும் இவனொருவன் ஒழிய வேறொருவன்नित्यனல்ல னென்கையாலும் पक्ष चतुष्टयமும் घटियाயா தென்றபடி. त्रिमूर्तिகளும் सम रित्यादिயாகச்சொன்னதே யமைந்திருக்க இप्पक्ष चतुष्टयத்தையும் साम्यैक्येत्या-दिना पुनरनुवदित्தது. साम्यपक्षத்தில் ऐक्यादि प्रमाणங்களும் ऐक्यपक्षத்திலே साम्यादि प्रमाणங்களு மென்றிப்புடைகளிலே प्रमाणங்க ளெல்லாம் ஒன்றோடு ஒன்று சேராமல் व्याकुलங்களா யொழிகையாலும் இप्पक्षचतुष्टयமும் अत्यन्तानुपपन्न மென்று व्यञ्जिप्पिக்கைக்காக. तस्मान्न वैयर्थ्य शङ्कावकाशः. ब्रह्मरुद्रयोः कार्यत्वं प्रामाणिक மென்று सिद्धवत्करித்துச் சொன்னது கூடுமோ? அதெத்தாலே सिद्धं. ''आद्यो नारायणो देव इत्यादिயாக இங்கு उदाहरित्त श्रीवराहपुराणवचनங்கள் भगवतः कारणत्वमुखेन இவர்களுக்கு कार्यत्वं சொல்லுகையாலத்தாலேதானே सिद्धமென்றில் அது भगवाன்தான் சொன்னதன்றோ? तटस्थரான ऋष्यादिகள் சொல்லவேண்டாவோ என்னவருளிச்செய்கிறார் ब्रह्म रुद्रादिகளித்யादि. இங்கு कार्यत्वमात्रத்தில் प्रमाणमुदाहरिक्क வேண்டி யிருக்க सर्वेश्वर...

---

(सा.प्र) प्रलीनेषु आद्योनारायणोदेवः- परोनारायणोदेव'' इत्यादिभिस्सृष्टतयावगतस्यना रायणस्यतत्स्रष्टतयातत्सृष्टसृष्टतयाचावगतयोर्ब्रह्मरुद्रयोश्चैक्यसाम्ययो रसम्भवाच्छ्रीपतिसृष्टयो स्तयोस्स्वकारणभूतात्तस्मापरत्वानुपपत्तेः. ''सृष्टिस्थित्यन्तकरणींब्रह्म विष्णु शिवात्मिकां। ससंज्ञां यातिभगवानेक एवजनार्दनः'' इत्यस्य ''विष्णु रात्माभगवतोभवस्यामित तेजसः। हरो हरतितद्वशः, सष्टिंततः करिष्यामित्वा माविश्य प्रजापते'' इत्याद्यनुसारेणान्तर्यामित्वेनाप्युपपत्तेः. ''अस्येशानाजगतोविष्णु पत्नी - पद्मेदिव्येर्क सङ्काशेनाभ्या मुत्पाद्यमामपी'' त्यारभ्य ''विष्णुत्व मुपजग्मिवा'' नित्यादिभिर्नारायणस्यैव त्रिमूर्ति मध्यस्थ विष्णुत्वावगमा न्नित्यंहि नास्तीत्यनेन ''सहस्रशीर्षं देव'' मित्यत्र नारायणत्वेनोक्तात्पुरुष शब्द वाच्य वासुदेवाद्व्यतिरिक्तस्या नित्यत्वोक्तेश्च कारणस्य त्रिमूर्त्युत्तीर्णत्वा नुपपत्तेश्च परमकारणं नारायण एवेति. एवं पक्षान्तराणा मनुपपत्तिं सङ्ग्रहेणोक्त्वा पुनरपि ब्रह्मरुद्रयोः कार्यत्व कर्मवश्यत्वे बहुभिः प्रमाणैः प्रदर्शयन् शीघ्रफल प्रदत्वादिना मनुष्यैः प्रायशस्सेव्यमानयो स्तयोरवरत्वं स्फोरयति. ब्रह्मरुद्रादिகள் इत्यादिना...

**मू– ''तद्विसृष्टस्सपुरुषोलोके ब्रह्मेतिकीर्त्यते'' इत्यादिகளாலும், ''संक्षिप्यचपुरालोकान्माय यास्वयमेवहि। महार्णविशयानोप्सुमांत्वं पूर्वमजीजनः। क इतिब्रह्मणोनाम ईशोहं सर्वदेहिनां। आवांतवाङ्गेसम्भूतौ तस्मात्केशवनामवान्। अहंप्रसादजस्तस्यकस्मिंश्चित्कारणान्तरे। त्वञ्चैवक्रोधजस्तात पूर्वसर्गेसनातनः (ने)'' என்று எதிரிகையாலே விடுதீட்டானபடியே அவர்கள் தங்கள் பாசுரங்களாலும் सिद्धம்...**

(सा.दी) भोगार्थ मित्यर्थः - இது श्रीरामायणवचनं. मायया, सङ्कल्प रूपज्ञानेन. तस्य, नारायणस्य. कस्मिंश्चिदिति, केनचित्कारणेनेत्यर्थः। விடுதீட்டு, கடன்காரன் தன் கையாலே நமக்கெல்லா द्रव्यமும் சென்றது நீ இனி நமக்குத்தர வேண்டுவதொன்றுமில்லை யென்று கடனாளிக்குக் கொடுத்த தீட்டு. ब्रह्म...

(सा.स्वा) னுக்கு कार्यभूत ரென்று தொடங்கி இப்படி कार्यत्व विशेषத்தில் उदाहरिத்தது कार्यभूतனுக்கு अकार्यभूतனோடுऐक्यादिகள்घटिயாதவளவன்றிக்கே तत्कार्यभूतனுக்கு तदैक्यादिகள் सुतरांघटिயாதென்று अधिक दूषण ज्ञापनार्थं. तद्विसृष्टः என்கிறவிது मनुवचनंமாகையாலே तटस्थवचन மென்று கருத்து. तद्विसृष्टः, नारायणेन सृष्टः. ''आपोनारा'' इतितत्र्य पूर्वश्लोके नारायणस्य प्रकृतत्वात्. आदि शब्देन ''यन्नाभिजातादरविन्दकोशाद्ब्रह्माविरासी द्यतएषलोक'' इत्यादीनांश्रीशुकादिमहर्षि वचनानांसङ्ग्रहः. तटस्थवचनमात्र மன்றிக்கே அதனைக் காட்டிலும் साधकतमங்களான எதிராளி பாசுரங்களையும் उदाहरिக்கிறார். संक्षिप्येत्यादि-யால்-இவ்விशेषज्ञापनार्थமாகவே இந்த ब्रह्मरुद्रवचनங்களை मन्वादि वचनங்களோடு சேர उदाहरिயாமல் भिन्न वाक्यத்தாலே उदाहरिத்தது - संक्षिप्य चेत्ये तद्ब्रह्म वचनं. मायया, सङ्कल्प रूप ज्ञानेन. कइति ब्रह्मण इत्ये तद्रुद्र वचनं. अहं प्रसादजइत्येत द्रुद्रंप्रति ब्रह्म वचनं. இத்தை संक्षिप्यच என்கிற ब्रह्म वचनத்தோடு சொல்லாமல் कइति ब्रह्मण வென்கிற रुद्र वचनத்துக்கு अनन्तर மெடுத்தது இந்த वचनங்களிரண்டும் सर्वेश्वरனைக்குறித்துச் சொன்னவையாகையாலே அவற்றிற் காட்டிலிதுக்கு विशेष ज्ञापनार्थम्. सर्वेश्वरனுடைய समक्षத்தில்சொன்ன மாத்திர மன்றிக்கே परोक्ष த்திலு மிவர்கள் இவ் अर्थத்தை अन्योन्यं सहृदयமாகச்சொல்லிக்கொண்டார்களென்கிற विशेष முண்டிறே. कस्मिंश्चित्कारणान्तर इत्ये तत्पूर्वोत्तर योरन्वेति. कस्मिंश्चित्प्रसाद कारण विशेषे क्रोध कारण विशेषेच सतीत्यर्थः. எதிரி கையாலே, எதிராளிகையாலே. விடுதீட்டு, தொடரா முரி. அதாவது विवद मानரான இருவரில் தோற்றவன் जयिத்தவனுக்கினி நான் தொடரக்கடவனல்லே னென்று स्वहस्त लिखित மாகக்கொடுத்த पत्रिकै. அவர்கள் தங்களிதி. लोकத்தில் स्वामिवाक्यத்தில் காட்டிலும், मध्यस्थ वाक्यத்தில் காட்டிலும், प्रतिवादिகொடுத்த விடுதீட்டு साधकतमமான प्रकारத்திலே யிவர்கள்...

(सा.प्र) எதிரிகையாலே விடுதீட்டானபடியே, प्रतिवादिहस्तेनैव दत्त जयपत्र तया-ब्रह्म रुद्रयो...

(सा.वि) எதிரிகையாலே, प्रतिवादि हस्तेनैव. விடுதீட்டானபடியே, दत्त जयपत्रप्रकारेण. ऋणिना ऋणं प्रत्यर्प्य उत्तमर्णेन मद्द्रव्यं ममार्पितमिति लिखित पत्र प्रकारेणेति केचित्. அவர்...

(सा.सं) तद्विसृष्टः, तेनविशिष्य सृष्टः - अजीजनः, उत्पादितवान्. எதிரிகையாலே விடுதீட்டான படியே...

मू– இவர்கள் **कर्मवश्य**ராய் சில**कर्मविशेष**ங்களாலே **सर्वेश्वर**னை **आराधि**த்து தந்தாம் **पद**ங்களைப் பெற்றார்களென்னு மிடம், **सर्वेदेवावासु देवं यजन्ते सर्वेदेवावासुदेवं नमन्ते । सब्रह्मकास्सरुद्राश्चसेन्द्रादेवामहर्षयः।अर्चयन्तिसुरश्रेष्ठंदेवंनारायणं हरिं। चिन्तयन्तोहियंनित्यं ब्रह्मेशानादयः प्रभुं ।। निश्चयंनाधिगच्छन्ति तमस्मि शरणंगतः । पद्मेदिव्येर्कसङ्काशे नाभ्यामुत्पाद्यमामपि । प्राजापत्यंत्वयाकर्म सर्वंमयिनिवेशितं । सोहं सन्यस्तभारोहि त्वा मुपासे जगत्पतिं । युगकोटिसहस्राणिविष्णुमाराध्यपद्मभूः। पुनस्त्रैलोक्यधातृत्वं प्राप्तवानितिशुश्रुम।**

(सा.दी) रुद्रர்கள் वचनங்கள் தன்னாலும் सिद्धமென்கை - निश्चयंनाधि गच्छन्ति, ईदृश स्वरूपादि மானென்று परिच्छेदिக்க மாட்டார்கள். त्रैलोक्यधातृत्वं, त्रैलोक्य सृष्टृत्वं...

(सा.स्वा) பாசுரங்கள் प्रस्तुतार्थத்தில் மிகவும் साधकतमங்களென்று கருத்து. இப்படி कार्यभूतரென்னுமிடம் सिद्धமானாலும் இவர்கள் कर्म वश्यரென்கைக்கு नियामक முண்டோ? இவர்கள் शास्त्रचोदित कर्म विशेषங்களை अनुष्ठिக்கைதான் नियामकமென்றில் कर्म वश्यனல்லாத भगवाனும் அப்படி अनुष्ठिக்க வில்லையோ? இவர்கள் अनुष्ठानத்தில் विशेष முண்டோ? தந்தாம் पदं பெறுகைக்காக अनुष्ठिக்கை विशेष மென்றி லதில் प्रमाण முண்டோ? வென்ன வருளிச்செய்கிறார். இவர்களித்यादि. தந்தாமிति. ब्रह्मत्व रुद्रत्वादि रूपமான தந்தாம்पदं பெறுகைக்காக अनुष्ठिத்தார் களாகையாலே இவர்கள் कर्मवश्यராய் अनुष्ठिக்கிறார்கள். அப்படி இவன் विष्णुत्व மாகிற தன் पदं பெறுகைக்காக அன்றிக்கே केवल लोक सङ्ग्रहार्थं अनुष्ठिக்கிறானத்தனையாகையாலே कर्मवश्यனாய் अनुष्ठिக்கிறவனல்லன் என்று கருத்து - இங்கு சிலकर्म विशेषங்களாலே தந்தாம்पदं பெற்றார்கள் என்றிவ்வளவே அமைந்திருக்க सर्वेश्वरனை आराधिத்து - என்று अधिकं சொன்னது कर्मवश्यருக்கு अकर्म वश्यனோடு साम्यैक्यादिகள் घटिயா தென்கிற விவ்வள வன்றிக்கே तदाराधकருக்கு तत्साम्यादिகள் सुतरांघटि யா தென்றுअधिक दूषण ज्ञापनार्थं. सर्वे देवा इत्यत्र असङ्कोचाद्ब्रह्म रुद्रयोरपि ग्रहणं. सब्रह्मका इत्यादि. कर्मवश्यतया भगव दाराधकत्वे तदधीनाति शय भाक्त्वेच ब्रह्म रुद्रयो रितरैर विशेष ज्ञापनार्थं तैस्सहेत्युक्तिः. तत्रच ''कोमज्ञतो'' रित्यादि न्यायात्प्राधान्य मकिञ्चि त्करमिति ज्ञापनाय सब्रह्मका इत्यादिना तयोर प्राधान्योक्तिश्चेति भावः. चिन्तयन्त इत्यनेन ध्यानरूप कर्म विशेषा नुष्ठातृत्व मुच्यते. निश्चयं नाधि गच्छन्तीति कर्मणाति रोधा नादिति भावः पद्मे दिव्य इति. लोकोत्तर मेवं विध नाभि पद्मे जन्मापि. भगव दाराधन फलमित्यभि प्रायेणात्रपूर्वार्धोऽपादानं. प्राजापत्यं कर्म, प्राजापतिपद स्थेनाधिकर्तव्यं जगत्सृष्ट्यादि कर्मेऽत्यर्थः, धातृत्वं, सृष्टृत्वं...

(सा.प्र) भगवदैक्यसाम्यादिपक्षाणांतयोर्भगवत्सृष्टत्व, तन्नमस्कर्तृत्व, तदर्चकत्व, तद्ध्यातृत्व, तदधीनव्यापारत्व, तल्लब्धैश्वर्यत्वबोधक प्रमाणविरोधमभि प्रेत्याह - இவர்கள் कर्मवश्यராய்...

(सा.वि) पाशुरங்களாலும் तेषामुक्तिभिश्च. தந்தாம் பदங்களை, सस्वस्थानानि. பெற்றார்கள், प्राप्त वन्तः...

(सा.सं) प्रति व्यव हर्त्रैवदत्त विशुद्ध पत्रिके वस्थिता...

**मू - साध्य**மாக **अनुवदि**க்கப்படும் அது **फलम्** । **तदर्थ**மாக **साध्य**மாக **विधि**க்கப்படுமது **उपायम्** । இங்கு **मुमुक्षुत्व**முண்டாய் **स्वतन्त्र प्रपत्तिरूपमोक्षोपाय विशेषनिष्ठ**னுக்கு **शास्त्रजन्यसम्बन्ध- ज्ञानादि**கள் **उपासक**னோடு **साधारण**மாயிருக்க...

---

(सा.दी) उपाय்த்தைக் காட்டுகிறார். तदर्थமாக इत्यादिயால்...

---

(सा.स्वा) கருத்து. तदर्थமென்றதுவும் साभिप्रायविशेषणम् । कष्टं कर्मेति न्यायात् । उपायं स्वतस्सुन्दरமல்லாமையாலே तस्य साध्यत्वं फलार्थமாக வந்ததத்தனை போக்கி रागादेव प्राप्तமல்லாமையாலதுவே இது विधेयமாகைக்கு नियामकமென்று கருத்து. இங்கு साध्यமாக विधिக்கப்படுமது என்கிற पाठமே उपादेयम् இப்படியே प्राचीनबहुकोशங்களில் காண்கை யாலும் நம் दर्शनத்தில் साध्यமே विध्यर्थமாகையாலும், साधनமாகவென்கிற पाठத்தில் साधन शब्दं निरर्थकமாக प्रसङ्गिக்கையாலுமந்த पाठं लेखकभ्रान्ति मूलமென்று கண்டு கொள்வது. இப்படி अधिकारसामान्यं निरूपितமானாலும், प्रपत्तिக்கு प्रतिनियतமாக ஓர் अधिकारं दुर्निरूप மன்றோ? आकिञ्चन्यं முன்பு சொன்னபடியே अति प्रसक्तமன்றோ? किञ्च, सर्वव्यापार सामर्थ्या-भावरूपाकिञ्चन्यं स्वतन्त्र प्रपत्ति निष्ठेष्व संभावितமன்றோ? यत्किञ्चिदाकिञ्चन्यमुपासक साधारण மன்றோ? अपि च இந்த शास्त्रத்தில் सारतमமான मोक्षार्थ स्वतन्त्र प्रपत्तिக்கு प्रतिनियतமான अधिकारविशेषமும், दुर्निरूपமன்றோ? त्वदभिमतமான आकिञ्चन्यं प्रयोजनान्तरार्थ प्रपत्तिनिष्ठेष्वति प्रसक्तமன்றோ? अनन्यगतित्वमुपासकेष्वति प्रसक्तமன்றோ? என்னவருளிச் செய்கிறார். இங்கு इत्यादि । இங்கென்றது अधिकार सामान्य निरूपितமாய் இனி तद्विशेषं प्रस्तुतமானவிடத்தி லென்றபடி. मुमुक्षुत्व पदத்தாலும், उपाय पदத்தாலும் फलार्थित्वे सत्युपाय सामर्थ्यरूपமான अधिकार सामान्यத்துக்கவன் பக்கல் अनुवृत्ति காட்டித்தாகிறது - सामान्यकारानुवृत्तिप्रदर्शन...

---

(सा.प्र) गतिं दर्शयन्प्रपदने अधिकार विशेषं दर्शयति । இங்கு मुमुक्षुत्वமுண்டா इति । मुमुक्षुत्वं सम्बन्ध ज्ञानादिश्च साधारणाकार इत्यर्थः यद्यप्युपासकस्याप्यैश्वर्यकैवल्यापेक्षानास्ति ।...

---

(सा.वि) இதுடையவனுக்கு, एतदधिकारवतः । साध्यமாக अनुवदिக்கப்பட்டது, साध्यत्वेनानूद्य-मानं - फलस्याविधेयत्वादिति भावः । प्रयाजाद्यङ्गजन्याधिकारस्यदर्शपूर्णमासाधिकारिणः फलत्वा-भावात्प्रयोजनமாய் इत्युक्तम् । तस्य तदनुद्देश्यमिति न प्रयोजनम् । सिद्धरूप भगवद्व्यावृत्तये साध्यமான इति । अधिकारघटकफलस्यात्र निरूप्यत्वात्तद्व्यावृत्तिरिह कार्या - तदर्थमाह - साध्यமான इति । ''ज्योतिष्टोमेन स्वर्गकामे यजेत'' इत्यादौ ज्येतिष्टोमेन यागेन स्वर्गं कुर्यादिति विधीयमान ज्योतिष्टोमादिरित्यर्थः । साधारणமாயிருக்க, भक्त्यादि साधारण्ये सतीत्यर्थः ।...

---

(सा.सं) तदर्थமாக इत्यादिना प्रपत्तेरनुपायत्ववादनिरासः फलितः । अथ प्रपत्तेर्विशेषाधिकारान्-वक्तुमुपक्रमते । இங்கு इत्यादिना । सम्बन्ध ज्ञानादीत्यादि पदेनार्थ पञ्चकज्ञानमुच्यते । स्वतन्त्र प्रपत्तिरूप मोक्षोपाय विशेषेत्युक्त्या भक्तिनिर्वृत्ति प्रतिबन्धक पापनिवर्तने भक्त्यङ्ग प्रपत्तिरपि स्वतन्त्रैव - सा, न तस्य मोक्षोपाय इति सर्वेधा अकिञ्चन प्रपत्तेस्तद्व्यावृत्तिस्सिद्धा भवति ।...

**मू - विशेषित्त्த अधिकारं, தன்னுடைய आकिञ्चन्यமும், अनन्य गतित्वமும் । आकिञ्चन्य மாவது, उपायान्तरसामर्थ्याभावम् । अनन्यगतित्वமாவது, प्रयोजनान्तरवैमुख्यम्**

(सा.दी) आकिञ्चन्यத்தை வெளியிடுகிறார். आकिञ्चन्यமாவதென்று - प्रयोजनान्तरवैमुख्यमिति । अत्र गति शब्दं कर्मव्युत्पत्तियாலே फलपरम् । शरण्यान्तरं, देवतान्तरम् । इतरत्र करणव्युत्पत्त्या प्रापकपरम् ।...

(सा.स्वा) पूर्वकं विशेषाकारं சொல்லுகை उचितமிறே. मोक्षोपाय विशेषेति । இவ்விशेषத்துக்கு आकिञ्चन्यानन्यगतित्वसमुदायमधिकारமென்கையாலும் प्रयोजनान्तरवैमुख्यरूपமான अनन्यगतित्वं फलान्तर प्रपत्तिनिष्ठன் பக்கல் बाधितமாகையாலும் आकिञ्चन्यं प्रपत्ति सामान्यத்துக்கு अधिकार மென்றிங்கு अर्थात् ज्ञापितமாகிறது. இத்தால் प्रपत्ति सामान्यத்துக்கு अधिकारं சொல்லாதே तद्विशेषத்துக்கு अधिकारं சொல்லுகை अनुचितமன்றோ வென்கிற चोद्यं परिहृतम् । शास्त्रेत्यादि । अत्र सम्बन्ध ज्ञानादेरुपासक साधारणत्वकथनं शेषत्वपारतन्त्र्यादिज्ञानमेव मोक्षार्थस्वतन्त्र प्रपत्तेः प्रतिनियताधिकार इति मतमनुपन्नमिति ज्ञापनार्थम् । विशेषத்தையென்றது प्रमाण सम्प्रदायैर-साधारणतयोक्तமானவென்றபடி. இங்கு தன்னுடைய என்று अधिकपदं प्रयोगित्तது स्वतन्त्र प्रपत्ति सामर्थ्यமுடையவனுக்குள்ள आकिञ्चन्यமே अधिकारानु प्रविष्टமென்று ज्ञापिக்கைக்காக. இத்தால் नामसङ्कीर्तनादि निष्ठेष्वतिप्रसङ्गचोद्यமும் यत्किञ्चिदाकिञ्चन्यं वा यावद्वेति विकल्पचोद्यமும் परिहृतम् । आकिञ्चन्यமும் इत्यादि । अत्र च शब्दः इतरेतरयोगपरः । तदुभयं समुदितमेवाधिकार इति भावः । तेनाकिञ्चन्यानन्यगतित्वयोरेकैकमादाय कृतमति प्रसङ्गचोद्यं परिहृतम् । இங்கு आकि-ञ्चन्यமென்று. दरिद्रत्वं विवक्षितமாகில் आढ्यனுக்கு प्रपत्तियிலும், दरिद्रனுக்கு भक्तियிலும், अधिकारமில்லையென்றதாக प्रसङ्गियாதோ? उपायरहितत्वமென்னில் भक्त्यारम्भात्पूर्वमुपासक-स्यापि तत्सत्त्वात् இது प्रपत्तिக்கு विशेषाधिकारமாக மாட்டாதொழியாதோ? இனி उपायसा-मर्थ्यभावமென்னில் प्रपत्तिरूपोपाय समर्थனான இவன் பக்கல் असंभवग्रस्तமாகாதோ? என்ன வருளிச் செய்கிறார். आकिञ्चन्यமாவது इत्यादि । अनन्यगतित्वमित्यत्र गतिशब्देनोपायो विवक्षितश्चेदनन्यगतित्वमाकिञ्चन्यादभिन्नं स्यात् । प्रयोजनं विवक्षितं चेदनन्य गतित्वस्योपासक साधारणत्व-प्रसङ्गादपसिद्धान्तस्स्यादित्यत्राह । अनन्यगतित्वமாவது इत्यादि । वैमुख्यम,...

(सा.प्र) तथापि भक्तेः प्रारब्ध व्यतिरिक्ताघनाशकत्वात्तत्र प्रवृत्तस्य प्ररब्ध सुकृत फलभूतैश्वर्यादि साकाङ्क्षत्वमस्त्येव - तदभावे तत्र प्रवृत्त्यनु प्रपत्तेः । प्रपन्नस्य तु प्रारब्धेऽपि निरकाङ्क्षत्वरूप प्रयोज-नान्तर वैमुख्यमधिकार इत्यर्थः । गम्यते प्राप्यते इति गतिशब्दः प्रयोजन वाचीत्यनन्य प्रयोजनत्वमर्थः । ''गतिश्चासि जगताम् । गतिर्गम्यं शिक्षितम्'' इत्यादाविवगम्यते रक्षकतया...

(सा.वि) अनन्यगतित्वமாவது इति । गम्यतेप्राप्यत इति गतिः । प्रयोजनं । अतः अनन्यगतित्वं प्रयोज नान्तरवैमुख्यंभवतीति भावः । गम्यतेऽनयेति गतिरितिगतिशब्दस्य प्रापकवाचकत्वादनन्यशरणत्व...

(सा.सं) प्रयोजनान्तरवैमुख्यं चेदनन्यगतित्वम् । तर्हि शरण्यान्तरवैमुख्यस्य विशेषधिकारता...

**मू - शरण्यान्तरवैमुख्यமாகவுமாம் - இது प्रयोजनान्तर वैमुख्यத்தாலும் अर्थसिद्धம் இவ்अर्थम् ''ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृताः । प्रतिबुद्धा न सेवन्ते यस्मात्परिमितं फलम्''**

---

(सा.दी) இது शरण्यान्तरवैमुख्यं ஆகையால் अनन्यप्रयोजनत्वमनन्य गतिकत्वமென்றமைய மென்கை. இத்தை उपपादिக்கிறார். இவ்अर्थமென்று अपरिमितफलार्थिகளான प्रतिबुद्धர் अन्य देवतैகளை सेविயா...

---

(सा.स्वा) असहिष्णुत्वम् । उपासकस्यतु प्रयोजनान्तरासक्त्यभावेऽपि तत्सहिष्णुत्वान्नति प्रसङ्ग इति भावः । उपायान्तर सद्भावத்தில் போலே शरण्यान्तर सद्भावத்திலுமிவனுக்கு तदेकोपायत्वाध्यव-सायात्मक भरन्यास रूपोपाय निष्पत्तिघटियाமையாலே शरण्यान्तरवैमुख्यமிவ் अधिकारिக்கு आवश्यकமாகையாலது தானிங்கு अनन्यगतित्वமாகலாகாதோ? என்னவருளிச் செய்கிறார். शरण्येति । अत्र वैमुख्यं स्वाभीष्ट फल निष्पत्तौ परम्परयापि शरण्यान्तरान्वयासहिष्णुत्वम् । இப்படி இவ்விரண்டையும் वैकल्पिकங்களாகச் சொல்லக் கூடுமோ? उक्तरीत्या भरन्यास निष्पत्त्यर्थं प्रयोजनान्तर वैमुख्य पक्षेऽपि शरण्यान्तर वैमुख्यं வேண்டாவோ? என்னவருளிச் செய்கிறார். இது प्रयोजन इति । अत्रानन्यगतित्वशब्दस्य योजनाभेदमात्रे विकल्पं சொன்னதத்தனைப் போக்கி शरण्यान्तर प्रयोजनान्तर वैमुख्य रूपार्थங்களில் विकल्पं சொன்னதல்லாமையால் उवतशङ्काव-काशமில்லையென்று கருத்து. अन्य वैमुख्यादन्य वैमुख्य सिद्धिயெங்ஙனே? என்னவருளிச் செய்கிறார். இவ்अर्थ इत्यादि இவ்अर्थமென்றது अर्थ सिद्धமாகிற प्रकारமென்றபடி - परिमित फलविमुखனுக்கு तावन्मात्रफलप्रदன் कार्यकरனல்லாமையாலே तद्वैमुख्यात्...

---

(सा.प्र) प्राप्यत इति गतिशब्दो रक्षकत्ववाचीतिच स्यादिति शरण्यान्तरवैमुख्यं वा अनन्यगतिशब्दार्थ इत्याह - शरण्यान्तर वैमुख्यமாகவுமாம் इति । नन्वेवमुभयार्थबोधकत्वे उभयस्याप्यर्थस्य प्रपन्ने आवश्यकत्वात्सकृत्प्रयुक्तशब्दस्यार्थद्वयपरत्वे विरम्यव्यापार प्रसङ्गात् - अन्यतरस्वीकारे अपेक्षि-तस्यानुक्तिस्स्यादित्यत्र देवतान्तर भजनस्य क्षुद्रफलमात्रसाधकत्वात्फलान्तरवैमुख्यादेव तत्प्रदन शरण्यान्तरवैमुख्यमप्यर्थात्सिद्ध्यतीति प्रयोजनान्तरवैमुख्यरूपोऽर्थोऽत्र स्वीकार्य इत्यभिप्रेत्याह - இது प्रयोजनान्तरवैमुख्यத்தாலும் अर्थ सिद्धमिति । अर्थात्सिद्धं प्रमाणतो दर्शयति । இவ்अर्थमित्यादिना ''यस्य देहान्तरकृते शोकोदृप्तस्स उच्यते'' इत्यादि प्रकारेण दृप्त प्रपन्नस्य प्रारब्धदेहानुभाव्यसुखे सङ्गादनन्यप्रयोजनत्वासिद्धेरधिकारो न स्या...

---

(सा.वि) मप्यर्थो भवतीत्याह । शरण्यान्तरेति । सकृत्प्रयुक्त शब्दस्यार्थद्वयपरत्वे विरम्य व्यापार प्रसङ्गः । अन्यतरस्वीकारे अपेक्षिता काङ्क्षाया अनिवृत्तिस्स्यादित्यत्रापि शरण्यान्तरवैमुख्यसिद्धिमाह । இது इति । अनन्यप्रयोजनस्य न देवतान्तरा श्रयणमिति भावः । ननु ''यस्य देहान्तरकृते शोको दृप्त...

---

(सा.सं) न सिद्ध्येदित्यत्राह । शरण्यान्तरेति - गतिशब्दस्य व्युत्पत्तिभेदेन उपेयस्यैवोपायोपस्थापनेऽपि शक्ति तौल्यादिति भावः - वैमुख्यद्वयमप्यधिकारतया विशिष्येहावश्यकमप्येकेन शब्देन न युगपदु पस्थाप्यमित्यभिप्रेत्य शरण्यान्तरवैमुख्यास्यान्य लभ्यतामाह - இது इति - युगपदुपस्थापन एव विरोधाद्विवक्षाविशेषेण कदाचिच्छक्तित एव शरण्यान्तरवैमुख्योपस्थापनाय तत्तत्सिद्धिं समुच्चिनोति वैमुख्यத்தாலும்...

**मू - इत्यादि**களிலே கண்டு கொள்வது - **तीव्रतम**மான **मुमुक्षुत्व**மன்றிக்கே **देहानुवृत्त्यादि-प्रयोजनान्तर सक्त**னானவன் **मोक्षार्थ**மாக **प्रपत्ति**யைப் பற்றினால் அவ்வோ **प्रयोजनान्तर**ங்களில் அளவுக்கீடாக...

(सा.दी) ரென்கை. ஆனால், अनधिकारिकृतமாகையால் दृप्तप्रपत्तिनिष्फलமாகாதோ வென்ன வருளிச் செய்கிறார். तीव्रतममित्याति । प्रयोजनान्तरं द्विविधम् । ऐहिकामामुष्मिकமென்று. அதில் ऐहिक प्रयोजनान्तरस्पर्शத்தில் अनन्यगतित्वरूपाधिकारं போகாது — आमुष्मिक प्रयोजनान्तर स्पर्शத்தில் आधिकारहानि வரும் இவ்अर्थம் देहानुवृत्त्यादि प्रयोजनान्तरसक्तனானவன் मोक्षार्थமாக प्रपत्तिயைப் பற்றினாலென்றத்தால்...

(सा.स्वा) तद्वैमुख्यसिद्धिप्रकारं இந்த प्रमाणங்களிலே स्पष्टமன்றோவென்று கருத்து. இப்படி भरन्यासनिष्पत्त्यर्थमुपायसामर्थ्याभावமும் शरण्यान्तरवैमुख्यமும் வேண்டினாலும் मुमुक्षुவாயிருக்கிற இவ்अधिकारिக்கு प्रयोजनान्तरवैमुख्यं வேண்டுவானேன்? तीव्रतममुमुक्षुत्वपरीवाहமாகையாலேயென்னில் तीव्रतममुमुक्षुत्वं தான் வேணுமோ? उपासकனுக்குப்போலேயிவனுக்கும் मुमुक्षुत्वमात्रமமையாதோ? என்னவருளிச் செய்கிறார். तीव्रेत्यादि - अत्रादि शब्देनार्चावतार सेवानुवृत्त्यादि सङ्ग्रहः - प्रयोजनान्तरसक्तனென்றது प्रयोजनान्तरस्पर्शமுடையவனென்றபடி. स्पर्शश्च तत्र रुचिस्तत्सहिष्णुत्वं च இங்கு आसक्तனென்னாதே सक्तனென்றிவ்வளவே निर्देशित्தது. देहानुवृत्त्यादौ रूच्यभावेऽपि तत्सहिष्णुत्वमात्रமுடையவனையும் सङ्ग्रहिக்கைக்காகவிறே அளவுக்கு इत्यादि - प्रपत्तेरभ्युपगतप्रारब्धभञ्जकत्वा भावादिति भावः । तथा चोपासकனுக்குப் போலேயிவனுக்கும் मुमुक्षुत्व मात्रेण मोक्षसिद्धियுண்டாமாகிலுமிது विलम्बिயாமைக்காக प्रयोजनान्तरवैमुख्य पर्यन्ततीव्रतम...

(सा.प्र) दित्यत्राशक्तेर्विलम्बाक्षमत्वस्य च प्रत्येकमधिकारत्वाद्दृप्तस्याप्य शक्तत्वेनाधिकारोऽस्त्येव - एवं च तस्य किञ्चित्कालानुभाव्य प्रयोजनान्तर सहत्वे तदपि प्रदाय पश्चान्मोक्षमपि प्रयच्छतीत्यभि प्रेत्याह - तीव्रतमமான इति एवं ''अतोऽहमनुपायत्वात्कृपणोकिञ्चनो गतिः'' इति...

(सा.वि) स्स उच्ते'' दृप्तस्य प्रारब्धदेहानुभाव्यसुखे सङ्गादनन्य प्रयोजनत्वासिद्धेरधिकारो न स्यादित्यत आह । तीव्रமான इति । प्रयोजनान्तरं द्विविधम् । ऐहिक मामुष्मिकं चेति । तत्रैहिकं देहानुवृत्त्यर्थ प्रयोजनान्तरवशादनन्यगतित्वं न निवर्तत इति कल्पनीयम् - अतो दृप्तविभागस्य प्रमाणप्राप्तत्वात् । अन्यथा न कश्चिदपीहलोके प्रपन्नो लभ्येत । तथा सति "இங்கே திரிந்தோர்க்கு" इत्यादि प्रमाणविरोध इति भाव; । प्रयोजनान्तरங்களளவுக்கு, प्रयोजनान्तरमर्यादायाः...

(सा.सं) मित्यपि शब्दः । अथापि यदा प्रयोजनान्तरवैमुख्यमेव शक्त्या उपस्थितम् । तदा मोक्षेतर-प्रयोजनविमुखस्य मुमुक्षोस्तत्प्रदानासमर्थशरण्यान्तरवैमुख्यमर्थसामर्थ्यादेव भवतीत्यर्थसिद्धत्वोक्तिः आर्तादिष्वपि शरण्यान्तरवैमुख्यान्नतेनार्थसिद्धता प्रयोजनान्तर वैमुख्यस्येति - अनेनैव शरण्यान्तर-वैमुख्यस्यार्थसिद्धत्वोक्तिरिति बोध्यम् । वक्ष्यमाण विशेषाधिकारेषु कालक्षेपाक्षमत्वमभ्यर्हितोऽधिकार इत्याह - तीव्रेति - यद्वा, प्रयोजनान्तराणामपि प्रधानफलाविरोधे कथं तद्वैमुख्यस्य विशेषाधिकारत्व-मित्यत्राह । तीव्रेति, तथा च विलम्बाक्षमस्य...

**मू - मोक्षं विलम्बि**க்கும் இவ்**आकिञ्चन्य**த்துக்கும், **अनन्यगतित्व**த்துக்கும் **निबन्धनम् - उपायान्तर**ங் களில் இவ்**अधिकारि**யினுடைய **अज्ञानाशक्ति**களும், **फलविलम्बासहत्व**மும் —

(सा.दी) सूचितम् । இனி இவ்आकिञ्चन्यादिகளுக்கு मूलமருளிச் செய்கிறார். இவ்आकिञ्चन्- येत्यादिயால் यथासंख्यं निबन्धनமென்றபடி. उपायान्तराज्ञानादि आकिञ्चन्यमूलं - फलविलम्-बासहत्वमनन्य गतित्व...

(सा.स्वा) मुमुक्षुत्वं வேணுமென்று கருத்து. आकिञ्चन्यத்தையும், अनन्य गतित्वத்தையும், இவ னுக்கு विशेषाधिकारமாகச் சொன்னது கூடுமோ? केषुचिदङ्गेष्वज्ञानाशक्त्यादिகள் उपासकனுக் கும் संभावितங்களாகையால் उपायान्तर सामर्थ्याभावरूपाकिञ्चन्यं அங்கு अतिप्रसक्तமன்றோ? स्वरूपानुचितत्वज्ञानमूलமாக அவர்களிலும் சிலர் பக்கல் இது सम्भावितமன்றோ? இங்கு சொன்ன आकिञ्चन्यानन्यगतित्वங்கள் विलक्षणங்களாகையால் अतिप्रसङ्गமில்லையென்னிலப் படி विलक्षणங்களாக ஓர் आकिञ्चन्यादिகளுண்டாகைக்கு मूलமெது? என்னவருளிச் செய் கிறார். இவ்आकिञ्चन्यத்துக்கும் इत्यादि । இவ்आकिञ्चन्यத்துக்கென்று विशेषिக்கிற இத்தாலே उपासकनिष्ठाकिञ्चान्यादिकं व्यावर्तिக்கப்படுகிறது स्वतन्त्र प्रपत्तिக்கு विशेषाधिकारமாகச் சொன்ன आकिञ्चन्यविशेषத்துக்கும் अनन्यगतित्व विशेषத்துக்குமென்றதாயிற்று. இவ்अधिकारीति उपासक னுக்கு उपायान्तरங்களின் अङ्गमात्रे क्वचिदज्ञादिகளாகையாலும், அங்ஙனன்றிக்கே அவனுக்கு अङ्गिस्वरूपத்திலுமுள்பட अज्ञानादिகளுமிருக்கையாலுமிவனுடைய இந்த अज्ञानादि களே யிவன் பக்கல் विलक्षणமாக ஓர் आकिञ्चन्यமுண்டாகைக்கு मूलமென்று கருத்து. फलविलम्बेति- फलविलम्बासहत्वमुपासकருக்கில்லாமையாலும், இவ்अधिकारिக்கு அது உண்டாயிருக்கை யாலும் இதுவே இவன் திறத்திலிப்படியோர் अनन्यगतित्वविशेषமுண்டாகைக்கு मूलமென்று கருத்து. यद्वा, இங்கு यथासंख्यान्वयமன்றிக்கேயிந்த अज्ञानादिகளை आकिञ्चन्यमात्रத்துக்கு निबन्धनமாக வும், विलम्बासहत्वத்தை இரண்டுக்கும் निबन्धनமாகவும், योजिக்கவுமாம். फलवि लम्बासहत्व निबन्धनமாகவுமோர் आकिञ्चन्यமுண்டென்று चरमश्लोकाधि कारத்திலே उपपादिக்கப்...

(सा.प्र) लक्ष्मीतन्त्रोक्तप्रकारेण उपायान्तरानुष्ठानाभावरूपमाकिञ्चन्यमनन्य प्रयोजनत्वरूपमनन्यगतित्वं चोक्त्वा दृप्तस्य भरन्यासाधिकारं चोक्त्वा आकिञ्चन्यानन्यगतित्वयोर्निबन्धनंदर्शयन् अर्थसिद्धस्य शरण्यान्तरवैमुख्यस्यापि निबन्धनं ज्ञातव्यमिति तदप्याह - இவ்आकिञ्चन्यத்துக்கும் इत्यादिना...

(सा.वि) प्रयोजनान्तरानुभवार्थमित्यर्थः । விளம்பிக்கும், विलम्बेत । शीघ्रं न प्राप्यत इत्यर्थः । निबन्धनमिति यथासंख्यं द्रष्टव्यम् । आकिञ्चन्यस्य निबन्धनं उपायान्तराज्ञानादिकम् । अनन्यगतित्वस्य निबन्धनं फलविलम्बासहत्वम् - विलम्बसहस्य प्रयोजनान्तर वैमुख्याभावात् - तत एव मधुविद्यादिषु वस्वादित्यप्रयोजनान्तरानुभवार्थ दर्शनादुपासकव्यावृत्तः प्रपन्नाधिकारविशेषः प्रयोजनान्तर...

(सा.सं) अविलम्बितसिद्धि विरुद्धत्वादधिकार विशेष प्रयोजनान्तरवैमुख्य मावश्यकमिति भावः । आकिञ्चन्यानन्यगतित्वयोर्भक्तव्यावृत्तत्वं तदुभयनिबन्धनमुखेन दर्शयति । இவ் इति । प्रमित्यादि मत्वादेव भक्तो नाकिञ्चनः । विलम्बसहत्वान्न प्रयोजनान्तरविमुखोऽपीति भावः । शरण्यान्तरवै-मुख्यस्य ।...

**मू - இதில் शरण्यान्तरवैमुख्यதத்துக்கு निबन्धनम् । "यथा वायोस्तृणाग्राणि वशं यान्ति बलीयसः । धातुरेवं वशं यान्ति सर्वभूतानि भारत"** என்கிறபடியே தனக்கும் பிறருக்கும் ஒத்திருக்கிற **भगवदेक पारतन्त्र्याध्यवसायமும் प्रयोजनान्तरवैमुख्यமும்—**

(सा.दी) मूलम् । फलविलम्बसहனுக்கு प्रयोजनान्तरवैमुख्यरूपानन्यगतित्वமில்லையிறே. ஆகையாலிறே இது प्रपत्तिக்கு विशेषाधिकारமாயிற்று. यथेत्यादि, बलवान् ஆன वायुவுக்கு तृणाग्रங்களைப்படி पराधीनமாயிருக்குமப்படியே सर्वप्राणिகளும் सर्वस्रष्टाவான ईश्वरனுக்கு परतन्त्रமாயிருக்கு...

(सा.स्वा) புகுகிறாரிறே. இத்தாலேயிறே उपायान्तरத்தில் अज्ञाना शक्त्यादिகளில்லாதிருக்கிற नाथमुनिप्रभृतिகளுக்கு स्वतन्त्रप्रपत्यधिकारं सिद्धिப்பது. प्रयोजनान्तरवैमुख्यरूपानन्यगतित्वं இவனுக்கு विशेषाधिकारமானாலும் शरण्यान्तरवैमुख्यरूपानन्यगतित्वத்தை विशेषाधिकारமாகச் சொன்னது கூடுமோ? भगवदेकपारतन्त्र्यज्ञानमूलமாக शरण्यान्तरवैमुख्यं तत्त्ववित्தான उपासकன் பக்கலிலுமில்லையோ? இங்குச் சொன்ன शरण्यान्तरवैमुख्यத்தில் காட்டில் வேறுபட்டதாகையாலே अतिप्रसङ्गமில்லையென்னிலிப்படி இங்கு வேறுபட்டதாகவொன்று உண்டாகைக்கு मूलமெது? என்னவருளிச் செய்கிறார். இதில் इत्यादि । இதிலென்றது, இப்प्रपत्ति विशेषाधिकारத்துக்குள்ளேயென்றபடி. भगवदेकेत्यादि । उपासकன் பக்கல் போலன்றிக்கே இவன் பக்கலில் இவ்விரண்டுமிருக்கையாலே समुदितமான இவ்விரண்டுமே இதுக்கு मूलமென்று கருத்து. लोकेश्वरत्वेन प्रसिद्धரான ब्रह्मरुद्रादिகளுக்கும் நமக்கும் भगवत्पारतन्त्र्यத்தில் வாசியில்லையோயென்கிற शङ्कावारणार्थम् இங்கு प्रमाणोदाहरणं प्रपत्ति सर्वाधिकारமென்று सम्प्रदायமாயிருக்க இப்படி இதுக்கு नियतமாக ஓர் अधिकारविशेष...

(सा.वि) वैमुख्यमनन्यशरणत्वस्य निबन्धनमाह இதில் शरण्यान्तरेति । ஒத்திருக்கிற, साधारणतया स्थितेत्यर्थः । पारतन्त्र्याध्यवसायமும் इति समुच्चयेन पूर्वोक्तमन्य प्रयोजनवैमुख्यञ्च सङ्गृह्यते । उक्तं खलु पूर्वं प्रयोजनान्तरवैमुख्यத்தாலும் शरण्यान्तरवैमुख्यमर्थ सिद्धमिति प्रयोजनान्तरवैमुख्यं पारतन्त्र्याध्यवसायश्च शरण्यान्तर वैमुख्यस्य कारणमित्यर्थः - नन्वकिञ्चनस्य भगवानुपायान्तरस्थाने निविष्टो भवतीत्यतस्त्वकिञ्चनस्याधिकारः प्रयोजनान्तरवैमुख्यरूपमनन्यगतित्वमधिकार इति कथमित्यत्राह । प्रयोजनान्तरवैमुख्यमिति प्रपत्त्यधिकारविशेषः सकिञ्चनस्यापि विलम्बासहिष्णुत्वे प्रपत्तावधिकार इत्यर्थः । विलम्बसाध्योपायस्थाने भगवान्निविष्टो भवतीत्यर्थः । ननु शरण्यान्तर वैमुख्यस्य भक्त साधारणत्वात् विशेषित्त अंधिकार मित्युपक्रम्य उक्तस्थले अनन्यगतिरिति शरण्यान्तर वैमुख्यமாகவுமாம் इत्युक्तेस्तात्पर्यं किमिति चेन्न । आकिञ्चन्ये सत्यपि प्रयोजनान्तरवैमुख्ये सति शरण्यान्तरवैमुख्याभावे भगवति भरन्यासो न सिद्ध्यति ।...

(सा.सं) भक्तप्रपन्नसाधारण्यं तन्निबन्धनमुखेन दर्शयति । இதில் इति । अत्राकिञ्चन्यशरण्यान्तरवैमुख्ययोस्सर्वप्रपत्तिसाधारणविशेषाधिकारता । प्रयोजनान्तरवैमुख्यस्य तु मुमुक्षुकर्तृक सर्वभर-समर्पण एव विशेषाधिकारतेत्याह । प्रयोजनान्तरवैमुख्यं प्रपत्त्यधिकारविशेषमिति ।...

**मू - இப்प्रपत्त्यधिकार विशेषं "सपित्रा च परित्यक्तस्सुरैश्च समहर्षिभिः । त्रीन् लोकान्संपरिक्रम्य तमेव शरणं गतिः ।। अह मस्म्यपराधानां आलयो किञ्चनो गतिः । अकिञ्चनोऽनन्यगतिश्शरण्य । अनागतानन्तकालसमीक्षयाप्यदृष्ट सन्तारोपोयस्तत्प्राप्तये च तत्पादाम्बुजद्वय प्रपत्तेरन्यन्न मे कल्पकोटि सहस्रेणापि साधनमस्तीति मन्वानः ।** புகலொன்றில்லாவடியேன்" என்று இவை முதலான **प्रमाण सम्प्रदाय**ங்களாலே **सिद्धम् ।**

(सा.दी) மென்கை, प्रपत्त्यधिकार विशेषத்தில் प्रमाणं காட்டுகிறார். स पित्रा चेत्यादिயால் - स पित्रा च என்கையால் आकिञ्चन्यமும் तमेव என்கையால் अनन्यगतित्वமும் सूचितம். अगतिः, अनन्य गतिः என்கை - अदृष्टसन्तारोपायः । आकिञ्चन्यं சொல்லிற்று. तत्पादाम्बुजप्रपत्तेरन्यन्न मे என்று अनन्यशरणत्वமும் द्योतितम् । புகல், साधनமும் गतिயும் । प्रमाणங்களாம் सम्प्रदायத்தாலும் सिद्धமென்றபடி. இவ்उक्तविशेष...

(सा.स्वा) முண்டானதாகச் சொன்னது கூடுமோ? வென்ன प्रमाणங்களாலும் सम्प्रदायங்களாலும் सिद्धமாகையாலே கூடுமென்கிறார். இப்प्रपत्तीत्यादिயால். स पित्रेत्यादि । இதில் पूर्वार्धத்தாலே शरण्यान्तर वैमुख्यமும், तृतीय पादத்தாலேआकिञ्चन्यமும் சொல்லப்படுகிறது. இவ்வளவும் फलान्तरार्थ प्रपत्तिக்கும் பொதுவென்று ज्ञापिக்கைக்காக. இப்श्लोकத்தை யிங்கு उदाहरिத்தது. புகல், साधनम् । उपायान्तरமும் शरण्यान्तरமும் என்றபடி. இப்படியாகில், "सर्वस्यशरणं सुहृत्" इत्यादि प्रमाण सम्प्रदायங்களில் சொல்லுகிற सर्वाधिकारत्वं सिद्धिயாதொழியாதோ? उक्ताधिकारविशिष्टत्वे सर्वருக்கும் अधिकारமுண்டென்று. அவ்வளவிலே तत्परங்கள் அந்த प्रमाण सम्प्रदायங்களென்றத்தான் கூடுமோ? அப்போது तत्तद्विशेषाधिकार विशिष्ट...

(सा.प्र) आकिञ्चन्यानन्यगतित्वयोरधिकारत्वे प्रमाणान्याह - प्रपत्त्यधिकार विशेषमित्यादिना - स पित्राचेति शरण्यान्तर राहित्ये प्रमाणम् अनागतानन्तकालेत्यादि उपायान्तरराहित्ये प्रमाणम् । புகலொன்றில்லா इति शरण्यान्तरराहित्ये प्रमाणम् । புகல், रक्षकतयाधिगम्यः - ஒன்றில்லா एकोऽपि नास्ति । रक्षकः कश्चिदपि नास्तीत्यर्थः - "நின் கணும் பற்றனல்லேன் நின்றிலங்கு பாதமன்றி மற்றோர் பற்றிலேன்.ஒண்டொடியாள் திருமகளும் நீயுமே நிலாநிற்பக் கண்ட சதிர் கண்டொழிந்தேன்" इत्यादिः प्रभृतिपर्यायि முதல் शब्दार्थः । நின் கணும் பறறனல்லேன், त्वद्विषये भक्तोऽपि न भवामि । நின்றிலங்கு பாதமன்றி, तव देदीप्यमान दिव्य चरणारविन्द व्यतिरेकेन । மற்றோர் பற்றிலேன், अन्यत्किञ्चिदवलम्बनं नास्ति । प्रकाशमानत्वं च । "पादेन कम लाभेन ब्रह्मरुद्रार्चितेन च । पस्पर्श पुण्डरीकाक्ष आपादतल मस्तकम्" इत्यादि शास्त्रेष्विति भावः । आभ्यामुपायान्तरराहित्यमवगम्यते । ஒண்டொடியாள் திருமகளும் நீயுமே நிலா நிற்ப கண்ட சதிர் "नानयोर्विद्यते परम्" इत्युक्तप्रकारेण लक्ष्मीविशिष्टस्य तवाभिमानान्तर्भूततयैव सर्वस्य सत्तास्थिति प्रवृत्तयस्स्युरिति त्वत्सङ्कल्परूपसामर्थ्य मवगम्य प्रयोजनान्तरविमुखो...

(सा.वि) इतर साम्य बुद्ध्या कृतेऽपि भरन्यासे भगवतो भरस्वीकर्तृत्वासम्भवाच्च उपयान्तराशक्तिज्ञानेनैव रक्षकान्तरज्ञानाभावज्ञानेनापि कार्पण्यातिशयसिद्धेश्च विशिष्याप्युपयोगोस्तीति तात्पर्यानदनन्य शरणत्वादौ प्रमाणान्याह । स पित्रेत्यादिना - புகல், रक्षकतयाधिगम्यः - ஒன்று, त्वद्व्यति...

(सा.सं) प्रपत्तिविशेषाधिकार मित्यर्थः । स्वतन्त्रप्रपत्तेरुक्तत्रयमपि विशेषाधिकार इत्यत्र मानमाह, स पित्रा चेत्यादिना । तर्हि, विशेषाधिकार विधुरो न प्रपत्त्यधिकारीति कथं सर्वाधिकारतेत्य...

**मू - இவ்வளவு अधिकारं பெற்றால் प्रपत्तिக்கு जात्यादि नियमமில்லாமையாலே सर्वाधिकारत्वं सिद्धम्** அந்தணரந்தியரெல்லையில் நின்ற —

(सा.दी) अधिकारமில்லாதார்க்கு अधिकारமில்லாமையால் सर्वाधिकारत्वமெங்ஙனே யென்ன வருளிச் செய்கிறார். இவ்अधिकारं பெற்றால் इत्यदि. वर्णाश्रमादिகள் अधिकारமாகாமையால் सर्वजातीयाधिकारत्वं சொல்லிற்றென்கை.

उक्तार्थத்தைப் பாட்டாலும் सङ्ग्रहिத்துக் காட்டுகிறார். அந்தணர் इत्यादि । அன்பர், शिष्यस्नेहि களான आचार्यர். அந்தணர் ब्राह्मणர். அந்தியர், श्वपाकர். எல்லையில் இவ்उभयावधि मध्यத்தில் நின்று...

(सा.स्वा) सर्वाधिकारत्वं सर्वोपायसाधारणமாகையால் प्रपत्तिக்கு विशिष्य सर्वाधिकारत्वोक्ति निष्फलैயாகாதோ? श्रुत्यादिகளில் सर्वशब्दமும் सङ्कुचितமாகாதோ? என்னவருளிச் செய்கிறார். இவ்வளவு इत्यादि । இவ்வளவு इत्यनेन लघुतरत्वं ख्याप्यते । இதில் अधिकारसम्पादनं लघुतर மாகையாலும், वर्णाश्रमादिनियतत्वமில்லாமையாலும், उपायान्तरங்களில் போலன்றிக்கே யிதில் अधिकारि बाहुल्यं கிடைக்கையாலிதற்கு विशिष्यसर्वाधिकारत्वं சொல்லுகிறது सफल மென்று கருத்து. अधिकारं பெற்றால் इति । இவ்வளவும் பெறாதபோது अधिकारமே सिद्धिயா தென்றபடி. तथा च अधिकारं பெற மாட்டாத पश्वादिகளைச் சொல்ல மாட்டாதாப் போலே उपयुक्तज्ञानादिहीनரையும் சொல்ல மாட்டாமையாலே शङ्कोचस्यावर्जनीयत्वादगत्या सर्वशब्द மிங்கிவ்வளவு अधिकारं பெற்ற सर्वரையுமே சொல்லுகிறதென்று கொள்ள வேணுமென்று கருத்து.

जात्यादिनियमமில்லாமையாலே सर्वाधिकारत्वं सिद्धமென்றிப்படி सर्वजातीयருக்கும் अधिकारं तुल्यமாகச் சொன்னது கூடுமோ? सर्वाधिकारत्वமுண்டானாலும் ब्राह्मणादिகள் उत्कृष्टராகையாலும் शूद्रादिகள் अवकृष्टராகையாலும் अधिकारத்தில் गौणमुख्यतारतम्यமில் லையோ? இவ்अंशத்தில் सम्प्रदायந்தானுண்டோ? என்கிற शङ्कैகளைப் परिहरியா நின்று கொண்டு अधिका रार्थத்தைப் பாட்டாலும் सङ्ग्रहिக்கிறார். அந்தணர் इत्यादि । அந்தணர் — ब्राह्मणர். அந்தியர், अन्त्यர் - श्वपाकரென்றபடி - எல்லையில் நின்று...

(सा.प्र) भवम् । एतेनानन्य प्रयोजनत्वमुक्तम् । उक्ताधिकाररहितानां प्रपदनं नोपाय इति तस्य सर्वाधि कारत्वं न स्यादित्यत्राह, இவ்अधिकारं பெற்றால் इति ।।

एवं सर्वजातीयेषु तापत्रयातुरैर्मुमुक्षुभिरकिञ्चनैरनन्यगतिभिरेव भरन्यासोऽनुष्ठेयो नान्यैरिति निर्णय सामर्थ्यं स्वस्याचार्यकृपालब्धमिति दर्शयति । அந்தணர் इति । அன்பர் पदं प्रथममुक्त्वा அந்தணர் इत्यादेर्यथापाठ एवान्वयः । அந்தணர் அந்தியரெல்லையில் நின்றவனைத்துலகும்; ब्राह्मण्य...

(सा.वि) रिक्त एकः-இல்லா, नास्ति । प्रपत्तेस्सर्वाधिकारत्वं कथमित्यत आह । இவ்வளவு अधि कारं பெற்றால் इति, एतदधिकारः प्राप्तश्चेत् - अकिञ्चनानन्यगतित्वाद्यधिकारः प्राप्तश्- चेदित्यर्थः ।।

ब्राह्मणमारभ्य चण्डालपर्यन्तेषु जनेषु उपायान्तराशक्तैरनन्य प्रयोजनैर्मुमुक्षुभिरूपायत्वेनाश्रयणीयं निरवधिकनिर्विघातकरूणावरूणालयं भगवन्तं अस्मदाचार्या उपदिदिशुरिति गाथया प्रतिपादयति । அந்தணர் इति । அந்தணர், ब्राह्मणाः । அந்தியர், अन्त्यजाः । எல்லையில்...

(सा.सं) त्राह । இவ்வளவு इत्यादि ।।

अधिकारार्थं सङ्गृह्णति । அந்தணர் इति । ब्राह्मणमारभ्य चण्डालावधिकतया विद्यमान कृत्स्न...

**मू - வனைத்துலகும், நொந்தவரே முதலாக நுடங்கியனன்னியராய், வந்தடையும் வகை வன்தகவேந்தி வருந்திய**

(सा.दी) அனைத்துலகும், सर्वजातीयரும் நொந்தவரே முதலாக, संसारार्तரானவரே प्रधानராக, संसारार्तिயே प्रधानமாகவென்றபடி. நுடங்கி अकिञ्चनராய். நுடங்குகை, कृशராகை. அனன்னியராய், अनन्यगतिகளாய், வந்து - வன் தகவேந்தி इत्यादि । வன் தகவு, வலிய कृपै । வலிமை, अनतिक्रमणीयत्वम् । सहजकारूण्यமென்கை அத்தையேந்தி, धरित्து. வருந்திய, चेतनोज्जीवन रूप कृषिயிலே प्रयासப்படுகின்ற....

(सा.स्वा) இவ்உभयावधिमध्यத்தில் நின்ற - அனைத்துலகும், सर्वलोकங்களும் सर्वजनங்களும் என்றபடி - நொந்தவரே முதலாக, संसारार्तரே प्रधानராக - अवधारणத்தால் जात्यादिகளை व्यवच्छेदिक्கிறது - आर्तत्वदृप्तत्वங்களையிட்டு फलविलम्बाविलम्बங்கள் வருகையாலே तत्प्रयुक्त மான अधिकारத்தில் गौणमुख्यतारतम्यமத்தனைப் போக்கி जात्यादिप्रयुक्तமாகவதில்லையென்று கருத்து. நுடங்கி अकिञ्चनராய் - நுடங்குகை, कृशராகை - அனன்னியராய், अन्यरहितராய் - अत्रान्यशब्देन प्रयोजनान्तरं शरण्यान्तरं च विवक्षितम् - வந்து, उपायान्तर प्रयोजनान्तर शरण्यान्तरेभ्यः प्रत्यावृत्तராயென்றபடி - வன் தகவு, வலிய कृपैயை - வலிமை, बलिष्ठत्वम् - महद्भिरप्यपराधैरप्रकम्प्यत्वமென்றபடி - ஏந்தி, यादृच्छिक सुकृतादिव्याजத்தைக் கொண்டு धरित्தென்றபடி - வருந்திய, வருந்துகை - प्रयासப்படுகை - चेतनोज्जीवन...

(सा.प्र) जातिमारभ्य चण्डालत्वपर्यन्त तत्तज्जातिमत्सु सर्वेषु लोकेषु सर्वेषु जनेष्वित्यर्थः । நொந்தவரே முதலாக, शोकाविष्ट मारभ्य । "நுடங்கிடை நுடங்கையிலிலங்கை" इत्यादौ நுடங்கு शब्दस्यावनत्यर्थत्वात्प्रणताभूत्वेत्यर्थः । அனன்னியராய், अनन्या भूत्वा । एतेनानन्योपायत्वानन्यगति कत्वरूपाधिकार उक्तः । வந்தடையும் வகை, उक्ताधिकारिणो भगवन्तं प्राप्य यथा समाश्रयेयुस्तथा । வன் தகவேந்தி வருந்திய, प्रबलदयावत्वात्स्वयमेव प्रयतमानम् । "एवं संसृति चक्रस्थे भ्राम्यमाणेस्वकर्मभिः । जीवे दुःखाकुले विष्णोः कृपा काप्युपजायते ।।" इत्युक्ततादृशकृपयास्माकं स्वप्राप्तये स्वयमेव प्रयतमानं कृपायाः प्राबल्यं च "मित्रभावेन सम्प्राप्तं न त्यजेयं कथञ्चन । दोषो यद्यपि तस्य स्यात्"...

(सा.वि) अवधौ । ब्राह्मणमारभ्य चण्डालपर्यन्तेष्वित्यर्थः । நின்ற, विद्यमानाः । அனைத்து सर्वे । உலகு लोकाः । जना इत्यर्थः । நொந்தவரே, दुर्लभोपायान्तराभावाच्छोकाविष्टाः- முதலாக, प्रधाना यथा स्युस्तथा । संसारार्तिरिव प्रधानं यथा स्यात्तथेत्यर्थः । அனன்னியராய், अनन्यप्रयोजना भूत्वा । एतेनानन्योपायत्वानन्यगतित्वरूप प्रपत्त्यधिकारो दर्शितः । வந்து, आगत्य । நுடங்கி, प्रणता भूत्वा । அடையும் வகை, यथोपायत्वेनाश्रयेयुस्तथा । வன் दृढम् । தகவு कृपाम् । ஏந்தி, धृत्वा । வருந்திய, स्वाश्रयणाय स्ववयमेव यत्नं कुर्वन्तम् ।...

(सा.सं) जनमध्ये । நொந்தவரே முதலாக நுடங்கி, स्वानुगुणोपायान्तराभावात्प्रपत्त्यलाभाच्च शोकाविष्टा एव प्रथममवनताः कृपणाः सन्तः । அனன்னியராய், अनन्यप्रयोजनाः अनन्यशरणाश्च सन्तः வந்தடையும் வகை, आगत्याश्रयणप्रकारम् । आश्रयणीयं निर्दिशति । வன் தகவு इत्यादि । सुदृढकृपाविशिष्टस्सन् रक्षणाय स्वयमेव मद्विषय प्रयत्नवन्तम्...

**मू - நம் அந்தமிலாதியை யன்பரறிந்தறிவித்தனரே ॥ 17 ॥**

(सा.दी) நமந்தமிலாதியை, நம்முடைய स्वामीயாய் अनन्तனான जगत्कारणभूतனை. सर्वशेषि யான ईश्वरனை அடையும் வகை, शरणं புகும் प्रकारத்தை. அறிந்து தாங்களும் आचार्यसकाशात् தெளிந்து நமக்குமறிவித்தனரென்கை ॥ 17 ॥...

(सा.स्वा) रूपकृषिயில் प्रयासப்படுகின்ற - நமந்தமிலாதியை, நம்முடைய स्वामिயாய் अनन्तனான जगत्कारणभूतனானவனை - இவ்விशेषங்களெல்லாம் शरण्यतैக்கு उपयुक्तங்களாகச் சொன்னபடி - அடையும் வகை, शरणं புகும் प्रकारத்தை - शरणं புகலாம்படி अधिकारिகளுக் குள்ள प्रकारத்தையென்றபடி - परனை வரிக்கும் வகையென்று மேல் अधिकारப் பாட்டில் சொல்லுகிறாப் போலன்றிக்கே இப்பாட்டில் அனைத்துலகுமென்று अधिकारिகளை प्रधानமாக निर्देशिத்ததிறே - அன்பர், प्रीतिमान्கள், गुरुविषये भगवद्विषये च भक्तिमान्களான आचार्यர்களென்றபடி. அறிந்தறிவித்தனரே. தாங்களும் आचार्यसकाशात् தெளிந்து நமக்கும் उपदेशिத்தார்களென்கை ॥ 17 ॥

उपायान्तरத்தில் ज्ञानशक्त्यादि समुदायமே अधिकारமானாப் போலே प्रपत्तिயிலும் तत्तदभाव समुदायமே अधिकारமாகில் नाथमुनि प्रभृतिகளுக்கு प्रपत्त्यधिकारமில்லாதொழியாதோ? एकैकाभाव...

(सा.प्र) दित्यादिषूक्तमाश्रितानामुत्तराघ क्षान्ति हेतुत्वम् - நமந்தமிலாதியை, अस्माकं स्वरूपोपाय पुरुषार्थानां हेतुभूतं त्रिविध परिच्छेदरहितं भगवन्तम् । அன்பரறிந்தறிவித்தனரே । "शुद्ध भावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम्" इत्युक्त प्रकारेण भगवन्तं जानन्तोऽस्मदाचार्या अस्माभिरप्येवं भूतो भगवन्यथा संयक् ज्ञायेत तथा अबोधयन्नित्यर्थः ।। १७ ।।

उक्तस्य प्रपदनाधिकारस्य आकारान्तरेण पञ्चदशविधत्वं दर्शयंस्तेषां भक्त्यधिकाराभाव...

(सा.वि) அந்தமில், त्रिविधपरिच्छेदरहितम् । ஆதியை, कारणभूतं भगवन्तम् । நம், अस्माकम् । அன்பர், स्नेहवन्तो देशिकाः । அறிந்து, स्वयं निश्चित्य । அறிவித்தனரே, उपदिष्टवन्त एव । यद्वा, நுடங்கி, कृशाभूत्वा । அனன்னியராய், आदिயை வந்து அடையும் வகை, शरणत्वेनाश्रयण प्रकारम् । அறிந்தறிவித்தனரே इत्यन्वयः ।। १७ ।।

अथ भक्तियोगस्य साङ्गानुष्ठानशक्तिः साङ्गयोगस्वरूप निर्धारणं शास्त्रविहितजातिगुणादियोगो विलम्बसहत्वं चेति चत्वारो मिलित्वा भक्तियोगस्याधिकारः - तद्राहित्यं प्रपत्तेरधिकारः सच पञ्चदशधा संपद्यते - तत्र चतुर्णामेकैकाभावे चत्वारोऽधिकारः तयोर्द्वयोरभावे षडधिकाराः । त्रयाणांत्रयाणामभावे चत्वारोऽधिकाराः चतुर्णामभावो एकोऽधिकार इति । तथाहि । इतरत्रयसत्वे शक्त्यभाव एकोऽधिकारः इतरत्रयसत्वे प्रमितिरहितत्वमेकोऽधिकारः - इतरत्रय सत्वे शास्त्र पर्युदस्तत्वमेकोऽधिकारः - इतरत्रयसत्वे कालक्षेपाक्षमत्वं चेत्येकोऽधिकारः इति चत्वारः...

(सा.सं) मदीयमपरिच्छिन्न मादिकारणम् । அன்பர் इति - भक्तिमन्तो अस्मदाचार्या आश्रयणाधिकारिणं स्वयं गुरुमुखान्निश्चित्यास्मानपि बोधितवन्त इत्यर्थः । कृपाया दार्ढ्यं नामः उत्तराघिनमप्यनघयन् क्रोडीकरणैकान्तत्वम् ।। १७ ।।...

**मू - भक्त्यादौ शक्त्य भावः प्रमितिरहितताशास्त्रतः पर्युदासः कालक्षेपाक्षमत्वं त्विति नियतिव शादापतद्भिश्चतुर्भिः ।।**

(सा.दी) पञ्चदशधा भिन्नाधिकाரரான प्रपित्सुக்கள் श्रीशனை आश्रयिப்பார்களென்கிறார். भक्त्यादा विति - भक्त्यादिயான उपयान्तरங்களில். शक्त्यभावः, अशक्ति । प्रमिति रहितता, तद्विषयज्ञान राहित्यम् । शास्त्रतो निषेधः उपयान्तरविषयः । कालक्षेपाक्षमत्वम्, उपायान्तर शक्तत्वेऽपि फलविलम्बासहिष्णुत्वम् इत्येवं रूपங்களான நான்கு अधिकारங்களால் व्यर्निभिंदुर निजाधिक्रियाः, भिन्न स्वस्वाधिकाराः कथमेतैरधिकारस्य...

(सा.स्वा) मात्रवान्களுக்கு मोक्षोपायத்திலொன்றிலும் अधिकारமில்லாதொழியாதோ? उक्ता भावसमुदायवान्கள் लोकத்தில் अत्यन्तविरलராகையாலே श्रुतिயில் सर्वशब्दமும் सङ्कुचित மாகாதோ? என்கிற शङ्कैகளைப் परिहरिயா நின்று கொண்டு இவ்अधिकारத்தில் प्रधान प्रमेय மான प्रपत्त्यधिकार विशेषத்தை सङ्ग्रहिக்கிறார் - भक्त्यादावित्यादिயால் இவ்अंशम् இவ் अधिकाराद्यश्लोकத்தில் नियतावस्था என்று सामान्येन சொல்லித்தத்தனை போக்கி विशेषिத்த தில்லையே? भक्त्यादावित्येतच्छक्त्यभावादिषु त्रिष्वप्यन्वेति । अत्रादिब्देन कर्मज्ञान योगयोस्-सङ्ग्रहः । शास्त्रतः पर्युदासः, शास्त्राननुमतत्वम् । कालक्षेपाक्षमत्वम्, फलविलम्बा सहत्वम् । तु शब्दश्चार्थे । नियतिः, अदृष्टम् । नियति वशादापतद्भिरित्येतत्साभिप्रायविशेषणम् । एकद्वित्र्यादिना वक्ष्यमाणस्य वैचित्र्यस्य निर्वाहकतयोपात्तम् । चतुर्भि...

(सा.प्र) रूपत्वेन प्रत्येकं प्रपदनाधिकारत्वमित्याह । भक्त्यादावित्यादिना - कर्मयोगादिरादि शब्दार्थः तदभावस्याप्युपायान्तरा भावरूपस्याकिञ्चन्यत्वात् साङ्गभक्तियोगज्ञानं तदनुष्टान शक्तिश्शास्त्रापर्युदस्त्वं विलम्बक्षमत्वमित्येवं चतुष्टयं मिलितं भक्त्यधिकारः, एषामभावः...

(सा.वि) शक्त्यभावप्रमितिरहितत्वे एकोऽधिकारः - प्रमितिरहितता शास्त्र पर्युदस्तत्वं चैकोऽधिकारः - शास्त्रपर्युदस्तत्वं कालक्षेपाक्षमत्वं चेत्येकोऽधिकारः - कालक्षेपाक्षमत्वं शक्त्यभावश्चेत्येकोऽधिकारः शक्त्यभावश्शास्त्रपर्युदस्तत्वं चेत्येकोऽधिकारः प्रमितिरहितताकालक्षेपाक्षमत्वं चेत्येकोऽधिकार इति षट् - शक्त्यभावः प्रमितिरहितताशास्त्र पर्युदस्तत्वं चेत्येकोऽधिकारः - प्रमितिरहितता शास्त्रपर्युदस्तत्वं कालक्षेपाक्षमत्वं चेत्येकोऽधिकारः - शास्त्रपर्युदस्तत्वं कालक्षेपाक्षमत्वं शक्त्यभावश्चेत्येकोऽधिकारः - कालक्षेपाक्षमत्वं शक्त्यभावः प्रमिति रहिततेत्येकोऽधिकार इति चत्वारोऽधिकाराः - शक्त्यभावः प्रमिति रहितता शास्त्रपर्युदस्तत्वं कालक्षेपाक्षमत्वं चेत्येकोऽधिकार इति सङ्कलय्य पञ्चदश - एतादृ शाधिकारास्सन्तः श्रीशं साक्षात्फल साधनप्रपत्त्या संश्रयन्त इत्याह - भक्त्यादाविति - नियतिवशात्, भाग्यवशात् - आपतद्भिः, सञ्चरद्भिः भक्त्यादौ, भक्तियोगकर्मयोग ज्ञानयोगेषु...

(सा.सं) अथ प्रपत्तिविशेषाधिकारावान्तरभेदानियत्तया सङ्गृह्णाति, भक्त्या दाविति । शक्त्यभावः, अनुष्ठानाशक्तिः । प्रमितिरहितता, भक्ति तदङ्गादिविषयकसंयक्ज्ञानाभावः - भक्त्यादि परशास्त्रेण निषिद्धता शास्त्रतः पर्युदासः - कालक्षेपाक्षमत्वं, फलविलम्बासहत्वम् - इति, इत्थम् । नियतिवशात्, भगवत्कृपाविशेषात् । आपतद्भिश्चतुर्भिरधिकारैरूत्पन्नस्वस्वाधिक्रियाः पुरुषास्संश्रयन्ते । तानेवाधि-कारानाह...

**मू - एकद्वित्र्यादियोगव्यतिभिदुरनिजाधिक्रियास्संश्रयन्ते सन्तश्श्रीशं -**

(सा.दी) व्यतिभिदुरत्वमित्यत्राह ।एकद्वित्र्यादि । एषु चतुर्ष्वधिकारेषु भाग्यवशादापतत्सुमध्ये एकेनाधिकारेण योगः । द्वाभ्यामधिकाराभ्यां योगः । त्रिभिर्योगः । चतुर्भिर्योगश्च । एतैर्यो...

(सा.स्वा) रित्येतद्व्यतिभिदुरेत्यत्रान्वेति । एकद्वित्र्यादियोगस्तु तत्तद्वारतयोपात्तः । तथा च शक्त्य भावादिभिरश्चतुर्भिरेकद्वित्र्यादि योगमुखेन व्यतिभिदुरेति पर्यवसितोऽर्थः । तत्रादिशब्देन चतुर्णां समुदायो गृह्यते । निजाधिक्रिया, स्वासाधारणाधिकारः । मोक्षार्थस्वतन्त्र प्रपत्ति निष्ठानामसाधा रणतयोक्ताकिञ्चन्यघटितोऽधिकार इति यावत् । आकिञ्चन्यं चोपायान्तर सामर्थ्याभावरूपमिति पूर्वमुक्तम् । उपायान्तरसामर्थ्यमपि । ज्ञानं, शक्तिः, शास्त्रानुमतत्वम्, विलम्बाक्षमत्वमित्येतेषां समुदा यरूपम् । एतत्समुदाय प्रतियोगिकाभावरूपमाकिञ्चन्यं च तदेकैकदेशाभावयोगेऽपि सिद्ध्यति । एकदेशाभावे समुदायाभावस्यावश्यंभावित्वात्तदिदमाह - एकद्वित्र्यादियोगेति । एतेनाभावसमुदायो- नाधिकारः । किन्तु समुदायप्रतियोगिकाभाव एवाधिकार इति व्यञ्जितम् । समुदायस्यैवोपायान्तर सामर्थ्यरूपत्वेन तत्प्रतियोगिकाभावस्यैवाकिञ्चन्यरूपत्वादिति भावः । तथा च नाथमुनि प्रभृतीनां ज्ञानशक्त्यादिमत्वेऽपि विलम्बक्षमत्वरूपैक देशाभावात्समुदाय प्रतियोगिका भावात्मकाकिञ्चन्य सिद्धेः प्रपत्त्याधिकार उपपद्यत इति भावः । एवमेकैकाभाव मात्रवतामप्युक्तरीत्याकिञ्चन्यसिद्धेः प्रपत्तिरूप- मोक्षोपायाधिकारस्सिद्ध्यतीति भावः । व्यतिभिदुरेति । विविधमत्यन्तभिन्नेत्यर्थः । वैविध्यं चात्र पञ्चदशधा । तद्यथा । एषां चतुर्णां मध्ये एकैकयोगप्रयुक्तो भेदश्चतुर्धा । कृत्स्नयोगप्रयुक्त एक इति । एवमधिकार बाहुल्यलाभान्न सर्वशब्द सङ्कोचोपीति भावः । सन्तः, सम्यङ्न्यायनिरूपणे चतुरा महान्त इत्यर्थः । संश्रयन्त इतिवर्तमान...

(सा.प्र) प्रत्येकं भरन्यासाधिकारः । स चैकैकनिवृत्तिरूपश्चतुर्धा । द्विकद्विकनिवृत्तिरूपषषोढा । त्रिक- त्रिकनिवृत्तिरूपोऽपि चतुर्धा । कृत्स्नाभावरूप एकः । एवं परस्पर विशिष्टानामविशिष्टानां चाभावाः प्रतियोगिभेदभिन्नाः पञ्चदश संख्या संख्याताः प्रत्येकं भरन्यासाधिकाराः । एकाभावेऽपि...

(सा.वि) शक्त्यभावादिभिः एकद्वित्र्यादियोगव्यतिभिदुरनिजाधिक्रियाः, एकैक योगेन द्विद्वियोगेन त्रित्रियोगेन आदिशब्देन चतुर्भिर्योगेन चेत्यर्थः - व्यतिभिदुराः, परस्परभिन्नाः निजाधिक्रियाः, स्वीयाधिकारायेषां ते तथोक्ताः । सन्तः । ब्रह्मनिष्ठाः...

(सा.सं) एकेत्यादिना । त्रयत्रयविरहेण चतुर्ष्वप्येकैकयोगाधिकार चतुष्टयम् । द्विद्वियोगादधिकार षट्कम् । तत्र शक्त्यभावः प्रमितिरहितताचैकः प्रमितिरहितता पर्युदासश्चैकः - पर्युदासः कालक्षे- पाक्षमत्वं चैकः - कालक्षेपाक्षमत्वं शक्त्यभावश्चैकः । शक्त्यभावश्शास्त्रतः पर्युदासश्चैकः - प्रमिति- रहितता कालक्षेपाक्षमत्वं चैक इति विभागः - अथैकैकं परित्यज्य त्रिकत्रिकयोगादधिकारचतुष्टयम् । आदिशब्देन चतुर्णां योगरूपोऽधिकारो विवक्षितः इत्थं व्यतिभिदुराः, पृथक्पृथग्भिन्नाः ।...

**मू - स्वतन्त्रप्रपदनविधिना मुक्तये निर्विशङ्काः ।। २५ ।।**

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य

वेदान्ताचार्यस्य कृतिषु श्रीमद्रहस्यत्रयसारे प्रपत्तियोग्याधिकारो दशमः ।।

श्रीमते निगमान्त महादेशिकाय नमः ।।

---

(सा.दी) गैर्व्यतिभिन्नस्वस्वाधिकाराः प्रपित्सवः । मुक्तये निर्विशङ्काः, महाविश्वासयुक्ताः । स्वतन्त्रप्रपत्तिविधिबलाच्छ्रियःपतिயை स्वतन्त्रप्रपत्तिயால் आश्रयिப்பார்களென்கை ॥ 25 ॥

इति श्रीसारदीपिकायां प्रपत्तियोग्याधिकारो दशमः ।।

---

(सा.स्वा) निर्देशस्सदाचार प्रदर्शनार्थः । तथा च न केवलमुपपत्ति मात्रेणायमर्थः कल्प्यते । किन्तु सदाचारोऽप्यत्र प्रमाणमिति भावः । प्रपदनविधिः, प्रपदनानुष्ठानम् । निर्विशङ्काः, एकदेशाभावेऽपि समुदाय प्रतियोगिका भावरूप माकिञ्चन्यं सिद्धमिति निश्चयेनानधिकारित्व शङ्काकलङ्करहिता इत्यर्थः ।। २५ ।।

इति श्री सारास्वादिन्यां प्रपत्तियोग्याधिकारो दशमः ।।

---

(सा.प्र) मेलनासिद्धेरित्यर्थः । श्रीपतिरेव वैषम्यनैर्घृण्य परिहाराय अनादिकर्मानुगुण यादृच्छिक सुकृतावकाशस्स्वयमेव तादृशाधिकारमुत्पाद्य भरन्यासं कारयित्वा मोचयतीति भावः ।। २६ ।।

इति श्री सारप्रकाशिकायां प्रपत्ति योग्याधिकारो दशमः ।।

---

(सा.वि) मुक्तये निर्विशङ्काः ''कर्तव्यं सकृदेव हन्त'' इत्यत्रोक्त शङ्कारहितास्सन्तः - मुक्तये, स्वतन्त्रप्रपदनविधिना श्रीशं संश्रयन्ते ।। २५ ।।

इति श्रीसारविवरिण्यां प्रपत्ति योग्याधिकारो दशमः ।।

---

(सा.सं) स्वतन्त्रप्रपदनविधिना, स्वतन्त्र प्रपदनानुष्ठापक शास्त्रेण-नितरां विगतशङ्कानिर्विशङ्काः - शङ्कात्र ''कर्तव्यं सकृदेव'' इत्यादिनोक्तं शङ्का पञ्चकम् ।। २५ ।।

इति श्रीसारप्रकाशिकासङ्ग्रहे प्रपत्तियोग्याधिकारो दशमः ।।

श्रियै नमः

श्रीमते रामानुजाय नमः ।। श्रीमते निगमान्त महादेशिकाय नमः ।।

## ।। परिकरविभागाधिकारः ।।

मू - इयानित्थंभूतः

(सा.दी) पूर्वाधिकारத்தில் अधिकारविशेषं முதலானவையென்கிறத்தில் आदिशब्दार्थமான प्रपत्ति परिकरங்களை...

(सा.स्वा) இப்படி प्रपत्तिக்கு अधिकारविशेषமுண்டென்றது கூடினாலும் परिकरविशेषமுண்டானதாகக் கீழ்ச் சொன்னது கூடுமோ? प्रपत्तिविधिपरங்களான चरमश्लोकादिகளிலே अनुष्ठेयமாக இதற்கொரு परिकरं विधिக்கக் கண்டதில்லையே? उपासनं போலே இதுவும் विद्याविशेषமாகையாலே இதுக்கு परिकरम् अतिदेशத்தால் வருமென்றுத்தான் கூடுமோ? அப்போது कर्मयोगादिகள் अङ्गமாக प्रसङ्गिயாதோ? இதுக்கு निरपेक्षत्वं சொல்லுகிறதும் विरोधिயாதோ? अनुपकृतस्य करणत्वायोगादवश्यமிங்கொரு परिकरविशेषं கொள்ள வேண்டுகையால் निरपेक्षत्ववचनं कर्मयोगादिनैरपेक्ष्य परत्वेन नेयமென்னில் அந்த परिकरமெது? आनकूल्य सङ्कल्पादिகள் தானென்னில் அவை "स्नानं सप्तविधं स्मृतम्" என்னுமாப் போலே, "षड्विधा शरणागतिः" என்று प्रपत्तिभेदங்களாகச் சொல்லப்பட்டிருக்க அவற்றை இதற்கு अङ्गங்களென்னக் கூடுமோ? विनिगमकமில்லாதிருக்க "प्रपत्तिं प्रयुञ्जीत स्वाङ्गैः पञ्चभिरावृताम्" इत्यादिमात्रத்தைக் கொண்டிவற்றிலொன்று अङ्गी, इतरங்கள் अङ्गங்களென்று नियमिக்கத்தான் கூடுமோ? अङ्गங்களாகைக்கு இவை தான் कीदृशोपयोगविशिष्टங்களாயிருக்கும்? शेषभूतனுக்கு यावदात्मभाविயாக்க் கடவ. இவ்आनुकूल्याचरणादिகளை अङ्गங்களாகச் சொல்லில் क्षणकालसाध्यं प्रपदनமென்கிற सिद्धान्तமும் विरोधिயாதோ? शरणागतिसारமான श्रीरामायणादिகளிலுள்ள शरणागतिप्रकरणங்களிலும், शरणागति मन्त्रமான द्वयத்தில்...

(सा.प्र) एवमधिकारिस्वरूपं प्रदर्श्य तदनुष्ठेयमुपायस्वरूपं दर्शयिष्यन् "न हि तत्करणं लोके वेदेवा किञ्चिदीदृशम् (ईरितं) । इति कर्तव्यता साध्ये यस्य नानुग्रहेऽर्थिते" त्युक्तरीत्यानुपकृतस्य करणत्वानुपपत्तेर्भरन्यासस्य नैरपेक्ष्यविशिष्टत्वेनोङ्गनैरपेक्ष्य शङ्कानिरासार्थं प्रथमं परिकरा...

(सा.वि) एवं प्रपत्त्यधिकारि स्वरूपं निरूप्य तदनुष्ठेयमुपाय स्वरूपं दर्शयिष्यन् "नहि तत्करणं लोके वेदे वा किञ्चिदीरितम् । इति कर्तव्यतासाध्ये यस्य नानुग्रहेऽर्थिता" इति अनुपकृतस्यकरणत्वानुपपत्तेः भरन्यासस्य करणत्व सिद्ध्यर्थं नैरपेक्ष्यविशिष्टत्वेन अङ्गेष्वपि नैरपेक्ष्य...

(सा.सं) अथ परिकरविभागाधिकारमवसर सङ्गत्या आरभमाणस्तत्प्रतिपाद्यं सङ्गृह्णाति । इयानिति...

**मू - सकृदयमवश्यं भवनवान् दयादिव्याम्भोधौ -**

(सा.दी) निरूपिக்கிறார். इयानित्यादि - दयादिव्याम्भोधौ, करुणादिव्यसमुद्रे । हेतुगर्भमिदं पदम् ।...

(सा.स्वा) - தானும், இவ்ஆनुकूल्यादिகள் ஐந்தும் नियतங்களாகக் காணாமையாலே अवघातस्वेदादिகள் போலே सम्भावित स्वभावங்களாகையாலேயிவை अङ्गங்களாகத்தான் மாட்டுமோ? என்றிப்படி பிறக்கும் शङ्कैகளை இவ்अधिकारத்திலே परिहरिயா நின்று கொண்டு परिकरविशेषத்தை निरूपिக்கக் கடவராய் இவ்अधिकारार्थத்தை सङ्ग्रहिக்கிறார். इयानित्यादिயால். भगवति भरन्यासवपुषः प्रपत्तेः परिकरविशेषश्श्रुति मुखैरयमित्थंभूतः इयान् सकृदवश्यं भवनवानादिष्ट इत्यन्वयः । भरन्यासवपुषः, भरन्यास स्वरूपायाः, एतेन ''षड्विधा शरणागतिः'' इत्युक्तौ सत्यामपि निक्षेपापरषर्यायो भरन्यास एव प्रपत्तिः । आनुकून्यसङ्कल्पादिकन्तु तदङ्गमिति विभागे ''निक्षेपापरपर्यायो न्यासः पञ्चाङ्ग संयुतः'' इति वचनं विनिगमकमिति ज्ञाप्यते । परिकरविशेष इति । प्रपत्तेस्सामान्येनाङ्गनिरपेक्षत्ववचनं विहितविशेषव्यतिरिक्त विषयमिति ज्ञापनार्थ मत्र विशेषशब्दः । श्रुतिमुखैः श्वेताश्वतरादि श्रुतिभिर्भगवच्छास्त्रादिवचनैश्चेत्यर्थः । अयमित्यनेनैत रव्यावृत्तस्वरूपत्वं विवक्षितम् । वक्ष्यमाणरीत्या आनुकूल्य सङ्कल्पादि स्वरूप इति हृदयम् । इत्थं भूत इत्यनेनाङ्गत्वनिर्वाहकोपयोगविशेषविशिष्टत्वं विवक्षितम् । ''आनुकूल्येतराभ्यान्तु विनिवृत्तिरपायतः'' इत्यादि वक्ष्यमाणोपयोगविशेष विशिष्ट इति हृदयम् । पञ्चेति वा षडिति वा विशिष्यानिर्दिश्य इयानिति सामान्यतो निर्देशाद्वक्ष्यमाणरीत्या क्वचित् प्रयोगे पञ्चसंख्याकः क्वचिद् षड्संख्याकश्चेति हृदयम् - सकृदिति शेषत्वानुगुणस्यानुकूल्याचरणादेर्यावदात्मभावित्वेऽपि तत्सङ्कल्पस्यैवाङ्गत्वात् अङ्गिभूतायाः प्रपत्तेरुपासनवदावृत्तत्वाभावाच्च तत्परिकरस्यापि सकृत्त्वमेवेति भावः । अवश्यं भवनम्,अवश्यं भावः - अविनाभूतत्वमिति यावत् - शरणागतिप्रकरणेसर्वत्र तदविनाभावस्योपपादयिष्यमाणत्वादिति भावः । आदिष्टः, विहितः । श्वेताश्वतरश्रुत्यादेः परिकरविधानेऽपि तात्पर्यात् ''प्रपत्तिं तां प्रयुञ्जीत स्वाङ्गैः पञ्चभिरावृताम्'' इत्यादिषु स्फुट विधिदर्शनाच्च न विध्यदर्शनिन चोद्यावकाश इति भावः । ननु परिकरविधानमनुपपन्नम् । वधोद्युक्ते शासितरि राज्ञि चोरस्य स्वं प्रति दासकृत्यकरण प्रार्थनवदनाद्यपराध...

(सा.प्र) न्विभज्यदर्शयन्नधिकारार्थं सङ्गृह्याह - इयानित्यादिना श्रुतिमुखैः दयादिव्याम्बोधौ जगदखिल मन्तर्यमयति भगवति भवध्वंसोद्युक्ते सति भरन्यासवपुषः प्रपत्तेः परिकरविशेषोऽयं इयानित्थं भूत स्सकृदवश्यं भवनवानादिष्ठ इत्यन्वयः । इयान्, पञ्च संख्याक इत्यर्थः । इत्थंभूतः, वक्ष्यमाण प्रकारेणो-पकारक इत्यर्थः । अयम् आनुकूल्यसङ्कल्पादीत्यर्थः । नन्वानुकूल्य सङ्कल्पादीनां सम्भावितस्वभावत्व-मेव, रक्षकविषये प्रातिकूल्याचरणानुपपत्तेः । अतस्तेषां कथमङ्गत्वमित्यत्र अवश्यानुष्ठेयतया-विधानादङ्गत्वमेवेत्यभिप्रेत्याह । सकृदवश्यं भवनवानिति, दयादिव्याम्बोधौ इति ।...

(सा.वि) मितिशङ्कानिरासाय च परिकरयोगं दर्शयति - इयानिति - दयादिव्याम्बोधौ दया ।...

(सा.सं) दयादिव्याम्बोधौ, समुद्र इव दयाया आश्रये दिव्य शब्देन कदाचिदपि शोषणादि विरहोऽभिप्रेतः ।...

**मू - जगदखिलमन्तर्यमयति भवध्वंसोद्युक्ते भगवति भरन्यासवपुषः प्रपत्तेरादिष्टः**

(सा.दी) अत एव जगदखिलमन्तर्यमयति, चेतनेष्वन्तः प्रविश्य तत्तत्प्रवृत्तिं कारयति । एतावन्तं सदध्वानं नयतीति तात्पर्यम् । तत्रापि भवध्वंसे मोक्षे । उद्योगवति सर्वेषां मोक्षप्रदाने दत्तदृष्टौ श्रीमति भगवति क्रियमाणस्य स्वरक्षाभरार्पणरूपस्य प्रपदनस्य परिकरविशेषः । अयं आनुकूल्य...

(सा.वा) जनितकालुष्येण विमुखे दण्डधरे भरन्यासानुपपत्त्याङ्गिभूत भरन्यासस्यैवासिद्धेरिति शङ्कायां भगवति भरन्याससिद्ध्युपपादन मुखेन परिकरविधानोपपादनार्थं दयादिव्याम्बोधौ इत्यादि विशेषण त्रयमुपात्तम् । भवध्वंसोद्युक्त इति यादृच्छिकसुकृतादिमात्रव्याजावलम्बनेन कालुष्यं वैमुख्यं च विहाय जायमान कटाक्ष प्रभृति संयक् ज्ञानवैराग्यादिप्रदान पुरुषकारावलम्बन रूच्युत्पादन पर्यन्तानुकूल्या चरणेन स्वयमेव मोक्षप्रदान सन्नद्धत्वात्तस्मिन्भरन्यसनमुपपन्नतरमिति भावः - भवध्वंसोद्युक्तत्वे हेतुर्जगदखिलमिति । इतः पूर्वमलब्धा या इदानीं दृश्यमानायास्संयक् ज्ञानवैराग्याद्यनुकूलावस्थायाः कृत्स्नजगन्नियन्तुरूद्योगं विना...

(सा.प्र) मोक्षोपायानुष्ठापने प्रधानकारणमुक्तम् । जगदखिलमन्तर्यमयतीति दयाहेतुभूत शरीरित वशेषित्वादि सम्बन्धो जीवरक्षणे श्रीपतेः प्राप्तिश्चोच्यते । भगवतीति रक्षणोपयुक्त ज्ञानशक्त यादिकल्याणगुणगणयोगो हेयप्रत्यनीकत्वं चोच्यते । "ज्ञानशक्तिबलैश्वर्य वीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विनाहेयैर्गुणादिभिः" । इति निरुक्तेः । एतैर्विशेषणैर्भरन्यासमात्राद्बन्धनिवर्तकत्वं युज्यत इति द्योत्यते । नन्वेवं जीवस्य शरीरवदत्यन्त परतन्त्रत्वेशरीरत्वे च शरीरगतमलप्रक्षालने शरीरिणो जीवस्य प्रवृत्तिवत् भगवत एव चेतनविमोचनार्थप्रवृत्तेरावश्यकत्वाच्चेतनकर्तृक भरन्यासोऽपि नापेक्षितस्स्यादिति तत्परिकरचिन्तनं दूरनिरस्तमित्यत्र शरीरमलापहरणार्थं चेतनजनित शरीरव्यापारस्यापि दर्शनात् "अनन्यशरणस्तव, प्रयतपाणिश्शरणं प्रपद्ये । अप्रमत्तेन वेद्धव्यम् । "आनुकूल्यस्य सङ्कल्पः" इत्यादि श्रुतिपाञ्चरात्रवचनैर्विधानात्सर्वमुक्ति प्रसङ्गपरिहारार्थं च साङ्गभरन्यासः कार्य इत्याह । भवध्वंसोद्युक्त इति । एवं चेश्वराधीन भरन्यासे...

(सा.वि) समुद्रे । इयं रक्षणे प्रधानकारणम् - जगदखिलमन्तर्यमयति, सर्वान्तिर्यामिणीत्यर्थः । सप्तम्यन्तमिदम् । अनेन शरीरत्वशेषत्वादि सम्बन्धो दर्शितः - भवध्वंसोद्युक्ते, स्वयमेवोपायं कारयितुमुद्युञ्जाने भगवति, अनेन रक्षणोपयुक्तज्ञानशक्यादिगुणवत्वं दर्शितम् । भरन्यासवपुषः, भरसमर्पणरूपायाः- प्रपत्तेः, परिकरविशेषः - आदिष्टः, उपदिष्टः । कैः? श्रुतिमुखैः । श्रुतितुल्य पञ्चरात्रवचनैः । यद्वा, श्रुतिर्मुखं मूलं येषामुपबृह्माणानां तैः वेदमूलकतया...

(सा.सं) दयेत्यादि विशेषणत्रयेण शरण्यवत्वैकान्तगुणास्सङ्क्षिप्ताः । भगवतीत्यनेन देवताविशेषनिर्णयः कृतः । भरन्यासवपुषः, भरन्यासप्रदानकायाः प्रपत्तेः, प्रपत्त्यभिधानकायाविद्यायाः । परिकरविशेषः, सकृत्कर्तव्योपायविशेषानुगुणः जातावेक वचनम् । श्रुतिमुखैः, "मुमुक्षुर्वै" इति श्रुतिभगवच्छात्र संहिताविशेषैः । आदिष्टः । उपदिष्टः । किमित्यत्राह? इयानित्यादिना । न्यूनाधिक...

**मू - परिकरविशेषश्श्रुतिमुखैः ।। २६ ।। இவ்வித்யைக்கு परिकरமாவது, आनुकूल्यसङ्कल्पமும், प्राति कूल्यवर्जनமும், कार्पण्यமும், महाविश्वासமும், गोप्तृत्व वरणமும்.**

(सा.दी) सङ्कल्पादिरूपः । इत्थंभूतः, एवं प्रकारः । इदमित्थं त्वे उक्ते । इयान्, पञ्चषात्मकः । सकृत्, एकवारं भरसमर्पणदशायामवश्यापेक्षितश्चेति श्रुतिप्रमुखैश्शास्त्रैरुपदिष्टः என்கை ॥ 26 ॥

न्यासविद्यापरिकरங்களை उद्देशिக்கிறார். இவ்விதைக்கென்று தொடங்கி. परिकरம், अङ्गம். இஸ்संख्यैயில்...

(सा.स्वा) नुपपत्तेरिति भावः । तत्र निदानं दयादिव्याम्बोधाविति - दिव्य शब्देन कदाचिदप्युत्पत्तिनाशशोषणादिरहितत्वं विवक्षितम् । निरूपाधिकसहज दयार्द्रचित्ततया सर्वमुपपद्यत इति भावः ।। २६ ।। இனி கீழ்ச் சொன்ன शङ्कैகளை विस्तरेण परिहरिக்கக் கோலி அதில் முற்பட निरपेक्षत्ववचनविरोधचोद्यத்துக்கும் परिकर विशेषापरिज्ञान चोद्यத்துக்கும் परिहारं காட்டா நின்று கொண்டு परिकरங்களை विशेषिத்து निर्देशिக்கிறார். இவ்விதைக்கு इत्यादिயால். प्रपत्तिக்கென் னாதே विद्यैக்கென்றது विद्यात्वसामान्यादुपासनத்துக்குப் போலே இதற்கும் परिकरमावश्यकमिति ज्ञापनार्थम् - अथापि அந்த परिकरं कर्मयोगादिरूपமாகாதென்று ज्ञापनार्थं இவ்விதைக்கென்று विशेषिக்கிறது. இவ்விதைக்கு, उपासनाद्विलक्षणமான विद्यैக்கு. அதாவது "प्रपत्तेः क्वचिदप्येवं परापेक्षा न विद्यते" என்று निरपेक्षतया प्रसिद्धैயான विद्यैக்கென்கை. आनुकूल्यसङ्कल्पமும் इति । இவ்விதைக்கு இவை विशेषिத்து विधिக்கப்பட்டிருக்கையாலே सामान्यरूपமான निरपेक्षत्ववचन மிவற்றை बाधिக்க மாட்டாதென்று கருத்து. तथा च निरपेक्षत्व वचनं तद्व्यतिरिक्तनैरपेक्ष्यपर மென்று सूचितமாகிறது. இவ்आनुकूल्यादिகளை प्रपत्तिயாக...

(सा.प्र) आनुकूल्यसङ्कल्पादीनामुपकारकत्वसंभवात्करणत्वं युज्यत एवेति भावः ।। २७ ।।

श्लोके सङ्ग्रहेण दर्शितं परिकरवर्गं सनिबन्धनम् सोपकारं विस्तरेणाह. இவ்விதைக்கு इत्यादिना ।...

(सा.वि) प्रमाणत्वेन परिगृहीतैरित्यर्थः कथमुपदिष्टः? अयमुपदिष्टः, अयं परिकरविशेषः । इयान्, न्यासः पञ्चाङ्ग संयुत इत्युक्तत्वात् पञ्चसङ्ख्याकः । इत्थंभूतः, आनुकूल्यादि सङ्कल्पादिवक्ष्यमाण प्रकारः । सकृदवश्यं भवनवान्, अङ्ग्यनुष्ठानकाले सकृदेवावश्यं भावीति प्रपत्तेरङ्गानि सन्ति पञ्च आनुकूल्यसङ्कल्पादीनि सकृदनुष्ठेयानीति प्रमाणैः परिकरविशेषः उपदिष्ट इति भावः ।। २६ ।।

श्लोकं व्याचष्टे । இவ்விதைக்கு इत्यादिना - करणत्वादेव सामान्यतः परिकरः प्राप्तः । स कीदृश इति...

(सा.सं) संख्यां व्यवच्छिन्नेति । इयानिति - पञ्चसंख्यावच्छिन्न इत्यर्थः । स्वरूपनिर्धारणार्थमाह इत्थंभूत इति । "आनुकूल्यस्य सङ्कल्पः" इत्यादि प्रमाणसिद्धाकार इत्यर्थः, सकृदयमिति सकृत्कृतश्शास्त्रार्थ इत्यस्यात्रापवादाभावात् सकृदेवेत्यस्यासङ्कोचात्सकृत्कर्तव्य एवायमिति भावः - अवश्यंभवनवानित्यनेन संभावित स्वभावत्वशङ्का व्युदस्ता ।। २६ ।।

इत्थं सङ्क्षिप्तं परिकरवर्गं विवृणोति । இவ்விதைக்கு इत्यादिना । पञ्चैवाङ्गानि चेदेवं निर्धारणं युक्तं, न च तथाङ्गपरवाक्यस्थत्वेनात्म निक्षेपोऽप्यङ्गमिति कथं षड्विधेत्युक्तिरित्याशङ्क्य तथोक्ते...

**मू - இவ்விடத்தில், ''आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम् । रक्षिष्यतीति विश्वासो गोप्तृत्व वरणं तथा । आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः ।।'' इत्यादि**களில் சொல்லுகிற **षाड्विध्यं अष्टाङ्गयोग**மென்னுமாப் போலே **अङ्गाङ्गि समुच्चय**த்தாலேயாகக் கடவதென்னு மிடமும், இவற்றில் இன்னதொன்றுமே **अङ्गी, इतर**ங்கள் **अङ्ग**ங்க ளென்னுமிடமும், **''निक्षेपापर पर्यायो न्यासः पञ्चाङ्ग संयुतः ।**

---

(सा.दी) प्रमाणविरोधशङ्कैயை परिहरिக்கிறார். இவ்விடத்தில் इत्यादिயால். निक्षेपेति. निक्षेप इत्यपरः पर्यायो नामधेयं यस्य सःन्यासः । आत्मरक्षाभरसमर्पणमेवाङ्गि इतरैरानुकूल्य...

---

(सा.स्वा) प्रमाणं சொல்லா நிற்க, இவற்றை प्रपत्तिக்கு अङ्गங்களென்னக் கூடுமோ? இவற்றி லொன்று अङ्गीः इतरங்கள் अङ्गங்களென்கைக்கு अनन्यथासिद्धமான विनिगमकं தானுண்டோ? என்கிற शङ्कैகளுக்கு उत्तरமருளிச் செய்கிறார். இவ்விடத்தில் इत्यादिயால் இவ்விடத்தி லென்றது, இந்த विद्याविशेषத்திலென்றபடி. ''स्नानं सप्तविधम्'' इत्यादिष्वनेकविधत्वं स्वरूपावान्तरभेदप्रयुक्तமாக வேண்டியிருக்க अङ्गाङ्गि समुच्चयेप्रयुक्तமாக இது கண்டதுண்டோ வென்று शङ्किயாமைக்காக अष्टाङ्ग योगोदाहरणम् । निक्षेपेति । இவ்வசனமிவ்விடத்துக்கு अनन्यथासिद्धமான विनिगमकமென்று கருத்து. आनुकूल्यसङ्कल्पादिषु शरणागतिशब्दो न मुख्यवृत्तः । निक्षेपापरपर्यायिन्यासमात्रे मुख्यवृत्त इत्येवमेतच्छ्लोकोत्तरार्धतात्पर्यमिति ज्ञापनार्थमत्रतत्पठनम् - तेन तदप्यत्रविनिगमकमिति ज्ञाप्यते - अत एव हि श्लोकத்தாலே इत्युक्तिः...

---

(सा.प्र) ''ननु षड्विधा शरणागतिः'' इत्युक्तेरानुकूल्य सङ्कल्पादीना माग्नेयादीनामिव समुच्चित्यकार णत्वमेवयुक्तं नत्वङ्गाङ्गिभाव इत्युत्राष्टाङ्ग योगयुक्तानामित्यादिभिर्भक्तेरङ्गाङ्गि समुच्चयेनाष्टविधत्व वदौपचारिकत्वेनाप्युपपत्तेः ''प्रपत्तेः क्वचिदप्येवं परापेक्षा न विद्यते'' इत्यादि प्रमाणादानुकूल्य सङ्कल्पाद्यतिरिक्तानपेक्षत्वात्तेषामप्यङ्गत्वाभावे अनुपकृतमकरणं भवतीति न्यायात्करणत्वायोगात् तदर्थं फलवत्सन्निधावफलं तदङ्गमित्यङ्गत्वसिद्धेरेतन्यायानपेक्षमेव ''न्यासः पञ्चाङ्गसंयुत'' इति वचनादङ्गाङ्गि भावावगमाच्चाङ्गाङ्गी समुच्चयाभिप्रायैव षाड्विध्योक्तिरित्याह । இவ்விடத்தில் इत्यादिना । ननु ''न्यासः पञ्चाङ्ग संयुतं'' इत्युक्तम् । अहिर्बुध्न्यसंहितायां फलसमर्पण रूपाङ्गस्यापि विधानात्फलसङ्ग कर्तृत्वत्यागस्य चापेक्षित त्वादित्यत्र अहिर्बुध्न्य संहिताविहितस्यापि तस्य'' तेन संरक्ष्यमाणस्य फले स्वाम्यवियुक्तना ।...

---

(सा.वि) विशिष्य जिज्ञासते । परिकरமாவது इति । उत्तरमाह - आनुकूल्ये त्यादिना - ननु ''न्यासः पञ्चाङ्ग संयुत'' इति पञ्चाङ्गत्व प्रसिद्धेः कथं षड्विधत्वमित्यत आह - षाड्विध्यमिति - अङ्गाङ्गिसमुच्चयத்தாலேயாகக் கடவது, अङ्गाङ्गि समुच्चयेन भवति । என்னுமிடம், इत्येतत् என்கிற श्लोकத்தாலே न्यायनिरपेक्षமாக सिद्धमित्य न्वयः - अत्र किमङ्गि कान्यङ्गानीत्यत्र तदपि तेनैव श्लोकेन सिद्धमित्याह - இவற்றில் इति இவற்றில் एषु, இது - निक्षेपा परपर्यायो न्यास इत्युक्त न्यासः - ஒன்று, एकमेव - என்னுமிடமும்...

---

(सा.सं) स्तात्पर्योक्त्या शङ्कां परिहरति । இவ்விடத்தில் इति । दृष्टान्तेऽप्यङ्गि समुच्चयेनहि संख्यानिर्वाहः तथा दार्ष्टान्तिकेऽपीति भावः तर्हि षट्सु कस्याङ्गि तेत्यत्राह - இவற்றில் इति ।...

**मू - संन्यासस्त्याग इत्युक्तश्शरणागतिरित्यपि''** என்கிற **श्लोक**த்தாலே **न्यायनिरपेक्ष**மக **सिद्धம்**. இவ்விடத்தில், **''शाश्वती मम संसिद्धिरियं प्रह्वीभवामि यत् । पुरुषं परमुद्दिश्य न मे सिद्धिरितोऽन्यधा ।**

(सा.दी) सङ्कल्पाद्यङ्गैस्संयुक्तो भवति । सन्यासादयोऽपि तस्य पर्यायः என்று காட்டுகிறார். सन्यासस्त्याग इति । न्याय निरपेक्षं, युक्ति निरपेक्षम् । प्रमाणत एव स्फुटमवगम्यते என்கை. இத்தால் भरन्यासத்துக்கு लोकन्यायसापेक्षமான ''आनुकूल्यस्य सङ्कल्पः'' इत्यादिवचनதாலும் अङ्गित्वं सिद्धिக்குமென்றதாயிற்று. मोक्षार्थात्मनिक्षेपத்தில் अहिर्बुध्न्योक्तமான फलत्यागरूपाङ्गान्तरं नियतमென்கிறார். இவ்விடத்தில் इत्यादिயால்.परं पुरुषमुद्दिश्य प्रह्वी भवामीति यत् इयं मम शाश्वती ...

(सा.स्वा) न्यायेति - இங்கு अनन्यथासिद्ध विनिगमकங்களாகக் கடவ न्यायங்களும் अनेकங்களுண்டு. स्फुटतरமான वचनமுமிருக்கையாலவற்றை இங்கு अपेक्षिயாத मात्रं அத்தனை என்று கருத்து. இப்படி आनुकूल्यसङ्कल्पादिகளைந்துமே अङ्गங்களென்கை கூடுமோ? अहिर्बुध्न्य संहितैயிலே ''शाश्वती मम संसिद्धिः'' என்று தொடங்கி, ''इत्यङ्गमुदितं श्रेष्ठम्'' என்று ஓர் अङ्गान्तरமும் आत्मनिक्षेपத்துக்கு विशिष्योक्तமாயிருக்கவில்லையோ? என்னவருளிச் செய்கிறார். இவ்விடத்தில் शाश्वतीति இவ்விடத்திலென்றது. இவ்विद्याविषयத்திலென்றபடி. शाश्वतीति । परं पुरुषमुद्दिश्य प्रह्वोभंवामीति यत् इयं मम शाश्वती संसिद्धिः । ''शैत्यं हि यत्सा प्रकृतिर्जलस्य'' इतिवद्विधेयलिङ्गानुसारादियमिति स्त्रीलिङ्गनिर्देशः प्रह्वीभोऽत्र शरणागतिः एतच्छ्लोक प्रकरणे पूर्वत्र ''वाचा नम इति प्रोच्या'' इत्यादिना तस्या एव प्रकृतत्वात् - शाश्वती संसिद्धिः, शाश्वतः परमपुरुषार्थः - उत्तरोत्तरकालेष्वपि प्रतिसन्धीयमानமாய்க் கொண்டு भोग्यமாய் இருக்கையால் प्रह्वीभावस्य शाश्वतपुरुषार्थत्वोक्तिः - इतोऽन्यधा, अस्मादन्यधाभूतं स्वर्गादिकमपवर्गश्च । मे सिद्धिर्न, शेषतैकरसिकस्य मम पुरुषार्थो न भवति - स्वगदिस्स्वरूपानुचितत्वादपवर्गस्य शेषिप्रयोजनत्वेन तत्र मदर्थत्वाभिमानस्यानुचितत्वाच्च । अतस्तत्रोभयत्रापि नममापेक्षेति भावः - यत्किञ्चित्प्रयोजनमनुद्दिशतः कथमुपाये प्रवृत्तिरिति शङ्कानुत्थानाय प्रह्वोभावस्य पुरुषार्थत्वोक्तिः । प्रयोजनापेक्षाभावेऽपि सुहृदुपचारवत् शेषि किञ्चित्काररूपतया...

(सा.प्र) केशवार्पणपर्यन्ता'' इत्यादाविव मोक्षार्थभरन्यासमात्रनिष्ठत्वेन तत्प्रकरणावगतत्वात्फल सङ्गकर्तृत्वत्यागस्य भक्तिप्रपत्ति साधारणत्वाच्च मुमुक्ष्वमुमुक्षुप्रपदनाङ्गानां पञ्चसंख्याकत्वम विरुद्धमित्याह । இவ்விடத்தில் शाश्वतीत्यादिना । ननु ''स्वरूपफल निक्षेपस्त्वधिको मोक्षकाङ्क्षिणाम्'' इत्युक्तेः फलान्तरार्थे प्रपदने आत्मनिक्षेप एव नास्तीति कथं नियताङ्गत्व...

(सा.वि) इत्येतच्च - शाश्वती प्रह्वी भवामि - शरणागतोऽस्मीति यत् इयमेव मम सिद्धिः । इतोऽन्यत्फलमनपेक्षणीयमिति भावः इदं चाहिर्बुध्न्यसंहितोक्तमङ्गम् एतस्य फलसङ्गकर्तृत्व...

(सा.सं) न्यायनिरपेक्षமாக इति । निक्षेपस्यैवाङ्गितायामितरेषामङ्गतायां च सन्ति भूयांसि वचनानि तिष्ठत्वयं भूयसां न्यायः । अनन्यथासिद्धेनानेनैव वचनेनाङ्गाङ्गिभावविभागः कण्ठोक्त इत्यर्थः - नन्वहिर्बुध्न्यवचनेन प्रपत्तिमात्रे फलत्यागरूपाङ्गस्यापि स्वीकारे पञ्चाङ्गत्वविरोधः तदस्वीकारे तद्वचनविरोध इत्यत्राह இவ்விடத்தில் इति मोक्षार्थात्मनिक्षेपे वा किं पञ्चाङ्ग संयुत इति वचन...

**मू - दुस्साधे स्वत इतरतो वा**

(सा.दी) प्रपदन स्वरूपத்தை निष्कर्षித்துக் காட்டுகிறார். अभीष्ट इति। अभीष्टे कस्मिंश्चित्फले। दुस्साधे, उपायान्तरैस्साधयितुमशक्ये सति - क्वचन, समर्थे पुरुषे। स्वत इतरतो वा, स्वेन वा...

(सा.स्वा) निक्षेपமாவது? தான் रक्षिத்துக் கொள்ள மாட்டாத தன் वस्तुவைத் தன் प्रयोजनத்துக்காக ஒருவன் பக்கலிலடைக்கலமாக வைக்கையன்றோ? இவனுக்கு आत्मवस्तु தன்னதன்றே? अत एव तद्रक्षण फलமும் தன்னதன்றே. அவன் वस्तुவை அவன் பக்கலிலேயிவனடைக்கலம் வைக்கைக்கு प्राप्तिயுமில்லையே. ஆகையால், मुमुक्षुவுக்கிவ் उपायத்தின் अङ्गि स्वरूपमत्यन्त दुर्निरूपமன்றோ? என்றிப்படி பிறக்கும் शङ्कैகளைப் परिहरिயா நின்று கொண்டு இவ்अधिकारத்திலே भरन्यासமே सर्वाधिकारिகளுக்கும் साधारणமாக अङ्गिயாம்படியையும் இது प्रपत्ति शब्दवाच्यமாம் प्रकारத்தையும் காட்டா நின்று கொண்டு இந்த भरन्यासं मुमुक्षुவுக்கு अङ्गिயாம்போது இதனுடைய सन्निवेशமிருக்கும்படியையும் निरूपिக்கக் கோலி இதில் भरन्यासं सर्वाधिकारि साधारणமான अङ्गिயென்னுமிடத்தையும் இது प्रपत्तिशब्दार्थமாம் प्रकारத்தையும் श्लोकத்தாலே सङ्ग्रहिக்கிறார். अभीष्ट इत्यादि। अभीष्टे, अभिलषित फले। அதாவது, सुखं वा, दुःखनिवृत्तिर्वा, तत्साधनं वा। स्वत इतरतो वा दुस्साधे। वा शब्दश्चार्थे। स्वेन च प्रपत्तव्य व्यतिरिक्ते नान्येन च साधयितुमशक्य इत्यर्थः। एतन्मूलभूतम् ''अनन्य साध्ये स्वाभीष्ट'' इति वचनमेव हि स्तोत्रभाष्ये व्याख्यातम्। இப்படி आकिञ्चन्यनिबन्धनं भरन्यासமென்றவித்தால் இது मुमुक्ष्वमुमुक्षु...

(सा.प) अभीष्टे दुस्साध इत्यादिना। अभीष्टे स्वत इतरतो वा दुस्साधे सति क्वचन याच्नान्वितं तद्भरन्यासं प्रपदनमभि वदन्ति। इतः पश्चादस्मद्यतननिरपेक्षेण भवताऽसावर्थस्समर्थ्य इति मतिविशेषं तदविदुरित्य न्वयः। स्वत इतरतो वा तद्भरन्यास इति चान्वयः - स्वेन वा स्वस्याशक्तावन्येन वा भगवत्येतद्रक्षा भरन्यासः कार्य इत्यर्थः। अभीष्टे, स्वाभिलषिते। स्वतः, स्वेन। इतरतो वा, इतरैश्च अनन्यसिद्ध इत्यादि प्रमाणानु गुण्यात्। वाकारश्चार्थः- दुस्साधे, साधयितुमशक्ये - नन्वङ्गि स्वरूपनिष्कर्षो नोपपद्यते। असाधारण धर्मभूत लक्षणाधीनत्वात्तस्य लक्षणस्य च ''अनन्य साध्ये स्वाभीष्टे महाविश्वास पूर्वकम्। तदेकोपायता याच्ना प्रपत्तिश्शरणागतिः'' इत्युक्तस्य रक्षापेक्षारूपत्वस्य स्वयं साध्यसाधके सहकारि मात्र साकाङ्क्षेऽपि विद्यमानतया अतिव्याप्तेरकिञ्चन मात्र निष्ठभरन्यासलक्षणत्वानुपपत्तेः, ''आत्मात्मीय भरन्यासो ह्यात्मनिक्षेप उच्यते'' इत्युक्त भरन्यासरूपत्वस्यापि स्वकीयवस्तुरक्षण माज्ञापयत्सु तदर्थं भृतिप्रदेषु च विद्यमानत्वे नाति व्याप्ततया लक्षणत्वानुपपत्तेश्चेत्यत्राह।...

(सा.वि) अभीष्ट इति। प्रपत्त्यतिरिक्तभक्त्याद्युपायैः विहितोपाय भावेन वा। दुस्साधे, साधयितुमशक्ये। अभीष्टे, फलविषये। क्वचन, समर्थविषये। स्वतः, स्वेनवा। इतरतः, आचार्येण वा। याच्नान्वितं...

(सा.सं) प्रथमं सामान्यतः प्रपत्तिशब्दप्रयोगविषयं तत्सन्निवेशप्रकारांश्च सङ्गृह्णाति। अभीष्ट इति फले स्वतः स्वेन उपायान्तरेण दुस्साधे। अकिञ्चनत्वादिति भावः। इतरतः, अनन्यगतित्वात् प्रपत्तव्यादितर...

**मू - क्वचन तद्भरन्यासं याच्नान्वितमभिवदन्ति प्रपदनम् ।**

(सा.दी) आचार्येण वा याच्नान्वितं तद्भरन्यासं, त्वमुपायोगोप्ता भवेति प्रार्थनापूर्वकं तस्य फलस्य भरन्यासं फलोपायानुष्ठानभरस्त्वयि समर्पित इति भरसमर्पणं प्रपदनमभिवदन्ति तत्त्वज्ञाः...

(सा.स्वा) साधारणமாக सर्वाधिकारिகளுக்கும் अङ्गिயென்னுடம் காட்டித்தாகிறது. क्वचन, अभीष्ट निर्वहण समर्थे कस्मिंश्चित्पुरुषे । याच्नान्वितं तद्भरन्यासं, तद्भरस्य स्वाभिलषित फलनिष्पादन भरस्य न्यासं - प्रपदनम्, प्रपदनशब्दाभिधेयम् । अभिवदन्ति, तद्ज्ञाः इति शेषः । याच्नान्वितमित्यनेन आज्ञा दिमूल भरन्यासस्य प्रपत्तित्वप्रसङ्गचोद्यं परिहृतम् । இந்த याच्नै गापेतृत्व परமென்று स्तोत्र भाष्यத்திலே सिद्धम् । "अनन्यसाध्ये" என்கிற भरतमुनिप्रणीतलक्षण वाक्यத்திலே याच्नैயை प्रपत्तिயாகச் சொல்லியிருக்க याच्नान्वित भरन्यासத்தை प्रपत्तिயாக இங்கு சொல்லக் கூடுமோ? என்ன அங்கு "तदेकोपायता याच्ना" என்று एकशब्दமும் उपायशब्दமுமிருக்கையாலே அந்த याच्नै भर...

(सा.प्र) क्वचन याच्नान्वितं तद्भरन्यासं प्रपदनमभिवदन्तीति । अनन्य साध्य स्वाभीष्ट साधन समर्थे चेतने याच्नारूप रक्षापेक्षा विशिष्टं तस्य स्वाभीष्टस्य प्रापण भरन्यासः प्रपदनमिति वदन्तीत्यर्थः । रक्षापेक्षाविशिष्टानन्य साध्यस्वाभीष्ट साधन भरसमर्पणत्व मनन्य साध्य स्वाभीष्ट साधनत्वं समर्थवशीकरणमिति वा लक्षणमिति भावः । ननु स्वत इतरतश्च दुस्साध इति व्याहतमेवोच्यते । भग ...

(सा.वि) प्रार्थनासहितम् । तद्भरन्यासं तस्य फलस्य यो भरः साधनभावस्तस्य न्यासम् । अयं भरस्तवैवेति त्यागम् - प्रपदनमभिवदन्ति । तद्ज्ञा इति शेषः । अत्र भरसमर्पणं प्रपदनमित्युक्ते भृतिद्वारा भृत्ये भर समर्पणरूप प्रभुव्यापारेतिव्याप्तिः । अतो याच्नान्वितमिति । सकिञ्चनस्यापि क्वचिन्मित्रादिषु याच्ना पूर्वक भरन्यसनमस्तीति तत्राति व्याप्तिवारणाय दुस्साध इति । अभीष्टे दुस्साधे प्रार्थनाप्रपदनमित्युक्ते गोप्तृत्ववरणेऽतिव्याप्तिः - अतोभरन्यसनमिति - स्वकृर्तृकि आचार्य कर्तृकि च प्रत्येकमव्याप्तिवारणाय स्वत इतरतो वेति - स्वस्वाचार्यान्यतरेणेत्यर्थः - असमर्थ विषये कृतस्य कार्यकरत्वाभावेन प्रपदनत्वा भावात्त द्व्यावृत्त्यर्थम् क्वचनेति - ननु याच्नान्वित भरन्यासत्वं लक्षणं चेत् याच्नाया अङ्गि शरीरान्तर्गतत्वात्कथ मङ्गत्वमिति चेन्मैवम् । याच्नोप...

(सा.सं) तश्च दुः साधे सति । क्वचन, महाविश्वासयोग्ये । तद्भरन्यासं, स्वाभिमतनिष्पादन भरन्यासम् - याच्नान्वितम्, उपायत्वप्रार्थनान्वितम् । गोप्तृत्ववरणान्वितमिति केचित् । तत्पक्षे याच्नान्वितमिति शब्दा स्वारस्यमङ्गि स्वरूप निर्धारणाधिकाराननुगुण्यम् - "अनन्य साध्य"इति भरतमुनिप्रणीत लक्षण वाक्याननुगुण्यं च - तर्हि तव "रक्षापेक्षास्वसाह्यप्रणयवति" इति निष्कर्षविरोध इति चेन्मैवम् । उपायत्व प्रार्थनाया एव तत्र रक्षापेक्षाशब्दार्थत्वे बाधकाभावात्स्वसाह्य प्रणयवत्यपि "त्वमेवोपायभूतो मे भव" इति प्रार्थनं युज्यत एव। तत्र तन्मेलने लक्षणं स्यादित्युक्तमेव - इह याच्नान्वितमभिवदन्तीत्यनु गृहीतम् । तेन याच्नानन्तरं विश्वासमान्द्येन भरसमर्पणवैधुर्यं यत्र तत्र प्रपत्तित्वाभावः फलमिति । भरन्यास याच्नयोर्यत्र...

**मू - इतः पश्चादस्मद्यतननिरपेक्षेण भवतां**

(सा.दी) भरन्यास स्वरूपं निष्कृष्य दर्शयति - असावर्थः, मदभीष्टं फलम् इतः पश्चात् - इतः अस्मात्कालात्परम् - अस्मद्यतननिरपेक्षेण, अस्माकमुपायानुष्ठाननिरपेक्षेणैव भवता - समर्थ्यः...

(सा.स्वा) न्यासगर्भैயாகையால் विरोधமில்லையென்று காட்டுகைக்காக வந்த याच्नै भरन्यास गर्भैயாயிருக்கிற आकारத்தைக் காட்டுகிறார். इतः पश्चादित्यादिயால். इतः पश्चात्, अस्मात्कालात्परम्। उत्तरक्षण एवाहं निर्भरो भवेयमित्यभिसन्धिनायं निर्देशः। अस्मद्यतननिरपेक्षेण, अस्मद्व्यापृति निरपेक्षेण। इदं च विधेयविशेषणम्। अस्मद्व्यापृतिमनपेक्ष्येति यावत्। असावर्थः, अस्मद्दुस्साधोऽयमस्मदभीष्टरूपोऽर्थः। भवता, समर्थ कारूणिकेन त्वया। समर्थ्यः, स्वयं व्यावृत्त्य निर्वोढव्य इत्यर्थः। पुस्तकान्तरम्। कृथ लुटो बहुलमिति बहुलग्रहणात्समर्थ्य इत्यत्र यत्प्रत्ययः प्रार्थना परः। अत्र अस्मद्यतननिरपेक्षेण என்கிறவித்தாலும் समर्थ्य इत्यत्र प्रकृत्यंशத்தாலும் அந்த लक्षण वाक्यத்திலே तदेकोपायता याच्नाவென்கிறவிடத்தில் एकशब्दोपाय शब्दतात्पर्यार्थங்களைச் சொன்னபடி. இத்தாலந்த याच्नैயாலே भरन्यासं व्यञ्जितமாகிறதென்று கருத்து. तु शब्दो वैषम्यद्योत। नार्थः। तस्य च मतिविशेषमित्यनोनान्वयः। उक्तमतिविशेषमेव प्रपदनमविदुः। नतु केवल याच्नारूप मतिविशेषमिति भावः। लक्षणवाक्यस्थ याच्नानवाचिक व्यापाररूपेति ज्ञापयितुमत्र मतिशब्दः।...

(सा.प्र) वत्प्रेरितेन स्वेनैव तादृशप्रपदनेन स्वाभीष्टस्य साध्यमानत्वात्, किञ्च याच्नान्वित भरन्या सस्यमदभीष्ट साधने त्वमुपायो भव तत्साधन भरश्च तवैवेत्युक्तिरूपतया ज्ञानमात्रोपाय वादि श्रुति विरोध इत्यत्राह। इतः पश्चादित्यादि। तत्तु प्रपदनम्। इतः पश्चात्, वक्ष्यमाण मतिविशेषोत्प त्तेरनन्तरम्। अस्मदित्यादि। त्वयि समर्प्यमाणास्मदभीष्ट विशेष सिद्ध्यर्था स्मद्यत्नानपेक्षेणत्वया असावर्थस्समर्थ्य इत्येवं रूपमतिविशेषं विदुः। मतिविशेषतया जानन्तीत्यर्थः। असावर्थः, अर्थ्यत इत्यर्थः। अभीष्ट विशेषोऽयमित्यर्थः, समर्थ्यस्साधनीयः। एवं भरन्यासव्यतिरिक्तास्मद्यत्ना...

(सा.वि) लक्षित भरसमर्पणत्वस्य लक्षणत्वान्मोक्षार्थ प्रपत्तौ फलसमर्पणस्याङ्गि शरीरान्तर्गतस्याहिर्बुध्न्य संहितोक्तरीत्याङ्गत्व स्वीकाराच्च - उपायत्व प्रार्थनापृथगेवेति मते दोषशङ्कैव नास्ति। ननु भरन्यासस्य मद्रणभरस्तवैवेति वाक्योच्चारणरूपत्वाद् ज्ञानमात्रोपायत्वबोधक श्रुतिविरोध इत्यत्राह। इत इति। इतः पश्चात्, इतः पश्चात्। अस्मद्यतननिरपेक्षेण भवता, स्वीकृत भरेण त्वया - असावर्थः मदीप्सितार्थः। समर्थ्यः, संपाद्यः। इतिमति विशेषम्, एवं रूपज्ञानविशेषम्। ननु...

(सा.सं) मेलनं तत्र महाविश्वासोऽपि पुष्कलः नैर्भर्यं चाविकलमिति तत्रैव प्रपत्तिव्यवहारः प्रपत्तित्वं चेति धिक् - अभिवदन्तु नाम। तत्सन्निवेश; क इत्यत्राह। इतः पश्चादिति। "त्वेवोपाय भूतो मे भवेति" प्रार्थना पूर्वक भरन्यास प्रधानात्मनिक्षेपातिरिक्त मद्व्यापार निरपेक्षेण भवता समर्थकारूणिकेन - असावर्थः, अस्मदभिमतार्थः। समर्थ्यः, साधनीयः - इत्येवं विध भावनान्वितमुपायत्व प्रार्थनायुक्त नैर्भर्यशिरस्क फल निक्षेपान्वित भर निक्षेप प्रधानकात्मनिक्षेपरूपं मतिविशेषं तत्प्रपदन सन्निवेशं पुस्तकान्तरम्।...

**मू - समर्थ्योसावर्थस्त्विति मति विशेषं तद (तम) विदुः ।। २८ ।।**

(सा.दी) सम्पादनीय इति मति विशेषं - तत्, भरन्यासात्मकं प्रपदनमविदुः, ज्ञातवन्तः - तमविदुरिति युक्तः पाठः । तं भरन्यासम् ।। २८ ।।...

(सा.स्वा) तदितिप्रपदनमित्यर्थः । तमिति पाठे प्रपदनात्मकं भरन्यासमित्यर्थः । तदित्येवयुक्तः पाठः । अविदुः அறுதியிட்டார்கள். भरतमुनिप्रभृतयः पूर्विका इति शेषः । அவர்கள் भरन्यासं व्यञ्जितமாம் படியிருக்கிற याच्नारूपमति विशेषத்தை प्रपदनं என்று அறுதியிட்டார்களாகையால் அவர் களுக்கும் याच्नान्वित भरन्यासं प्रपदनமென்றே तात्पर्यமாகிறதென்று கருத்து. तथा च समर्थ्य इत्यत्र प्रकृत्यंशेन भरन्यासः प्रत्ययांशेन फल याच्ना चोच्यत इति याच्नाया भरन्यासगर्भत्वमुक्तं भवति । अत्र याच्नान्वितमिति पदेन सामान्यतः प्रतिपन्नायाच्ना गोपृत्ववरणरूपेति च समर्थ्योऽसावर्थ इत्यत्र विवृतं भवति । तुशब्दश्चो दितशङ्कानिवृत्यर्थः । स च तमिति पदेनान्वेतव्यः । तं याच्नान्वितं भरन्यासं । तदिति पाठे याच्नान्वित भरन्यासरूपं प्रपदनमित्यर्थः । तमित्येव युक्तः पाठः ।।

இனி मुमुक्षुவுக்கு இவ்உपायத்தில் अङ्गिस्वरूपमत्यन्त दुर्निरूपமென்கிற चोद्यத்துக்கும் स्वरूप समर्पणादित्रिकத்தில் प्रत्येकाङ्गित्व पक्षங்களில் சொன்ன चोद्यங்களுக்கும் उत्तरமருளி...

(सा.प्र) नपेक्षेणत्वयायमभीष्ट विशेषस्साधनीय इति तत्साधनीय भरं त्वयि समर्पयामीत्येवं रूपबुद्धिविशेषो भरन्यासः । एवं न काप्यनुपपत्तिरिति भावः ।।

नन्वात्पनिक्षेपोऽङ्गीति न युक्तं यागीयद्रव्य इवात्मनि वास्तविक स्वकीयत्वा सिद्धेः । तदीय एव स्वकीयत्वबुद्धिं कृत्वा समर्पणे तत्त्वज्ञानत्वाभावात् मोक्षसाधनत्वानुपपत्तिः । तदीयस्य तस्मिन् समर्पण रूपत्वेत्वनुपकारकत्वमेव । लोके परकीयस्यास्माभिः परस्मिन्न समर्पितस्यापि परेण रक्षणदर्शनात्सर्वज्ञेन भगवता च सर्वस्य स्वकीयत्वज्ञानाद्रक्षणसिद्धेः ' किञ्चायं मोक्षसाधनरूपो भरन्यासस्सिद्धरूपस्साध्यरूपो वा? न तावत्सिद्धरूपः । तस्य कर्तव्यतया बोधनासम्भवात् । विधेयत्वासिद्धेरशास्त्रीयत्वापातात् । अत एव द्वितीयेऽपि सफलत्वेन साध्यत्वम् । ऐश्वर्यकैवल्या पवर्गान्यितमत्वासिद्धेश्च । साधनतया साध्यत्वे ऽपि दृष्टिवन्मनोव्यापाररूपस्य भ्रमत्वेत्वपवर्गा साधनत्वम् - प्रमात्वेऽपि...

(सा.वि) विदुः भरन्यासत्वेन वदन्तीत्यर्थः । विद ज्ञान इत्यस्माद्धतोर्लट् । विदो लटो वेति झोरूसादेशे विदुरिति रूपम् - तमविदुरिति पाठस्सुगमः । तं भरन्यासं मतिविशेषमविदुः, ज्ञातवन्तः अस्मिन्पक्षे लडिसिजभ्यश्चेति झोर्जसडागमश्च अभीष्टे दुस्साधे तदुपाय भरस्तवैवेति ज्ञानं मुमुक्ष्वमुमुक्ष्वङ्ग प्रधान साधारण सकल प्रपत्त्यनुगतं लक्षणं बोध्यम् ।। २८ ।।...

(सा.सं) मुमुक्ष्वसाधारणं विदुः । साधारणन्तु स्वरूपफल निक्षेपविधुरतदितरमति विशेष रूपमेवेति सङ्ग्रहश्लोकार्थः - मतिविशेषोऽपि त्वयैव हि साधित इति तुशब्दाभिप्रायः ।। २८ ।।

इत्थं साधारणा साधारण प्रपदनशब्द व्यवहार विषय तत्सन्निवेशौ दर्शितौ । अथ मुमुक्ष्व...

**मू - मुमुक्षुவான அधिकारिக்கு இவ்उपायத்தில் अङ्गिस्वरूपமாவது! आभरणத்தையுடையவனுக்கு**

(सा.दी) मुमुक्ष्वधिकारिக்கு कर्तव्यமான अङ्गिस्वरूपத்தைக் காட்டுகிறார். मुमुक्षुவான इत्यादि யால். இவ்उपायத்தில், सपरिकरமான இவ்उपायத்தில். கொடுக்குமாப் போலேயிருக்கிறது. यथावस्थितமான...

(सा.स्वा) செய்கிறார். मुमुक्षु इत्यादिயால். இவ்उपायத்திலென்றது, अङ्गाङ्गिसमुदायात्मकமான प्रपत्ति शास्त्रार्थத்திலென்றபடி. आभरणத்தை इत्यादि. தன் स्वामिயுடைமையொரு हेतुவாலே தன்...

(सा.प्र) शास्त्रमात्रजन्योऽन्यजन्यो वा - आद्ये मायि मतोत्थानम्। द्वितीयेऽपि योगजन्यत्वे भक्ति तुल्यत्वा पत्तिः। - न च तद्व्यतिरिक्तं तज्जनकं संभवति - बाह्येन्द्रियाणां तज्जनकत्वादर्शनात् - मनसोऽपि योगासहकृतस्य करणान्तरजन्य ज्ञानाधिक विषयक ज्ञानजनकत्वा सिद्धेः - अनधिकविषयत्वे स्मृतिरूपत्वेन संस्कारोद्बोध व्यतिरिक्तानपेक्षणादविधेयत्व प्रसङ्गात् - अतः करणासिद्धेश्चा ङ्ग्यसिद्धिरित्यत्र "यस्समिधाय आहुतीर्यो वेदेन दाशमर्त्यो अग्नये यो नमसास्वध्वरः - समित्पा धनकादीनां यज्ञानां न्यासमात्मनः नमसा योऽकरोद्देवे सस्वध्वर इतीरितः। सर्वज्ञोऽपि हि विश्वेशः सदा कारूणिकोऽपि सन्। संसार तन्त्रवाहित्वा द्रक्ष्यापेक्षां प्रतीक्षते। अप्रार्थितो न गोपायेत्" इत्यादि प्रमाणैस्तदीयस्यैव तस्मिन्समर्पण एव भगवान् रक्षेदित्यवगमात्स्वाधीनकर्तृत्व स्वार्थ कर्तृत्वाभावाद्यनु सन्धानपूर्वकं स्वरक्षा भर तत्फलयो स्तदीयत्वानुसन्धान विशिष्टस्य स्वनिर्भरत्व पर्यन्तस्य स्वस्मिन् तदीयत्वानुसन्धानरूपस्य तस्य मनः करणकत्वोपपत्तेस्साध्यरूपत्वमेवेत्यभिप्रायेणाह - मुमुक्षुவான अधिकारिக்கு इत्यादि वाक्यद्वयम्। एवं च शास्त्र...

(सा.वि) एवं साधारणमङ्गिस्वरूपं प्रदर्श्य मुमुक्ष्वसाधारणमङ्गिस्वरूपमाह - मुमुक्षुவான इति। आत्मनिक्षेपं, भरन्यास प्रधानात्म समर्पणमित्यर्थः। उपायानुष्ठानस्य बन्धनिवृत्तिद्वारा भगवत्कैङ्कर्य प्राप्त्यर्थत्वाद्बन्धस्यानाद्यज्ञानमूल स्वतन्त्रात्मभ्रमलक्षणात्मापहार मूलकत्वादात्म समर्पणस्यैव तन्निवृत्ति हेतुत्वमित्यात्मसमर्पणमेव मुमुक्ष्वसाधारण प्रपदनस्वरूपमिति भावः - नन्विदमनुपपन्नम्। भगवदीयस्य स्वात्मवस्तुनः भगवति समर्पणायोगात्। न च यागे भगवदीयस्य भगवति समर्पणवद्युज्यत इति वाच्यम्। तत्र कर्मोपाधिक स्वत्वस्य सत्वात्समर्पण संभवात्। इह स्वात्मनः स्वत्वस्य कर्मोपाधिक स्याप्यभावात् - किन्तु भ्रान्तिमात्रकृतत्वात्। न च तदीय एव स्वात्मनि स्वकीयत्व भ्रान्त्या समर्पणमिति वाच्यम्। किमिदं शास्त्रजन्य ज्ञानानन्तरं वा ततः पूर्वं वा? नाद्यः, भ्रमासम्भवात् - न द्वितीयः, अनुष्ठानासिद्धेः न चैतावत्पर्यन्तं स्वस्मिन् स्वीयत्व भ्रान्त्या समर्पणा सम्भवेऽपि इदानीं शास्त्रजन्यसम्बन्ध ज्ञानानन्तरं स्वापहाररूपापराध परिहाराय तत्समर्पणं युज्यत इति वाच्यम् - इदानीं समर्पणेऽपि इतः पूर्वमपहारनिमित्तक दण्डनस्य कर्तव्यत्वाद्बन्धनिवृत्यसिद्धेः - समर्पणेन विना सर्वज्ञेन भगवता स्वकीयवस्तुरक्षणा सिद्धेश्चेत्याशङ्कायामुक्तम्। आभरणத்தையுடையவனுக்கு इति। அவன்தானே?...

(सा.सं) साधारणावेवतौ विवेक्तुमारभते। मुमुक्षुவான इत्यादिना। आत्मसमर्पणस्याङ्गित्वं कुतः? प्रागेव तदीयस्य अतद्वतानेन तत्समर्पणस्यैवा सम्भवादित्यत्राह। आभरणத்தை इति। दृष्टान्त...

**मू** - அவன் தானே **रक्षि**த்துக் கொண்டு பூணக் கொடுக்குமாப் போலே **यथावस्थित**மான **आत्म निक्षेपम्।** அதாவது, **प्रणव**த்தில் **प्रथमाक्षर**த்தில் **प्रकृति प्रत्यय**ங்களாலே...

(सा.दी) आत्मनिक्षेपமென்கை. आत्मनिक्षेपத்தினுடைய यथावस्थित स्वरूपத்தை வெளியிடுகிறார். அதாவது इत्यादिயால். यथावस्थितात्मनिक्षेपமாவது என்கை. प्रकृतिप्रत्ययங்களாவன? प्रकृति, अकारம்...

(सा.स्वा) கையிலேயிருந்தால் स्वयं அத்தை रक्षिக்க மாட்டாதபோது நீயே அதை रक्षिத்துக் கொண்டு பூண வேணுமென்று உடையவனுக்குக் கொடுப்பது लोकத்தில் காண்கையாலே யிங்கு तत्त्ववित्துக்குமப்படி आत्मनिक्षेपं பண்ணக் கூடுமென்று கருத்து. यथावस्थितமான வென்றது, அவன் தானே रक्षिத்துக் கொண்டு उपयोगिத்துக் கொள்ளும்படி रक्षणத்திலும் तत्फलத்திலும் தனக்கு प्राप्तिயில்லையென்கிற தெளிவோடே கூடினவென்றபடி. இத்தால் இவ்आत्मनिक्षेपं भरफल निक्षेपगर्भமென்று சொல்லிற்றாயிற்று. दृष्टान्तத்திலே भरफलनिक्षेपங் களும் कण्ठोक्तங்களாயிருக்கையாலிங்குமப்படி अर्थம் अवश्यं கொள்ள ·வேணுமிறே. तथा च இவை மூன்றும் समुदितமாய்க் கொண்டு अङ्गिயென்று हृदयம். இத்தால் प्रत्येकमङ्गित्वமில்லை யென்றதாகையால் तत्पक्षोक्तचोद्यங்களுக்குமிங்கு अवकाशமில்லையென்றதாயிற்று. चेतन னுக்கு स्वरक्षणத்திலும் तत्फलத்திலும் प्राप्तिயானது लोकத்தில் கண்டிருக்கயிங்கதுயில்லை யென்கிறதெங்ஙனே? ஒரு चेतनனுடைய रक्षणादिகளில் மற்றொருவனுக்கு प्राप्तिதானெங் ஙனே? ग्रहण प्रक्षेपणादि कायिक व्यापार विषयமல்லாத आत्माவை आभरणத்தை निक्षेपिக்கிறாப் போலே निक्षेपिக்கத்தான் கூடுமோ? இங்கு निक्षेपமாவது; शेषत्वानुसन्धानरूपமான व्यापार மென்றாலும் அது भरफल निक्षेपगर्भமாம்படி தானெங்ஙனேயென்கிற शङ्कैகளைப் परिहरिக் கைக்காக विवरिக்கிறார். அதாவது इत्यादिயால். அதாவதென்றது; यथावस्थित...

(सा.प्र) जन्यज्ञानानधिक विषयत्वाच्छास्त्र श्रवणवेलायामेव तादृशज्ञान सिद्धेः ! प्रमाण तन्त्रस्य तस्य कृति साध्यत्वाभावान्न विधेयत्व मित्यत्र यथा यागादि विधि शास्त्रार्थज्ञानमात्रा...

(सा.वि) गृहीता स्वयमेव । रक्षिத்துக் கொண்டு, रक्षित्वा । पुन: आभरणத்தையுடையவனுக்கு आभरणस्वामिन: । கொடுக்குமாப் போலே, यथा समर्पयति तथा । यथा महाप्रभो राभरणहर्ता स्वानुबन्धी चेत्पुनराभरणप्रदान मात्रेण क्षन्तव्य: तद्वत्सर्वज्ञस्य सहजकारुण्यस्य सर्वशेषिणो व्याज मात्रमपेक्षमाणस्य महोदारस्य स्वीयवस्तुनि मदीयमिदं न भवति - किन्तु त्वदीयमेवेति बुद्धिमात्रेणापि निग्रहश्शाम्यति । अन्यधा मोक्षोपाय विधिवैयर्थ्याद्भगवति वैषम्य नैर्घृण्यप्रसङ्गाच्चेति भाव: । नन्वात्म निक्षेप आत्मसमर्पणम् । तच्च शेषत्वज्ञानमहं न मम तवैवेत्येवं रूपं तच्छास्त्रश्रवणवेलाया मेव भक्त्यधिकारि साधारण्येन जातं नप्रपत्त्यङ्गि स्वरूपं भवितु मर्हतीत्यत्रात्मनिक्षेप शब्दार्थं विवृणोति அதாவது इति-प्रकृतीति, प्रकृतिरकार: - प्रत्ययो लुप्त...

(सा.सं) सामर्थ्यसिद्धं यथावस्थितपदविवक्षिताकारविशिष्ट मात्मनिक्षेप शब्दार्थं विवृण्वन् स्वरूपज्ञान शून्यस्य भरन्यासदशायां तथान्वयविरहेण भरन्यास: कथं सेत्स्यतीति शङ्कांच परिहरति । அதாவது इति-अन्वयமில்லாதபடி इत्येतद्भरन्यास क्रियाविशेषणम् । ''स्वात्मानं मयि निक्षिपेत् ।...

**मू - सर्वरक्षक**னாய், **सर्वशेषि**யாய், தோற்றின **सर्वेश्वर**னைப் பற்ற **आत्मात्मीयरक्षणव्यापार**த்திலும், **आत्मात्मीय रक्षणफल**த்திலும், **स्वाधीन**மாகவும், **स्वार्थ**மாகவும், தனக்கு **अन्वय**மில்லாதபடி **भरन्यास प्रधान**மான **अत्यन्त पारतन्त्र्यविशिष्टशेषत्वानु सन्धानविशेषम्**

---

(सा.दी) प्रत्ययं लुप्तचतुर्थी । प्रकृतिயாலே सर्वरक्षकனாய் प्रत्ययத்தாலே शेषिயாய். இவ் விரண்டும் रक्षण व्यापार फलங்களில் स्वानन्वयத்துக்கு यथाक्रमं हेतुவாய். अत्यन्त पारतन्त्र्य विशिष्टत्वமே शेषत्वानुसन्धाने विशेषम् । अन्वयமில்லாதபடியென்றவளவால் स्वसम्बन्धமறுத்து उत्तरांशத்தால் स्वरूपभरफलங்களுக்கு परसम्बन्धानु सन्धानं சொல்லிற்று...

---

(सा.स्वा) மான आत्मनिक्षेपமாவதென்றபடி. सर्वेश्वरனைப் பற்ற என்கிறத்துக்கு अत्यन्त पार तन्त्र्येत्यादिயோடே अन्वयम् । अत्यन्त पारतन्त्र्यமாவது; लोकத்திலே राजाவைப்பற்ற भृत्यனுக் குள்ள पारतन्त्र्यं போலன்றிக்கே आत्मात्मीयங்களுடைய सत्तास्थिति प्रवृत्तिகளெல்லாம் तदधीन ங்களாயிருக்கை. இப்படியிவன் अत्यन्तपरतन्त्रனாகையால் தானே தன் आत्मात्मीयங்களை रक्षिத்துக் கொள்ள शक्तனல்லாமையால் அதிலிவனுக்கு स्वाधीनமாக अन्वयமில்லை. अत एव तद्रक्षण फलத்திலும் स्वाधीनமாக अन्वयமில்லை. शेषभूतனாகையால் आत्मात्मीय रक्षण व्यापारத் திலும் तत्फलத்திலும் प्राप्तனல்லாமையாலே அதில் स्वार्थமாகவும் अन्वयமில்லை. ईश्वरன் सर्व स्वतन्त्रனாய் सर्वरक्षकனாகையாலும், शेषिயாகையாலும், இச்चेतनனுடைய आत्मात्मीय रक्षण व्यापारத்திலும், तत्फलத்திலும், शक्तனுமாய் प्राप्तனுமாகையாலே இவற்றிலவனுக்கே स्वाधीन மாகவும், स्वार्थமாகவும் अन्वयம். लोकத்திலும் सम्बन्धமுள்ள चेतन विषयத்திலயிப் படியே யிறே கண்டதென்று கருத்து. शेषत्वेति இங்கு अनुसन्धानத்துக்கு विशेषமாவது, स्वरक्ष णादि களிலே தனக்கு प्राप्तिயில்லை என்கிற தெளிவோடே கூடுகையும் अनुष्ठेयமாம்படி कृति ...

---

(सा.प्र) न्नयागाद्यनुष्ठानसिद्धिः । तथा भरन्यास शास्त्रार्थज्ञानमात्रात्तदनुष्ठानासिद्धेः प्रपत्तव्य भगवद्वि ग्रहविशेष सन्निधौ द्वयवचन पूर्वकानु सन्धानविशेषस्यैव भरन्यासत्वात्तस्य विषय...

---

(सा.वि) चतुर्थी । தோற்றின, प्रकृत्या सर्वरक्षकत्वेन प्रतिपन्नं - चतुर्थ्या सर्वशेषित्वेन प्रतिपन्नम् । रक्षकत्वेन प्रतिपन्नत्वाद्रक्षणव्यापारस्य स्वाधीनता भवति । शेषित्वेन प्रतिपन्नत्वात्फलस्य स्वार्थता न भवतीत्यनुसन्धानेन यथा संख्यं योज्यम् - भरन्यास प्रधानமான इति - शेषत्वानु सन्धानविशिष्ट रक्षाभर समर्पणमात्मनिक्षेपशब्दार्थः - ''आत्मात्मीय भरन्यासो ह्यात्मनिक्षेप उच्यते'' इति वचनात् - अतो न भक्त्यधिकारि साधारण्यमिति भावः - अस्मिन्वाक्ये தனக்கு अन्वयமில்லாதபடி इति स्वसम्बन्ध निवृत्तिरुक्ता - शेषांशेन स्वरूपभर फलानां परसम्बन्ध प्रतिपादनम् - तत्र भरन्यासेति भरस्य परसम्बन्ध प्रतिपादनम्, शेषत्वानुसन्धानमिति स्वरूपस्य परसम्बन्ध प्रतिपादनम् इदमेव फलत्यागस्य च मूल...

---

(सा.सं) आत्मात्मीय भरन्यासः । तेन संरक्ष्यमाणस्य ''स्वोज्जीवनेच्छा यदि ते'' इत्यादि वचना नामैक कण्ठ्यमभिप्रेत्याह । भरन्यासेति । विशेष पदेन स्वनिर्भरत्व शिरस्कत्वं याच्नापूर्वकत्वं च विवक्षितम् आत्मात्मीयेत्यारभ्य தனக்கு अन्वयமில்லாதபடி इत्यन्तेन पारतन्त्र्यादि विशेषणात्यन्त शब्दार्थ उक्तः ।...

(सा.स्वा) साध्यமாகையும், शेषत्वानुसन्धानமென்கிறவித்தாலே தானே இவ்आत्मनिक्षेपं फल निक्षेप गर्भமாம்படியும் சொல்லிற்றாகியது; शेषत्वமாவது परप्रयोजनத்தையே தனக்கு परमप्र योजनமாகவுடைத்தாயிருக்கையிறே. இவ்अनुसन्धानத்துக்கு भरन्यासं प्रधानமாகையாவது. இதற்கு उद्देश्यமாயிருக்கை. உடையவனுக்கு உடைமையை समर्पिப்பது அதின் रक्षणभरத்தை அவன் மேலே ஏறிடுகைக்காவிறே. ''दीयमानार्थ शेषित्वं सम्प्रदानत्वमिष्यते'' इत्यादिகளிற் படியே परस्वत्वापादनமிவ்விடத்தில் கூடாதாகிலும் ईश्वरன் தனக்கு शेषமான वस्तुவை தானே रक्षिத்துக் கொள்ளும்படி ''यत्संरक्ष्यतयार्प्यते'' என்கிறபடியே रक्ष्यत्वेन समर्पिக்கிறவளவை யிட்டு இவ்अनुसन्धानविशेषं समर्पणरूपமாகிறதென்கிற अर्थं मूलमन्त्राधिकारத்திலே शिक्षित மாகிறதிறே. இத்தாலிவ் आत्मनिक्षेपं भरनिक्षेपगर्भமாம்படியும் சொல்லிற்றாகியது मन्त्र जन्यமான तत्त्वज्ञानமே उपायोपकारकமென்று ज्ञापिக்கைக்காக இங்கு प्रणवத்தில் इत्याद्युक्तिः। अत्र सर्वेश्वरत्वनिर्देशः पारतन्त्र्यप्रतिसम्बन्धि स्वातन्त्र्यख्यापनार्थः। अत्रेश्वरस्य स्वातन्त्र्यं रक्षकत्वं च चेतनरक्षणव्यापारादेस्स्वाधीनतायामुपयुक्तम्। शेषित्वं स्वार्थतायाम्। இச்चेतनனுடைய रक्षणादि களில் ईश्वरனுக்கே अन्वयமென்றக் கூடுமோ? रक्ष्यवस्तुनोऽनेकशेषि सत्त्वेनेकनियन्तृ सत्वे च तद्रक्षणादिகளிலே ஒருவனுக்கே अन्वयமென்கிற नियमமில்லையே? किञ्च शेषत्वानुसन्धानं शब्दजन्य ज्ञानरूपமாதல் तन्मूल स्मृतिरूपமாதலாயிருக்கவித்தை कृतिसाध्यமாகச் சொன்னது கூடுமோ? अनुभवरूपமாயாதல் स्मृतिरूपமாயாதலுள்ள प्रमाण परतन्त्रज्ञानமெல்லாம் पुरुषयत्न ம் अनपेक्ष्यैव जनिக்குமவையன்றோ? ''स्वात्मानं मयि निक्षिपेत्'' என்று चोदितமாயிருக்கை யாலிது प्रमाणपरतन्त्रज्ञानाद्विलक्षणமென்னில் இது शास्त्रजन्य शेषत्वज्ञानादधिक विषयமல்லாமை யாலேயத்தை विधिக்க வேண்டுவதில்லாமையாலிது चोदितமாகத்தான் கூடுமோ? देवतोद्देशेन द्रव्यत्यागात्मकयागरूपज्ञानं शास्त्रजन्य यागज्ञानादधिक वियषமல்லாதிருக்கச் செய்தேயும். चोदित மாகிறாப் போலே இதுவுமொரு यागरूपமாகையாலது கூடுமென்னில் ''इदमिन्द्राय न मम'' என்று यागमनुष्ठिக்குமாப் போலேயிந்த शेषत्वानुसन्धानத்தை यागरूपமாக अनुष्ठिக்கும்படியெங் ஙனே? अपि च ''स्वात्मानं मयि निक्षिपेत्'' ...

---

(सा.प्र) विशेषविशेषिततया शात्रजन्यज्ञानादधिकविषयत्वाच्च यत्नसाध्यत्वाद्विधि संभव इत्यभिप्रेत्य ...

---

(सा.वि) मित्यत्रैव फलत्यागप्रतीतेः फलसमर्पणमत्रैव सिद्ध्यतीति फलस्य परसम्बन्धप्रतिपादनमत्रैवेति विवेकः - पारतन्त्र्य विशिष्टेत्यनेन स्वतन्त्र कर्तृत्वबुद्धि निवृत्तिर्बोध्या। स्वाधीनकर्तृत्व स्वार्थकर्तृत्व बुद्ध्योरपि बन्धमूलत्वेन विरोधित्वात्तन्निवृत्तिरपि इहानुसन्धेयमिति भावः। ननु भरसमर्पण प्रधानपारतन्त्र्यविशिष्ट शेषत्वानुसन्धानविशेषस्य मन्त्रानु सन्धान दशायामेव जातत्वात्प्रमाण तन्त्रस्य ज्ञानस्य कृति साध्यत्वाभावान्न विधेयत्वमित्यत्र यागस्य ज्ञानस्वरूपत्वेऽपि ''यदाग्नेयोऽष्टा कपालो भवति। अग्नीषोमीयं पशुमालभेत इत्यादि...

---

(सा.सं) सर्वेश्वरனைப் பற்ற इत्यन्तेन स्वरूपज्ञानवत्वोक्त्या शङ्कापि सा परिहृता। इत्थमुक्ताङ्गि...

**मू - ''स्वात्मानं मयि निक्षिपेत्''** என்று **चोदित**மான இவ்**अनुसन्धान विशेष**த்தை **अनुष्ठि**க்கும் படி, **शेषि**யாய் **स्वतन्त्र**னான **ईश्वर**ன் தன் **प्रयोजन**மாகவே தானே **रक्षि**க்கும்படிக்கீடாக —

(सा.दी) இவ்अनुसन्धान विशेषத்தை अनुष्ठिக்கும்படியைக் காட்டுகிறார். स्वात्मानं मयीत्यादि யால். स्वात्मानं मयीति இவ்अनुसन्धान कर्तव्यतैயில் प्रमाणम् - शेषिயாய் प्रणवार्थम् । स्वतन्त्र னான, स्वस्वातन्त्र्यनिषेध योजनैயால் सिद्धम् । இது नमः पदार्थம் - शेषित्वात् स्वप्रयोजनமாகவே स्वतन्त्रत्वात् தானே रक्षिக்கும்படிக்கீடாக शेषभूतனானவென்றத்தோடே अन्वयम्...

(सा.स्वा) என்று अङ्गिயை विधिக்கிறவிடத்தில் स्वरूपनिक्षेपमात्रं श्रुतமாயிருக்க भरफलनिक्षेपங் களையும் கூட अङ्गिயாகச் சொன்னது கூடுமோ? இங்கிவையும் கூட विवक्षितங்களென் கைக்கு प्रमाणं தானுண்டோ? என்னயிவையெல்லாத்துக்கும் उत्तरமருளிச் செய்கிறார். स्वात्मानमित्यारभ्य भाविக்கையென்னுமளவாலே. இவ்अनुसन्धानविशेषத்தை என்றது भरफल न्यास गर्भात्मनिक्षेपरूपமான अनुसन्धान विशेषத்தையென்றபடி. अनुष्ठिக்கும்படியென்றது अनुष्ठि க்கும் प्रकारமென்றபடி. இதற்கு भाविக்கை என்கிறத்தோடே अन्वयம். இது प्रमाणपरतन्त्रज्ञान- रूपமன்றிக்கே यागं போலே मानस भावनात्मकமாகையாலே यागवदेव शास्त्रजन्यज्ञानाद्भिन्न विष- यत्वமாகையாலே चोदितமாகைக்கும், कृतिसाध्यமாகைக்கும் குறையில்லையென்றதாயிற்று. इन्द्रादिदेवतोद्देशेन दध्यादि द्रव्यत्यागः कर्तव्यः என்றிங்ஙனே कर्तृकर्मसामान्यविषयமாகப் பிறக்கும் शास्त्रजन्यज्ञानமும் मदीयमिदं दधि इन्द्राय न मम என்றிங்ஙனே कर्तृकर्मव्यक्ति विशेष विषयकமான यागरूपमानस ज्ञानமும் परस्परविलक्षणங்களிறே - இவற்றில் शास्त्रजन्य ज्ञानं द्रव्यविशेषक त्यागवि शेष्यकम् - यागरूपज्ञानं द्रव्यमात्रविशेष्यक...

(सा.प्र) तस्यानुष्ठान प्रकारमाह । स्वात्मानं मयीत्यादि । ननु स्वरूपफलयोः समर्पणेऽपि भरसमर्पणा- भावे भक्तियोगमनपेक्ष्य रक्षकत्वासिद्धेः भरन्यास एव प्रपदनमिति वक्तव्यम् । लोके तावन्मात्रस्यैव कार्य करत्वदर्शनाच्चेत्यत्रांशत्रयात्मकत्वं सप्रमाणं दर्शयन् अनन्यार्ह शेष भूतस्य स्वस्य स्वरूपतो व्यापारतश्च आत्यन्त पारतन्त्र्यमप्याह । शेषिயாய் इत्यादिना...

(सा.वि) वाक्यार्थज्ञान मात्रान्न योगसिद्धिः, किन्तु सर्वाङ्गोपसंहारेण कृति साध्यत्वाद्विधेयत्वं - एवं भरन्यासस्यापि तदङ्गोप संहारेणानुष्ठानस्य कृति साध्यत्वाद्विधेयत्वं सम्भवतीत्यभिप्रेत्य विधिप्रदर्शन पुरस्सरं अनुष्ठान प्रकारमाह - स्वात्मानं मयि निक्षिपेदित्यादिना - अनुष्ठिக்கும்படி, अनुष्ठानप्रकारः । इदम् என்று भाविக்கை इत्यनेनान्वेति । शेषिயாய் स्वतन्त्रனான इति - स्वतन्त्रत्वेऽपि शेषित्वाभावे शेषत्व रहितं वस्तु न रक्षेत् । शेषित्वेऽपि परतन्त्रत्वेपरेण प्रतिषिद्धश्चेत् शेषभूतं न रक्षेत् । अत उभयमुपात्तम् । रक्षिக்கும்படிக்கீடாக रक्षणप्रकारानुगुणम् । अस्य शेषभूतனான इति पदेन...

(सा.सं) स्वरूपस्य सन्निवेशप्रकारं विवृणोति । स्वात्मानमित्यादिना शेषिயாய் इत्यादिना इत्यन्तेन अत्यन्त पारतन्त्र्यं विवृतम् । चोदितமான इत्युक्त्या अविधेयशेषत्व ज्ञानमेव आत्मोज्जीवनमिति पक्षानु पपत्ति...

**मू - अनन्यार्हानन्याधीनशेषभूतனாய் अत्यन्तपरतन्त्रனான நான் ''आत्मापि चायं नमम'' என்கிறபடியே எனக்குரியனல்லேன்,**

(सा.दी) अनन्यार्ह शेषभूतனான நான் எனக்கும் மற்றொன்றுக்கும் உரியேனல்லேன். अनन्याधीनனான நான் स्वतन्त्रனாயும், शेषभूतனான நான் प्रधानफलिயாயும், रक्षित्துக் கொள்ள योग्यனுமல்லேன் என்று योजनै. आत्मापि चायं न मम என்று नमश्शब्दनिरुक्ति वाक्यम् ।...

(सा.स्वा) மென்றிப்படி மற்றும் वैलक्षण्यं கண்டு கொள்வது अनन्यार्हेत्यादि अनन्यार्हेत्यनेन ईश्वर व्यतिरेकेण शेष्यन्तर शून्यत्वमनन्याधीनेत्यनेन नियन्त्रन्तरशून्यत्वं चोच्यते - प्रणवத்தில் मध्यमाक्षरத்தாலும் नमஸ்ஸாலும் இச்चेतनன் शेष्यन्तरनियन्त्रन्तर शून्यனென்று सिद्धமாயிருக்கையால் இவனுடைய रक्षणादिகளில் ईश्वरனுக்கே अन्वयமென்கிற नियमத்துக்குத் தட்டில்லையென்று கருத்து. இவ்अर्थங்களெல்லாமிவனுக்கு श्रवणदशायामेवागतங்களாயிருந்தாலும் उपायानुष्ठानदशायां प्रमादादिना तत्प्रतिसन्धानமில்லாதபோது उक्तशङ्कैகள் संभावितங்களாகையால் यथावदङ्गचनुष्ठानं सिद्धिயாமையால் अवश्यमनुष्ठान दशैயிலிவ்अर्थங்கள் प्रतिसन्धातव्यங்களென்று கருத்தாலே இவ்अर्थங்களை யிங்கு अनुसन्धेयங்களாக வருளிச் செய்தது. ''स्वात्मानं मयि निक्षिपेत्'' என்கிற विधि वाक्यத்தில் परसम्बन्धमात्रமொழிய स्वसम्बन्धत्यागं श्रुतமில்லாதிருக்க आत्मात्मीयानां स्वसम्बन्धत्यागमनुष्ठेयமாவது எங்ஙனேயென்று शङ्किயாமைக்காக आत्मापि चायं न ममेति प्रमाणो दाहरणम् । च शब्दादात्मीयसङ्ग्रहः । एतत्प्रमाणबलात्स्व सम्बन्ध त्यागं அந்த निक्षेपविधिवाक्यத்திலும் विवक्षितமென்றதாகிறது. உரியேனல்லேன், योग्यனல்லேன். शेषமாகுகைக்கு...

(सा.प्र) எனக்கு உரியேனல்லேன் स्वशेषत्वयोग्यो न भवामि ।...

(सा.वि) सम्बन्धः अनन्यार्हानन्याधीनेत्यत्र अनन्यार्हत्वमवधारणार्थ उकारे अन्यार्थत्वस्य व्यावर्तितत्वात्सिद्धम् - लुप्तचतुर्थी प्रतिपादित शेषत्वस्योपाध्य भावेन यावत्स्वरूप भावित्वाच्छेषत्वस्यानन्याधीनत्वं सिद्धमित्युभयं विशेषणम् । நான் अहम् எனக்கு मम । உரியேனல்லேன், शेषी न भवामि - ''आत्मापि चायं नमम'' इति नमश्शब्दनिरुक्तिवाक्यम् । अत्रानन्यार्हेति विशेषणेन भगवदन्यार्हत्वनिषेधात्स्वस्यापि तदन्यत्वात्स्वं प्रति स्वस्यशेषत्वानर्हत्वमिति सूचितम् । ननु स्वस्य स्वं प्रति शेषित्वं न प्राप्तमिति न निषेध्यमिति चेन्न - स्वशरीरालङ्कारादिकर्तृत्वादिना शेषित्वस्य तत्फलित्वेन श्लाघ्यत्वस्य प्राप्तत्वात् अनन्याधीनेति पदेन कर्माधीनशेषत्वस्य तु निषेधो नास्तीति सूचितम्...

(सा.सं) सूचिता । अनन्यार्हत्वं नित्यनिरूपाधिकान्यशेषत्वानर्हत्वम् । शेषत्व स्यानन्याधीनत्वमनौपाधिकत्वम् - भागवत शेषत्वादिकन्तु भगवदिष्ट विनियोगसिद्धतया नोक्ततदुभयविरोधीति भावः - यागे इदमिन्द्रायेति पूर्वं परस्वत्व मापाद्य पश्चान्नममेति स्वस्वत्वत्यागः - अत्रतु परस्व त्वमेव आत्महविषस्स्वरूपमिति द्योतनाय शेषभूतனான நான் इत्यन्तोक्तिः - ममतानिबन्धनो हि संसारः - अतस्तत्याग एवेह प्रथम इत्याह - आत्मापीति - உரியேனல்லேன், शेषी न भवामि...

**मू - ஒன்றே निरुपाधिकமாகவென்றிதென்று புரியேனுமல்லேன் ''स्वयं मृत्पिण्डभूतस्य पर तन्त्रस्य देहिनः । स्वरक्षणेऽप्यशक्तस्य को हेतुः पररक्षणे''** என்கிறபடியே என்னையு மென்ன தென்று பேர் பெற்றவத்தையும், நானே **स्वतन्त्र**னாயும், **प्रधानफलि**யாயும்

(सा.दी) स्वयं मृत्पिण्डेत्यादि - स्वतः ईश्वर प्रेरणाभावे मृत्पिण्डाद विशिष्टस्य अत एवेश्वर परतन्त्रस्य चेतनस्य स्वरक्षणेऽपि स्वतो अशक्तस्य परेषां रक्षणे कः प्रसङ्गः என்கை - प्रधानफलि...

(सा.स्वा) योग्यனல்லேனென்றபடி. என்னதென்றவுமுரியேனல்லேன். मदीयமென்று अभि मानिக்கைக்கும் योग्यனல்லேனென்றபடி. அப்போது आत्मीयानां स्वशेषत्व ग्राहक प्रमाणं विरोधि யாதோ? என்று शङ्कियாமைக்காக निरुपाधिकமாக इत्युक्तिः । அந்த प्रमाणं सोपाधिक शेषत्वपर மாகையால் विरोधமில்லையென்று கருத்து. स्वात्माவுக்கு स्वीयत्व प्रसक्तियேயில்லாமை யாலும் आत्मात्मीयங்களில் தனக்குள்ள स्वत्वத்தை प्रपत्त्यनुष्टान कालத்தில் त्यजिப்பதில்லாமை யாலும், यागस्थलத்தில் द्रव्यस्य स्वसम्बन्धत्यागं பண்ணுகிறாப் போலேயிங்கது பண்ணக் கூடாமையால் आत्माவில் स्वशेषत्वयोग्यताभावप्रतिसन्धानமும், आत्मीयங்களில் निरुपाधिक स्वशेषत्व योग्यताभाव प्रतिसन्धानமுமே स्वसम्बन्धत्यागமாகிறதென்றிவ்वाक्याभि प्रायम् । स्वतन्त्र னாயும் इत्यादि । इदु विशिष्ट निषेधम् । அதாவது, स्वतन्त्रனாகைக்கும் प्रधान फलिயாகைக்கும் योग्यனல்லேன். अत एव रक्षिத்துக் கொள்ள योग्यனுமல்லேனென்றபடி. स्वतन्त्रனும் प्रधानफलि யுமாகிலன்றோ रक्षिத்துக் கொள்ள योग्यனாவதென்று கருத்து. चेतनत्वा देवात्मीयरक्षण योग्यனாகலாகாதோவென்று शङ्कियாமைக்காக स्वयं मृत्पिण्डभूतस्येत्यादि प्रमाणोदाहरणम् । स्वयं मृत्पिण्ड भूतस्य, स्वतो मृत्पिण्डादविशिष्टस्य । ईश्वर प्रेरणाभावे...

(सा.वि) ஒன்றை निरुपाधिकமாக என்னதென்றறியேனுமல்லேன். என்னதென்று अस्मदीयमित युक्तं ஒன்றை पुत्रादि किञ्चित् प्रपाति । निरुपाधिकமாக உரியேனுமல்லேன். शेषी न भवामि । कर्मकृतमौपाधिक शेषित्वं तस्यैवेति भावः - एवं नमश्शब्दस्य प्रणवेनान्वये प्राप्तस्वशेषित्वादि निवृत्त्यनु सन्धानमुक्त्वा किञ्चिदित्यध्याहारेण न मम रक्षणादि व्यापारे निरपेक्षकर्तृत्वादिकमिति स्वस्थानान्वय प्राप्त स्वस्वातन्त्र्य निवृत्यनुसन्धानमुत्तरान्वय प्राप्तफलान्वय निवृत्यनु सन्धानं चाह - स्वयं मृत्पिण्ड भूतस्येति-मृत्पिण्डभूतस्य, मृत्पिण्ड सदृशस्य - जडो मृत्पिण्डो यथा स्वरक्षणे न समर्थः तथायं देही ज्ञानाश्रयोऽपि परतन्त्रत्वात्स्वरक्षणाशक्तः किमुत पररक्षणे इति भावः - என்னையும், मामपि । என்னதென்று பேர் பெற்றவத்தையும் मदीयमिति नामधारिवस्तु च । कर्मवशेन मदीयमिति व्यवह्रियमाणं चेत्यर्थः - நானே, अहमेव - अत्राप्यनन्यार्हनन्याधीन शेषभूतனான इत्यनुषञ्जनीयम् - तादृशोऽयं स्वतन्त्रனாயும், स्वतन्त्रस्सन् । निरपेक्षकर्ता सन् । पराधीनकर्तृत्वं त्वस्यैव । अन्यथाशरणं व्रजेत्यादि विधि निषेधानर्हत्वापत्तिः ''परात्तु तच्छ्रुतेः'' इति सूत्राच्चेदिति भावः-प्रधानफलिயாயும்...

(सा.सं) स्वीयत्वेनाभिमतानि ஒன்றை इत्यनेन गृह्यन्ते - आभ्यामहं मदीयं च न ममेति निरुपाधि कममतात्याग उक्तो भवति - मृत्पिण्डभूतस्येत्यनेन ईश्वरानधीनत्वं व्यवच्छिद्यते - योग्यனுமல்லேன் इत्यन्तेन...

**मू - रक्षित्तुक् கொள்ள योग्यனுமல்லேன். ''आत्माराज्यं धनं चैव कलत्रं वाहनानि च। एतद्भग वते सर्वमिति तत्प्रेक्षितं सदा'' என்று विवेकिகள் अनुसन्धित्त क्रमத்திலேயென்னுடைய आत्मात्मीयங்களும் அவனதே...**

(सा.दी) प्रधानனான फलप्रतिसम्बन्धी। இப்படி स्वसम्बन्धத்தையறுத்து परसम्बन्धानुसन्धानं பண்ணுகிறார். आत्मेत्यादिயால். இது उपरिचर वसुविषयம் आत्मादि सर्वं भगवते - चतुर्थी शेषत्वद्योतिकै - भगवच्छेषभूतमिति सदा नेनानुसंहितमिति - இவற்றின் रक्षणभरமும் அவனதே யென்றும் அதில் प्रमाणங்கள்...

(सा.स्वा) मृत्पिण्डादविशिष्टस्येति यावत्। एतेन पारतन्त्र्यस्यात्यन्तिकत्वं च विवक्षितम्। रक्षित्तुक் கொள்ள योग्यனுமல்லேன் इति। अकिञ्चनனுக்கு स्वरक्षणार्थ व्यापाररूपभरத்திலே कर्तृत्वेनान्वय प्रसक्तिயில்லாமையாலதில் தனக்கு योग्यता भावप्रतिसन्धानமே भरस्नस्य स्वसम्बन्धत्यागமாகிற தென்று கருத்து. अत्रप्रधान फलित्वयोग्यता भावोक्त्यैव फलत्यागமும் சொல்லிற்றாகிறது. मुमुक्षु வாயிருக்கிற தனக்கு फलित्वमवर्जनीयமாகையால் प्रधानफलित्वाभाव प्रतिसन्धानமே फलस्य स्वसम्बन्धत्यागமாகிறதென்று கருத்து. स्वसम्बन्धत्याग पर सम्बन्धानु सन्धानात्मकமான இந்த यागानुष्ठानத்தில் स्वरूपभरफलानां स्वसम्बन्धत्यागांशத்தைக் காட்டி இனி क्रमेण परसम्बन्धांश த்தைக் காட்டுகிறார். आत्मेत्यादिயால். आत्मात्मीयेषु स्वीयत्वाभिमानமிருந்தாலன்றோ இவை யவனதேயென்று இப்போது भाविக்கக் கூடுவது. तत्त्ववित्தாகையாலேயிவனுக்கு அவ் अभिमानமில்லாமையால் இது கூடுமோவென்று शङ्कियாமைக்காக आत्माराज्यमित्याद्युक्तिः। இந்த वचनं महाभारतத்தில் उपरिचर वसुविषयம் । तत्प्रेक्षितमिति भावेक्तः। तस्य, उपरिचरवसोः प्रेक्षणं भावनमिति यावत्। विवेकिகள் इति। स्वीयत्वाभिमान गन्धமில்லாத उपरिचरवसु प्रभृतिகளு மிப்படி भाविக்கக் காண்கையாலே இந்த भावनैக்கு स्वीयत्वाभिमान पूर्वकत्वनियमமில்லாமை யாலிங்கும் இது கூடுமென்று கருத்து. ''स्वात्मानं मयि निक्षिपेதென்கிறவிடத்திலே आत्मीयங் களுக்கு निक्षेपं श्रुतமல்லாதிருக்கவிங்கு அவற்றுக்கும்கூட...

(सा.वि) स्वाधीनकर्ता सन्। प्रति प्रीत्यर्थ पतिव्रतालङ्कारवन्नान्तरीयक तया स्वफलत्वमस्त्येव। ''भुंक्ते स्वभोगमखिलं पतिभोगशेष'' मित्युक्तमित्यभिप्रेत्य प्रधानेति प्रधान फलित्वस्य निषेध उक्तः रक्षित्तुक் கொள்ள योग्यனுமல்லேன். रक्षितुं योग्यो नास्मि - अत्रानन्याधीनशेषत्वं निरुपाधिकशेषत्वं शेषत्वस्योपाध्यभावेन यावत् स्वरूप भावित्वानन्याधीनत्वमिति व्याख्यातत्वात् - तदाक्षिप्तं पारतन्त्र्यं निरपेक्ष कर्तृत्वनिषेधोपयोगीति बोध्यम् - केचित्तु अनन्यार्हानन्याधीन शेषभूतனான நான் इति वाक्यम्, अनन्यार्ह शेष भूतனான நான் யெனக்குரியேனல்லேன். अनन्याधीनனான நான் स्वतन्त्र னாயும், शेषभूतனான நான் प्रधान फलिயாயும் रक्षित्तुक् கொள்ள योग्यனுமல்லேன். इति योजयन्ति - एवं स्वसम्बन्ध निवृत्यनुसन्धान प्रकारमुक्त्वा परसम्बन्धानुसन्धान प्रकारमाह - आत्मराज्य मित्यादिना - तत्प्रेक्षितं, उपरिचरवस्वनु सन्धानम् - என்னுடைய आत्मा इति - स्वरूपसमर्पणम्।...

(सा.सं) स्वतन्त्र कर्तृत्वत्याग प्रधान फलित्वत्यागरूप फलत्यागौ कथितौ - स्वरक्षण व्यापारे फलोपायत्वत्यागोऽप्यत्रार्थसिद्धः - अथ आत्मेत्यादिना आत्मात्मीययोः...

**मू - ''आत्मात्मीय भरन्यासो ह्यात्मनिक्षेप उच्यत''** என்கையால் இவற்றினுடைய **रक्षण भर**மும் **''नहि पालन सामर्थ्यमृते सर्वेश्वरं हरिम्''** என்கிறபடியே **सर्वरक्षक**னான அவனதே **''तेन संरक्ष्यमाणस्य फले स्वाम्य वियुक्तता। केशवार्पणपर्यन्ता ह्यात्मनिक्षेप उच्यते''** என்கிறபடிய **रक्षण फल**மும் **प्रधान फलि**யான அவனதே என்று **भावि**க்கை.

(सा.दी) आत्मात्मीय भरन्यास इति। आत्मात्मीयेत्यनेन இவ்अर्थं सूचितम् - न हि पालनमिति कण्ठो क्तिः - रक्षणफलமுமவனதேயென்றுமதில் प्रमाणं तेन संरक्ष्यमाणस्येति - फले स्वस्य प्रधान स्वामित्व वियुक्ततै अनुसन्धिक्கப்படுகிறது. फलस्य स्वसम्बन्धनिषेधमात्रं न कर्तव्यम्। किन्तु केशव पर्यन्ततानुसन्धेया। फलं केशवे समर्पणीयम्। तदीयतयानुसन्धेयम्। फलस्य स्वसम्बन्धनिषेधः - पर सम्बन्ध...

(सा.स्वा) समर्पणं சொன்னது கூடுமோ? என்று இஶ்शङ्कैயை अर्थात् परिहरिயா நின்று கொண்டு இந்த अङ्गि विधिवाक्यத்தில் भरसमर्पणं विवक्षितமென்கைக்கு नियामकமுண்டோ வென்கிற शङ्कैக்கும் उत्तरமருளிச் செய்கிறார். आत्मात्मीयेत्यदियால். आत्मनिक्षेप उच्यते என்று भरन्यासத்தையும் आत्मनिक्षेप शब्दार्थமாக विवरिக்கையாலேயிதுவும் अङ्गिயென்றதாகையால், स्वात्मानंमयि निक्षिपेत् என்கிற अङ्गि विधि वाक्यத்தில் भरसमर्पणं विवक्षितமென்கைக்கு இதுவே नियामकமென்று கருத்து. இங்கு आत्मीय भरन्यासத்தையும் கூட आत्म निक्षेपமாகச் சொல்லுகை யாலே இந்த विधिवाक्यத்தில் आत्मीयங்களும் विवक्षितங்களாகையாலிங்கவற்றுக்கும் கூட स्वरूप समर्पणं சொன்னது கூடுமென்றதாயிற்று. அவனதேயென்றிங்கே अवधारणं பண்ணக் கூடுமோ? ईश्वरனுக்குப் போலே नित्यसूरिகளுக்கும் यावदात्मभाविயான शेषित्वமிருக்கை யாலே रक्षण भरமவர்களது மாகாதோவென்று शङ्किயாமைக்காக न हि पालनेत्याद्युक्तिः। அவர்களுக்கு यावदात्म भावि शेषित्वமிருந்தாலும் सर्वेश्वरत्वமில்லாதிருக்க रक्षण सामर्थ्य மில்லையென்று प्रमाणं சொல்லுகையாலும் அவர்களும் रक्ष्यकोटि निविष्टராய் அவனே सर्वरक्षकனாகையாலுமிங்கு अवधारणं கூடுமென்று கருத்து. स्वात्मानं मयि निक्षिपेत् என்கிற இடத்திலே फलसमर्पणं विवक्षितமென்கைக்கு नियामकமுண்டோவென்கிற शङ्कैயைப் परिहरिக் கைக்காக तेनेत्यादिप्रमाणोदाहरणम्। இங்கு फलसमर्पणத்தையும் आत्मनिक्षेप शब्दार्थமாகச் சொல்லுகையால் அந்த विधिवाक्यத்தில் फलसमर्पणமும் विवक्षितமென்கைக்கு இவ்வசனமே नियामकமென்று கருத்து. தானும் फलिயாயிருக்க फलமவனதேயென்று अवधारणं பண்ணக் கூடுமோ? என்று शङ्कै उदियाமைக்காக प्रधानफलीति निर्देशः। தனக்கு வருகிற भोगांशமும் पति भोग शेषமாகையாலிங்கு अवधारणं கூடுமென்று கருத்து. இங்கு स्वरूपसमर्पणादिகள் மூன்றும் अनुष्ठेयமாகைக்கு मुमुक्षुत्वं निबन्धनமாகில் प्रयोजनान्तरार्थ प्रपत्त्यधिकारिக்கு अङ्गिயில் லாதொழியாதோ? उपासकस्यापि मोक्षार्थமாக भरन्यासमनुष्ठेयமாகவும் प्रसङ्गिயாதோ? अकिञ्च-नत्वनिबन्धनமாகில் प्रयोजनान्तरार्थप्रपत्त्यधिकारिக்கு...

(सा.प्र) ननु भरन्यासस्य स्वरूपफल भरसमर्पण रूपांशत्रयात्मकत्वं अनुपपन्नम्। फलान्तरार्थे...

(सा.वि) இவற்றினுடைய रक्षणभरमिति-भरसमर्पणं, रक्षणफलமும் इति फलसमर्पणम्-मोक्षार्थ...

(सा.सं) आत्मात्मीयेत्यादिना तदुभयरक्षण भरस्य, तेनेत्यादिना रक्षण फलस्य च परसम्बन्ध...

**मू - ''मुमुक्षुमात्रसामान्यं स्वरूपादि समर्पणम्। अकिञ्चने भरन्यास**

(सा.दी) सम्बन्धित्वेनानुसन्धानं च कर्तव्यमिति भावः। मोक्षार्थ प्रपन्नனுக்கு भक्तரிலும் प्रयोजनान्तर प्रपन्नரிலும் अनुष्ठानविशेषங் காட்டுகிறார். मुमुक्षुमात्रेति। இங்கு मात्रशब्दं कात्स्न्र्यपरम्। स्वरूप समर्पणं फल समर्पणं च सर्वमुमुक्षु साधारणम् - भक्तருக்கும் शेषत्वानुसन्धानமும், फलं प्रधान फलिயான ईश्वरனது என்று अनुसन्धानமுமுண்டு. अकिञ्चन विषयத்தில்...

(सा.स्वा) மிவை மூன்றும் अनुष्ठेयமாக प्रसङ्गिயாதோ? उपासकனுக்கு स्वरूपफलसमर्पणங் களில்லாதொழியவும் प्रसङ्गिயாதோ? मुमुक्षुत्वविशिष्टाकिञ्चनत्वनिबन्धनமென்றாலும் प्रयोज-नान्तरार्थप्रपत्त्यधिकारिக்கு अङ्गयभाव प्रसङ्गமும் उपासकனுக்கு स्वरूपफल समर्पणाभाव प्रसङ्गமும் तदवस्थமன்றோ? இனி भरसमर्पणांशத்துக்கு अकिञ्चनत्वமும், स्वरूपफलसमर्पणांशத்துக்கு सकिञ्चनत्वமும், निबन्धनங்களென்றத்தானக் கூடுமோ? அப்போது अकिंचनனான मुमुक्षुவுக்கு स्वरूप फल समर्पणமில்லாதொழிய प्रसङ्गिயாதோ? வென்ன स्वरूप फल समर्पणांशத்துக்கு मुमु-क्षुत्वமும், भरसमर्पणांशத்துக்கு अकिञ्चनत्वமும், निबन्धनமாகையால் उक्तशङ्कैகளொன்றுக்கும் अवकाशமில்லையென்று उपपादिக்கிறார். मुमुक्षु मात्रेत्यादि श्लोकद्वयத்தாலே. मात्रशब्दः कात्स्न्र्यपरः। सामान्यமென்றது साधारणமென்றபடி - स्वरूपादीत्यत्रादि शब्देन फलमात्रं गृह्यते - तथा च स्वरूपफलसमर्पणांशத்துக்கு सकिञ्चनत्वं निबन्धनமன்றிக்கே मुमुक्षुत्वமே निबन्धनமாகை யால் अकिञ्चनனான मुमुक्षुவுக்கும் स्वरूपफलसमर्पणमनुष्ठेयமாகத் தட்டில்லையென்று கருத்து. अकिञ्चन इत्यादि। तु शब्देन भरन्यासांशस्यस्वरूप फलसमर्पणांशाद्वैषम्यं द्योत्यते। அத்தைப் போலே இது मुमुक्षुत्वத்தை निबन्धनமாகவுடையதன்றென்றபடி. तथा च भरन्यासத்துக்கு मुमुक्षुत्वं निबन्धनமன்றிக்கே अकिञ्चनत्वமே निबन्धनமாகையால் இது उपासकனுக்கு प्रसङ्गिயாதே मुमुक्षुக்களில் अकिञ्चन...

(सा.प्र) स्वरूपफलसमर्पणाभावेऽपि फलसिद्धेरित्यत्र मोक्षार्थ भरन्यासो अंशत्रयात्मक इति सयुक्तिक माह। मुमुक्षु मात्र सामान्यमित्यादिना। यद्यपि प्रयोजनान्तरार्थभरन्यासे स्वरूपादिसमर्पणमनपेक्षितम्। तथापि मोक्षार्थ भरन्यासे अधिकारिणो मुमुक्षुत्वात् स्वरूपादिसमर्पणं सिद्धम्। तस्याकिञ्चन-त्वाद्भरसमर्पणमपि सिद्धमेवेति भावः। स्वरूपादीत्यादि शब्देन फलपरि...

(सा.वि) प्रपन्नस्य भक्तात्प्रयोजनान्तरार्थ प्रपन्नाच्चव्यावृत्तिं दर्शयितुमाह - मुमुक्षु मात्रेति - आदिशब्देन फलसमर्पणं गृह्यते - सामान्यं साधारणम्। भक्तानामपि स्वरूपसमर्पणं फलसमर्पणं चास्ति - अतो नैतावन्मात्रं प्रपत्तिः। किं तर्हि प्रपत्ति स्वरूपमित्यत आह - अकिञ्चने भर...

(सा.सं) भावन प्रकारः प्रदर्शितः। इत्थमङ्गित्वेनोक्ते समर्पण त्रयेऽपि भरसमर्पणमितरविद्यासाधारणं नेत्याह। मुमुक्षु मात्रेति। स्वरूपसमर्पणं आदि शब्दविवक्षितं फलसमर्पणं च मुमुक्षुमात्र सामान्यं, सकिञ्चनाकिञ्चन सर्वमुमुक्षु साधारणम्। कर्म योगादिस्थलेऽपि साधारणमित्यर्थः। अकिञ्चने, भक्त्यनधिकारिणि तु, भरन्यासः आत्मरक्षा भरन्यासः। अधिकः इतरविद्यापेक्षयाधिकः...

**मू - स्त्वधिकोऽङ्गितया स्थितः । अत्र रक्षाभरन्यासस्समस्सर्व फलार्थिनाम् । स्वरूपफलनिक्षेपस्त्वधिको मोक्ष**

(सा.दी) रक्षाभरन्यासमधिकतया कर्तव्यम् । इது अङ्गियायिருக்கும் अत्रेति, ईश्वरस्य प्रधान फलित्वத்தை...

(सा.स्वा) னானவனுக்கே अधिकமாயிருக்குமென்றபடி. இப்படி तत्तदंशनिबन्धनங்களாலே தானேயவனுக்கு மூன்றும் अनुष्ठेयமாக सिद्धिக்கையாலேயிங்கு विशिष्ट निबन्धनமாக வேண்டாமையால் तत्प्रयुक्त चोद्यத்துக்கு अवकाशமில்லையென்றதாயிற்று. अङ्गितया स्थित इति हेतुगर्भविशेषणम्: இந்த विशेषणं "स्वात्मानं मयि निक्षिपेत्" என்கிற अङ्गि विधिवाक्यத்திலே भरन्यासं श्रुतமல்லாதிருக்க அதிவனுக்கு வருவதெங்ஙனே யென்கிற शङ्कावारणार्थं அங்கு कण्ठोक्तமல்லா விட்டாலும் "आत्मात्मीय भरन्यासो ह्यात्मनिक्षेप उच्यते" इत्यादि प्रमाण बलத் தாலே யிதுவுமங்கே विवक्षितமாய்க் கொண்டு अङ्गियாகத் தீர்ந்திருக்கையாலிவனுக்கு இது வரத் தட்டில்லையென்று கருத்து. अत्रेति. आकिञ्चन्ये सतीत्यर्थः - सम इति, भरन्यासांशத்துக்கு मुमुक्षुत्वமாதல் मुमुक्षुत्व विशिष्टाकिञ्चनत्वமாதல் निबन्धनமன்றிக்கே आकिञ्चन्यமே निबन्धन மாகையால் प्रयोजनान्तरार्थ प्रपत्त्यधिकारिக்கும் अङ्गि सिद्धिக்கத் தட்டில்லையென்று கருத்து. स्वरूपेत्यादि - तु शब्देन पूर्वस्माद्वैषम्यं द्योत्यते । भरन्यासத்தைப் போலே இது आकिञ्चन्यத்தை निबन्धनமாக உடையதன்றென்றபடி. तथा च स्वरूपादि समर्पणத்துக்கு आकिञ्चन्यं निबन्धन மன் றிக்கே मुमुक्षुत्वமே निबन्धनமாகையால் இது प्रयोजनान्तर प्रपत्त्यधिकारिக்கு प्रसङ्गियாதே मोक्षार्थिக்கே अधिकமாயிருக்குமென்று கருத்து. ईश्वरस्यप्रधानफलित्वानुपपत्तेः पूर्वोक्त फल समर्पणा...

(सा.प्र) च्छदादि गृह्यते । ननुफलसमर्पणं नाम फलस्य तदीयत्वानुसन्धानम् । तच्चायुक्तम् "शास्त्र फलंप्रयोक्तरि:" इति न्यायात् । प्रपन्नस्यैव फलित्वादित्याशङ्कामनूद्य "दासभूतास्स्वतस्सर्वे ह्यात्मानः परमात्मनः" इत्यादि प्रमाणवशाद्भगवस्तस्सर्वशेषित्वाच्छेष भूतातिशयानां सर्वेषां "प्रशस्तिस्साराज्ञ" इत्युक्त प्रकारेण शेषिणं भगवन्तं प्रत्येव प्राधान्येन फलित्वं

(सा.वि) न्यास इति - कथमस्याङ्गित्वमित्यत आह - अत्ररक्षाभरन्यास इति । भक्तानामप्यङ्ग प्रपत्तौ भक्तिप्रतिबन्धक पापनिवर्तनाय भक्तिरक्षा भरसमर्पणं मस्त्यैवेति भावः - तर्हि मोक्षार्थ प्रपत्ति-निष्ठस्यापि रक्षाभरसमर्पणेव भवतु - किं स्वरूपफल समर्पणाभ्यामित्यत आह - स्वरूपफलनिक्षेप-स्त्वधिको मोक्षकाङ्क्षिणामिति - तत्त्वज्ञानिनो वस्तुस्वभावज्ञान प्राप्तम्, आत्मापहार प्रायश्चित्तं बन्ध-मूलविरोधि निवृत्त्यनु सन्धानरूपं च स्वरूपफल समर्पणमावश्यकमिति भावः...

(सा.सं) अङ्गितया, प्रधानतया । स्मृतः, विहितः । इतर विद्यासु स्वरूप फलयोरेव समर्पणम् - अकि-ञ्चन मुमुक्षु प्रपत्तौ तु तदुभय विशिष्ट भर समर्पण मावश्यकमिति निष्कर्षः - मुमुक्षुमात्रसामान्यमित्यस्य व्यावर्त्यं दर्शयन् मुमुक्षु प्रपत्तौ स्वरूपफल निक्षेपयोरावश्यकतां दर्शयति - अत्रेति । अत्र, प्रपत्ति सामान्ये - रक्षाभरन्यासः सर्वफलार्थिनां समानः प्रपत्तिमन्तरेणोपायन्तराशक्तानां प्रपत्तेर्भरन्यासात्मकत्वादिति भावः । मोक्षकाङ्क्षिणां प्रपत्तौ तु स्वरूपफलनिक्षेप अधिकः - तयोः मोक्षहेतुसर्वविद्या साधारणत्वादिति भावः । अधिकः...

**मू - काङ्क्षिणाम्'' फलार्थि**யாய் **उपायानुष्ठानं** பண்ணுகிற **जीव**ன் **फलि**யாயிருக்க **ईश्वर**னிங்கு **प्रधान फलि**யான படியெங்ஙனே யென்னில், **अचित्**தின் **परिणाम**ங்கள் போலே **चित्तु**க்குத் தான் கொடுத்த **पुरुषार्थ**ங்களும் **सर्वशेषि**யான தனக்கு உகப்பாயிருக்கையாலே **ईश्वर**ன் **प्रधानफलि** யாகிறான்.

(सा.दी) आक्षिप्य समाधानं பண்ணுகிறார். फलार्थिயாய் इयादिயால் समाधत्ते - अचित्தின் इत्यादि யால். अचित्தின் परिणामங்களைக் கண்டு உகப்பான் ईश्वरனாகையால் परिणाम विषयத்தில் फलि ईश्वरனே. அப்படியே चित्துக்களுடைய पुरुषार्थங்களையும் கண்டு உகக்கும் ईश्वर னுக்கே प्रधानफलित्वமென்கை. चेतनனுக்கும் अवान्तरफलित्वமுண்டென்று கருத்து. अचेतनத் துக்கு फलित्वं கூடாமையால் ईश्वरன் परिणामங்களுக்கு फलिயென்னலாம், जीवனுக்கு चेतनत्- वात् உகப்புண்டாகையாலேயிங்கு ईश्वरனுக்கு फलित्वं சொல்லக் கூடுமோ...

(सा.स्वा) योगादङ्गिनो दलत्रयात्मकत्वमनुपपन्नमित्यभिप्रायेण शङ्कते । फलार्थिயாய் इत्यादि । जीवனே बन्ध मोक्ष भागिயொழிய ईश्वरனப்படியில்லாமையாலும் फलार्थिயாய் उपायानुष्ठानं பண்ணினவனுக்கொழிய மத்தவனுக்கு फलित्वமில்லையென்று लोकवेदसिद्धமாகையாலும் ईश्वरனுக்கு फलित्वமேயில்லாதிருக்க, प्रधानफलित्वமெங்ஙனேயென்றபடி. ईश्वरன் बन्ध मोक्ष भागिயல்லாவிட்டாலும் जीवனைப் போலே फलार्थित्व पूर्वोकोपायानुष्ठानं பண்ணுகிறவனல்லா விட்டாலும் जीवனுக்கு शेषिயாய்க் கொண்டு தன்னுகப்புக்காக पुरुषार्थं கொடுத்துத் தானுகக் கிறவனாகையாலே प्रधानफलिயாகலாமென்கிற अभिप्रायத்தாலே परिहरिக்கிறார். अचित्தின் इत्यादि । परिणामेति । पृथिवीत्वादिகளும் गन्धरसादिகளுமாகிற विचित्र परिणामங்களுக்குத் தான் आश्रयமல்லாவிட்டாலும் அவை தனக்குகப்பாகிறாப் போலே जीवனுக்கு வருகிற मोक्षादि पुरुषार्थத்துக்குத், தான் आश्रयமல்லாவிட்டாலும் அது தனக்குகப்பாகலாமென்று கருத்து. सर्वेति, अचित्துக்குப் போலே चित्துக்கும் शेषिயன்றோவென்று கருத்து. இங்கு शेषित्वांशं फलित्वोपपादकम् । மற்ற अंशं அதில் प्राधान्योपपादकम् । இவையிரண்டும் ईश्वरனுக்கு உகப் பாயிருக்குமென்று तुल्यமாகச் சொன்னது கூடுமோ? अचेतनं स्वातिशयத்துக்கு स्वयं फलिயாக மாட்டாமையாலே அங்கு ईश्वरனே फलिயாகையால் அவ்विषयத்தில் ईश्वरனுக்கு உகப்பு மிகுத்திராதோவென்று अचेतनங்களுக்குத்தான் अतिशयங்களை உண்டாக்குவது केवल स्वार्थமாகிறாப் போலே चेतनனுக்கு स्वर्ग मोक्षादि...

(सा.प्र) इत्येतत्सोदाहरणमाह । फलार्थिயாய் इत्यादिना...

(सा.वि) फलार्थित्वस्य उपायानुष्ठातृत्वस्य जीवगतत्वात्कथं भगवत: फलित्वमिति शङ्कते - फलार्थि யாய் इति - जीवस्वरूपस्थिति प्रवृत्तीनां तदधीनत्वात्तल्लीलौक प्रयोजनत्वात्तस्यैव प्रधान फलित्वमिति समाधत्ते-अचित्தின் इति-अचिच्चेतनयोर्व्यापारस्य शेष्यर्थत्वेऽपि वैषम्यमस्ति । अचेतनस्य फलित्व...

(सा.सं) अमुमुक्षुप्रपत्त्यपेक्षयाऽधिक: ननु प्रयोक्तरिहि शास्त्रफलम् । न हि साधनानुष्ठातान्य: फली चान्य इति संभवति - अत: कथं फलसमर्पणं भगवत: प्रधान फलित्वोपपत्तिर्वेत्या शङ्क्य परिहरति - फलार्थिயாய் इत्यादिना । अचेतनगत परिणाम विशेषस्य फली, परिणामयितैव । तथा शेषभूतचेतने स्वदत्त पुरुषार्थ विशेष फली च दाता शेष्येवेति भगवत एव प्रधान फलित्वाद्युक्तं फलसमर्पण...

**मू - अचेतन**மான குழமணனை அழித்துப் பண்ணியும் **आभरणं** பூட்டியும் அழகு கண்டு உகக் கிறதோடும் **चेतन**மான கிளியை **पञ्जर**த்தில் வைத்து பால் கொடுத்தும் வேண்டிய படி பறக்க விட்டும் அதினுகப்பு கண்டுகக்கிறத்தோடு வாசியில்லையிறே **निरपेक्ष**ரான **रसिक**ருக்கு.

(सा.दी) என்னவருளிச் செய்கிறார். अचेतनமான குழமணனை इत्यादिயால் குழமணன், ताम्रादिயால் பண்ணிய பானை. இது ईश्वरன் अचित् विषयத்தில் संहार सृष्ट्यादिகளைப் பண்ணியுகக்குமதுக்கு दृष्टान्तम् - चेतन विषयத்தில் பண்ணும் सृष्टिसंहार मोक्षादिகளுக்கு दृष्टान्तं காட்டுகிறார். चेतनமான கிளியை इत्यादिயால். पञ्जर கூண்டு - இது चेतनனுடைய संहारத்தில் दृष्टान्तम् । இவனுக்கும் स्वरूप नाशமன்றியே सूक्ष्मप्रकृतिயில் सङ्कुचितत्वेनயிருக் கையிறே. संहारம் பால் கொடுத்துமென்றது करणकलेबरस्वर्गादिप्रदानத்தில் दृष्टान्तம் வேண்டிய படி इत्यादि. मोक्ष प्रदानத்தில் दृष्टान्तम् । கிளியினுடைய...

(सा.स्वा) पुरुषार्थभोगावस्थैகளையுண்டாக்குவதும், केवलस्वार्थமாகையாலிவையிரண்டிலும் உகப்பின் तारतम्यமில்லையென்னுமிடத்தை लोकदृष्टिயாலே उपपादिக்கிறார். अचेतनमित्यादि । குழமணன், ताम्राद्रिनिर्मित प्रतिमे. அழித்துப் பண்ணியுமென்றது संहार सृष्ट्यादि களாலே अचित्துக்கு स्वरूप परिणाम वैचित्रिயுண்டாக்குகிறதுக்கும், आभरणத்தைப் பூட்டியு மென்றது गन्ध रसादि रूपस्वभाव परिणाम वैचित्रिயுண்டாக்குகிறதுக்கும் दृष्टान्तम् । पञ्जरத்தில் வைத்துப் பால் கொடுத்துமென்றது शरीरத்துக்குள்ளே வைத்து चेतनனுக்கு स्वर्गादिभोगावस्थैகளை உண்டாக்குகிறத்துக்கும் வேண்டினபடி பறக்க விட்டுமென்றது मोक्षानुभावावस्थैயையுண் டாக்குகிறத்துக்கும் दृष्टान्तम् । निरपेक्षरित्यादि । केवल लीला रसार्थமன்றிக்கே अथपिक्षाद्युपाधि मूलமாகச் செய்யிலன்றோ உகப்பில் வாசியுண்டாவதென்று கருத்து...

(सा.प्र) குழமணனை அழித்துப் பண்ணியும் सालभञ्जिकां विनाश्य पुनः कृत्वा । एवं भूतं भरन्यासम् ।...

(सा.वि) असम्भवादीश्वर एव फलीति युक्तम् - चेतनस्य हर्षादि मत्वादत्र कथमीश्वरस्य फलित्व मित्यत्र दृष्टान्तमाह - अचेतनமான इति - குழமணனை, ताम्रादि मयकृत्रिमपुत्रिकाः அழித்துப் பண்ணி, विनाश्यसुन्दरं कृत्वा - पूर्वपिक्षया सुन्दर निर्माणेऽपि आनन्दो भवतीति तथोक्तेः आभरण த்தைப் பூட்டியும், आभरणानि निक्षिप्य । அழகு கண்டு, सौन्दर्यं दृष्ट्वा । உகக்குகிறதோடும், सन्तोषवत्वेन सह । கிளியை पञ्जरத்திலே வைத்து, शुकं पञ्जरे स्थापयित्वा । பால் கொடுத்து, क्षीरं दत्वा । வேண்டினபடி பறக்க விட்டும், अपेक्षितानु सारेण बहुलं संचारयित्वा - அதினுகப்புக் கண்டு, तत्सन्तोषं दृष्ट्वा । உகக்குறத்தோடும், सन्तोषवत्वेन सह । तत्संतोषे सहैतत्सन्तोषस्य । வாசியில்லை, तारतम्यं नास्तीत्यर्थः । उभयोः परस्पर तौल्यप्रतिपादनाय உகக்குறத்தோடு इत्युभयत्रैक रूप प्रयोगः । अचेतनालङ्कारादिना चेतनशुकादिना...

(सा.सं) मिति भावः अयमर्थो लोकरीतिसिद्ध इत्याह - अचेतनமான इति குழமணன், प्रतिमा - அழித்து பண்ணுகை, तेजिष्ठत्वेन सप्रीति दृश्यतया करणम् - அதினுகப்புக் கண்டு உகக்கிறத் தோடும் इत्युक्त्या चेतने फलान्वयस्य आनुषङ्गिकतोक्ता । निरपेक्षரான रसिகருக்கு इति - स्वगत परिपूर्णत्वबलेन चेतनाचेतन साध्योपकार सदसद्भावमनपेक्षमाणानां लीलैक प्रयोजनानामित्यर्थः ।...

(सा.दी) - अतिशयத்துக்கும் अवान्तर फलि கிளி - प्रधानफलि राजादिகள். ஆகையால், रक्ष्यभूत ஜுடைய आत्मरक्षाभर समर्पणं கீழே தாம் அருளிச் செய்தபடியே स्वस्वकीय रक्षाफलங்களில் स्वसम्बन्ध निषेधपूर्वक...

---

(सा.स्वा) ''भोग्यं मुकुन्द गुणभेदमचेतनेषु भोक्तृत्वमात्मसु निवेश्य निजेच्छयैव । पाञ्चालिका शुक विभीषण भोग दायी सम्राडिवात्म समया सह मोदसे त्वम्'' என்கிற शरणागति दीपिका श्लोकத்தை யிங்கு अनुसन्धिப்பது. ''स्वात्मानं मयि निक्षिपेत्'' என்று अङ्गि विधि वाक्यத்திலே स्वरूपसमर्पण मात्रं शब्दतः प्रतिपन्नமாயிருக்க भरफल समर्पणங்களுமங்கு विवक्षितங்களென்னும் போது अध्याहारादि दोषமாதல் आत्मशब्दத்துக்கு लक्षणा दोषமாதல் प्रसङ्गியாதோ? வென்னவிங்கு...

---

(सा.प्र) ''मयि निक्षिप्तकर्तव्यः कृतकृत्यो भविष्यति'' इत्याद्युक्त स्वनिर्भरत्वरूपफलेन विशेषयति...

---

(सा.वि) जन्यायां प्रीतावेकविधत्वमेव न तारतम्यमिति भावः । अचेतनेनेव चेतनेनापि स्वामिनः फलित्वमस्तीति फलित्वसद्भावे न चेतनदृष्टान्तः - नत्ववान्तरफलित्वाभावे - अतश्शुकस्येव जीवस्यावान्तरफलित्वे न विरोधः - अतः फलत्यागो नाम फले स्वप्राधान्यत्याग इत्यविरुद्धम् । ननु भगवतः प्रधानफलित्वे शास्त्रफलं प्रयोक्तरीति न्याय विरोधः । किञ्च शुकादीनां तिर्यक्तया विशदज्ञाना भावेन स्वाम्यतिशयाधानार्थं स्वानिष्ट परिहारार्थं प्रवृत्त्य संभवात्. इह तु तत्संभवाद्दृष्टान्त दार्ष्टान्तिक योर्वैषम्यमिति चेन्न - पित्रादि प्रीत्युद्देशेन गयाश्राद्धाद्याचरणेषूद्देश्यता सम्बन्धेन प्रयोक्तृगतत्ववत् । ''दासभूतास्स्वतस्सर्वे ह्यात्मानः परमात्मानः'' इत्यादि प्रमाणाज्जीवस्य दासभूतत्वात् ''परगतातिशयाधानेच्छयो पादेयत्वमेव यस्य स्वरूपं सशेषः'' इति चेतनाचेतन साधारण शेषत्वस्य चेतननिष्ठत्वेन दासत्वमित्युच्यमानत्वाद्दासकृतातिशयस्य स्वामि फलरूपत्वादुद्देश्यता सम्बन्धेन स्वगतत्वाच्च न दोषः - किञ्चेत्यपि न दोषः । शुकादीनां विशद ज्ञानाभावेऽप्यवान्तरफलित्वे किमुत विशदज्ञानवतां स्वा म्यतिशयजनित प्रीत्यादि फलवत्वमस्तीति कैमुतिक न्यायेन फलवत्ता प्रतिपादनार्थमेव तद्दृष्टान्तोपादा- नात् - पतिव्रता गर्भवासादि दृष्टान्तसंभवाच्च - नन्वत्यन्त परतन्त्रश्शुकादिवदेव स्वानिष्ट निवृत्त्यर्थं न प्रवर्ते- तेति चेन्न - शुकादेस्वानिष्टाज्ञानेन प्रवृत्त्यभावेऽपि राजभृत्ये मलिने राज्ञा स्वसमीपागमनंप्रति निषिद्धे सति राजप्रसादाय स्वमालिन्य निवृत्ति प्रयत्नवदिह भगवदनुग्रहानुरोधेन प्रकृति संसर्ग विमोचनोपाय प्रवृत्ति संभवात्, अन्यथा मोक्षोपाय विधि शास्त्रानर्थक्य प्रसङ्गात्, भगवतो वैषम्यादि दोष प्रसङ्गाच्च, तिरश्चामपि स्वानिष्ट ज्ञाने तन्निवृत्त्युपाये प्रवृत्ति दर्शनाच्च - ननुसंसार दुःखपरिश्रान्तः स्ववेदना परिहारायैव तन्निवर्तनोपाये प्रवर्तत इति चेन्न । पामरस्य स्ववेदना निवृत्त्यर्थं प्रवृत्तिरिति सत्त्वेऽपि स्वरूपज्ञानवतः अनन्यार्ह भगवच्छेषभूतो ज्ञानानन्दादि स्वरूपो ज्ञानानन्दादिगुण कोऽहं स्वच्छन्दसकल विध कैङ्कर्य योग्योऽप्यनादि स्वाम्यभिमत विरुद्धा चरणेन कैङ्कर्य साम्राज्यमलभमानः - एतादृशकष्टां दशामनु भवामीति प्रतिसन्दधानस्य पत्न्यास्वैरिण्याः पत्या कारागृह निवेशनादि निर्बन्धं प्रापितायाः कदाचित्पुण्यवशेन पातिव्रत्यमहिमज्ञाने सति मया पत्यनुसारिणा...

**मू - ஆனபின்பு இங்கு, स्वनिर्भरत्वपर्यन्त रक्षकै कार्य्यभावनम् । त्यक्तरक्षाफलस्वाम्यं...**

(सा.दी) परसम्बन्धविधानस्वनिर्भरत्वपर्यन्तமாயிருக்குமென்று निगमिக்கிறார். ஆன பின்பு इत्यादि. प्रधानफलित्वं அவனதான பின்பு. रक्ष्यனுடைய आत्मरक्षाभर समर्पणं त्यक्तरक्षाफल स्वाम्यं, रक्षाफलयो: இது उपलक्षणं स्वरूपத்துக்கு. स्वरूप रक्षा फलங்களில் स्वस्वाम्यं त्यक्तं यस्मिन् तत् रक्षकैकार्य्य...

(सा.स्वा) स्वरूप समर्पणமே शाब्दமாயும், மற்றையிரண்டும் आर्थिकமாக வருகையாலும் उक्तदोषமொன்றுமில்லையென்று காட்டா நின்று கொண்டு मुमुक्षुவுக்கு இவ்उपायத்தில் अङ्गि स्वरूपं दलत्रयात्मकமென்று இவ்வளவால் उपपादित्त अर्थத்தை उपसंहरिக்கிறார். ஆன பின்பு इत्यादिயால். ஆன பின்பு என்றது आत्मनिक्षेपமானது कृतिसाध्यமாம்படி मानस भावनारूपமாய் भरफल समर्पणங்களுங்கூட आत्मनिक्षेप शब्दार्थமாக प्रमाणान्तर सिद्धங்களாய் अकिञ्चनत्वமடியாக भरन्यासமும், मुमुक्षुत्वமடியாக स्वरूप फलन्यासமும், வர வேண்டியதாய் ईश्वरனுக்கு प्रधान फलित्वं கூடுகையாலே இவ்अधिकारिக்கு फलत्यागமும் उपपन्नமுமான பின்பென்றபடி. இங்கென்றது मुमुक्षुவான अधिकारि திறத்திலென்றபடி. இதுக்கு आत्मसर्मपण शब्दத்தோடே अन्वयम् । स्वनिर्भरत्वेति । आत्म समर्पणं त्यक्त रक्षाफलस्वाम्यं रक्ष्यस्य स्वनिर्भरत्व पर्यन्त रक्षकैकार्य्य भावनमित्यन्वय: । स्वनिर्भरत्व...

(सा.प्र) ஆன பின்பு इति । स्वनिर्भरत्वेति । आत्मभरार्पणन्नामत्यक्त रक्षा फलस्वाम्यं, रक्ष्यस्य स्वनि र्भरत्व पर्यन्तरक्षकै कार्य्य भावन मित्यन्वय: स्वरक्षाफले स्वस्य स्वाम्यं त्यक्तं यथा भवति तथा रक्ष्यस्य, अकिञ्चनस्य। न विद्यते भरोयस्य स निर्भर: - तस्य भावो निर्भरत्वम् - स्वस्य निर्भरत्वम्। स्वनिर्भरत्वं...

(सा.वि) वर्तितव्यमिति ज्ञापयति। प्राप्त्यर्थं प्रायश्चित्त प्रवृत्तिवत् इह मोक्षोपाये प्रवृत्ति संभवात् परिशुद्धाया: पत्न्या: प्राप्ति: यथा पत्युरतिशयस्तथात्रापीत्यनवद्यम् । एवंभूत भरन्यासं ''मयि निक्षिप्त कर्तव्य: कृतकृत्यो भविष्यति'' इत्याद्युक्त स्वनिर्भरत्व फलेन विशिनष्टि । ஆன பின்பு इति ஆன பின்பு, प्रधान फलित्वं भगवत एवेति स्थिते सति । स्वनिर्भरत्वेति । ''तेन संरक्ष्यमाणस्य फले स्वाम्य वियुक्तता । केशवार्पण पर्यन्ता ह्यात्मनिक्षेप उच्यते'' इत्यादिषूक्त माम समर्पणं रक्षा च फलं च रक्षाफले तयोस्स्वाम्यं स्वामित्वं त्यक्तम् । स्वरूपस्याप्यत्रोप लक्षणं स्वरूपरक्षा भरफलानि...

(सा.सं) ஆன பின்பு इति - एवं फलसमर्पणानुबन्धि चोद्ये परिहृते सतीत्यर्थ: । अथ प्रार्थना नैर्भर्ययो रप्यङ्ग्यंशानु प्रवेशनेन पूर्व कारिकाद्वयनिष्कृष्ट निक्षेपत्रयमेवाङ्ग्यंश इति भ्रमनिवर्तनायाहं मद्रक्षणभर इत्युक्त विधया शेषिயாய் इत्यादि भाविக்கை इत्यन्तेनोक्तमेव शेषत्वानु सन्धान विशेषात्मक समर्पणं भक्ति निर्वृत्ति प्रतिबन्धक पापनिवर्तक पवित्रेष्ट्यादि स्थानानुष्ठेय भर समर्पणादपि विलक्षणमिति सूच नाय बुद्धि सौकर्याय च कृत्स्नमप्यङ्गच्यंशं सङ्गृह्णाति । இங்கு स्वनिर्भरत्वेति । இங்கு, अत्यन्ता किञ्चनेषु मध्ये । रक्ष्यस्य, उपायान्तरस्थाने स्थित्वा रक्षितुं योग्यस्य । उपायत्वप्रार्थनावत्येव एवं स्थित्वा रक्षण मिति रक्ष्यस्य इत्यनेनोपायत्व प्रार्थनारूपाङ्गच्यंशवत इति फलितम् । स्वनिर्भरत्व पर्यन्तेत्यनेन किञ्चिदंशेन ...

मू - रक्ष्यस्यात्म (भरार्पणम्) समर्पणम्।

(सा.दी) भावनम्। रक्षकस्य, भगवतः - ऐकार्थ्यम्, तस्यैकस्यैव इमे स्वरूप रक्षाभर फलरूपा अर्थाः - नान्यस्य शेषाभूता इति भावना। एतावन्मात्रத்தாலும் போதாது. அந்த आत्मभरार्पणं स्वनिर्भरत्व...

(सा.स्वा) पर्यन्तं च तद्रक्षकैकार्थ्यभावनं चेति कर्मधारयः। रक्ष्यस्य रक्षकैकार्थ्यभावनமாவது, रक्ष्यனான தன் स्वरूपं रक्षकனான அவனொருவனுக்கே, தனக்கன்றென்று भाविக்கை. இத்தால் स्वरूपस्य स्वसम्बन्ध त्यागமும் परसम्बन्धமும் சொன்னபடி. ऐकार्थ्यभावनமென்கிறவித்தாலே, தானே फलस्य परसम्बन्ध भावनமும் अर्थादुक्तமாயிற்று. இந்த फलத்துக்கு स्वसम्बन्धत्याग भावनं त्यक्त रक्षाफल स्वाम्यமென்கிற विशेषणத்தாலே சொல்லிற்று. समर्पणीयனையும் तत्प्रतिसम्बन्धिயான शेषिயையுமிங்கு रक्ष्यरक्षकभावेन निर्देशिத்தவித்தாலே "यत्संरक्ष्यतयार्प्यते" என்கிற விடத்திற் போலே இந்த भावनத்துக்கு भरसमर्पणगर्भत्वं சொல்லிற்றாகிறது. अन्यथा இங்கு रक्ष्यरक्षकभाव निर्देशं निष्प्रयोजनமாமிறே. இங்கு भरத்துக்கு स्वसम्बन्धत्याग भावनं स्वनिर्भरत्व पर्यन्तமென்கிற विशेषणத்தாலே சொல்லிற்று. இந்த रक्षकैकार्थ्य भावनं भरसमर्पणगर्भமென்னு மிடம் இங்கு पर्यन्त शब्दத்தாலும் उत्तम्भितமாகிறது. ऐकार्थ्यभावनமென்றிங்கு स्वरूप समर्पणத்தை शब्दतः प्रधानமாக...

(सा.प्र) स्वनिर्भरत्व पर्यन्तं फलं यस्य भावनस्य तत्स्वनिर्भरत्व पर्यन्तम्। कर्मणां फल विनाश्यत्वात्फलस्यान्ततया अन्तशब्दपर्यायपर्यन्त शब्दः फलपरः। रक्षकैकार्थ्यं, रक्षकैकशेषत्वं एकशब्दोऽवधारणे - तथा भावनं तथानुसन्धानम् - एवं चाकिञ्चनस्य स्वस्य नैर्भर्यं यथा फले तथा स्वरक्षण फले नाहं स्वामीत्यनु सन्धानरूपस्वाम्यत्यागविशिष्टं स्वस्य स्वरक्षण भरस्य च सर्वरक्षक...

(सा.वि) न ममेत्यनुसन्धानं यस्मिन् तत्तथोक्तं - स्वनिर्भरत्वपर्यन्तम्। इतः परं मम रक्षायां भरो नास्तीतियथा दृढाध्यवसायस्तिष्ठेत्तथा कृतं रक्षकैकार्थभावनं रक्षकस्यैकस्यैव इमे अर्था स्वरूप रक्षाभरफलरूपा इति भावनमनुसन्धानमित्यर्थः - अत्र प्राप्ताप्राप्त विवेकेन त्यक्त रक्षा फलस्वाम्यं रक्षकैकार्थभावनमुद्दिश्य स्वनिर्भरत्व पर्यन्त विधाने तात्पर्यं बोध्यम्। अत एव पूर्वं "इतः पश्चादस्माद्यतननिरपेक्षेण भवता" इत्याद्युक्तम् - केचित्तु रक्षायाः फलं रक्षाफलम्। तस्य स्वाम्यं त्यक्तं यस्मिन्निति फले स्वसम्बन्धनिषेधः। स्वनिर्भरत्वपर्यन्तेत्यत्र रक्षा भरस्वाम्य त्यागः। स्वरूपे स्वाम्यत्यागस्त्वार्थिकः। रक्षकैकार्थ भावनमित्यत्र स्वरूपभर फलानां...

(सा.सं) निर्भरत्वत्पवित्रेष्ट्यादि स्थानानुष्ठेयाद्वैलक्षण्यमुक्तम्। इह स्वनिर्भरत्वन्नाम स्वस्य रक्षायां लेशतो भरो नास्तीत्यध्यवसायः। तत्पर्यन्तत्वं, तच्छिरस्कृत्वम्। एवं च नैर्भर्यस्याप्यङ्गिकोट्यन्वय उक्तो भवति। त्यक्तरक्षाफलस्वाम्यं रक्षकैकार्थ भावनमित्यन्वयः। स्वाम्यत्याग पूर्वक रक्षकैकार्थ्यभावन मित्यर्थः। अत्र आत्मरक्षा फल शब्दाः भावनाविषय समर्पकाः। अहं मद्रक्षणभरो मद्रक्षणफलं च न मम, किन्तु श्रीपतेरेवेति, स्वाम्यत्याग पूर्वक रक्षकैकार्थ्य भावन निष्कर्षः। श्रियः पतिः स्वातिशयायैव हि मां मद्रक्षणभरं मद्रक्षणफलं चाद्य उपादत्ते। अतस्स्वरूपत एव...

**मू - स्तोत्रத்தில். ''वपुरादिषु योऽपि कोऽपिवा गुणतो सानियथा तथा विधः। तदयं तवपाद**

(सा.दी) पर्यन्तமாக வேணும். परमाचार्यர் वपुरादिषुயென்கிற श्लोकத்திலே आत्मसमर्पणं प्रपत्ति शास्त्रार्थமாக அருளிச் செய்திருக்க भरन्यास प्रधान शेषत्वानुसन्धानं शास्त्रार्थமாம்படி எங்ஙனே என்று शङ्कैயை...

(सा.स्वा) निर्देशिத்தவித்தால் अङ्गिविधि वाक्यத்திலிதுவே शाब्दम्। इतरங்கள் आर्थिकங்க ளென்றதாகையாலங்கு लक्षणा दोषादि प्रसक्तिயில்லை என்று காட்டித்தாயிற்று. இங்கு சில कोशங்களில் रक्ष्यस्यात्मभरार्पणமென்று पाठமிருந்தாலும் இஶ்श्लोकத்தில் रक्ष्यरक्षक शब्द वैयर्थ्यादिदोषं வருகையாலும் पूर्वपर ग्रन्थ सन्दर्भं சேராமையாலும் அந்த पाठमनु पादेयम्। रक्ष्यस्यात्म समर्पणமென்கிற पाठமே उपादेयம். प्राचीन कोशங்களிலேயிப்படியே காண்கை யாலும் சிலரிப்படி व्याख्यानं பண்ணுகையாலும் निक्षेपरक्षैயிலேயிப்படி पठित्तுமிருக்கை யாலும் स्ववाक्यस्थ पदங்கள் औचित्यादिகளாலுமிந்த पाठமே युक्तமிறே. இப்படியிவ்अङ्गि स्वरूपத்தில் समर्पणं स्वस्य अप्रधान फलित्वात्यन्त पारतन्त्र्यतदेकरक्ष्यत्वाद्याकारानु सन्धानपूर्वकமாக अनुष्ठेयமென்னில் स्वरूपस्वभावज्ञानமொன்றுமில்லாதபடி. तत्त्ववित्தன்றிக்கேயிருக்குமவ னுக்கே இஸ்समर्पणं कर्तव्यமென்று காட்டுகிற पूर्वाचार्य वाक्यं विरोधिயாதோ? என்கிற अभिप्रायத்தாலே शङ्किக்கிறார். स्तोत्रத்தில் इत्यादिயால். அந்த पूर्वाचार्यवाक्यं तत्त्ववित्...

(सा.प्र) भगवच्छेषत्वानुसन्धानं आत्मभरार्पणमित्यर्थः। नन्वियता प्रबन्धेनस्व स्वरूप ज्ञानवता तत्प्राप्ति साधन भक्ति योगाद्य शक्तेन स्वाकिञ्चन्य पुरस्कार पूर्वकं भरन्यासः कार्य इत्युक्तं भवति - इदञ्च स्वस्वरूपज्ञाना भावेऽपि भरन्यास कर्तव्यताबोधकेन सम्प्रदाय प्रवर्तक वाक्येन विरूध्येतेत्यत्र चिदचिदीश्वर विवेक शक्तानां स्वोक्त प्रकारेणानुष्ठेयत्वेऽपि स्वरूपस्य विविच्य ज्ञानाशक्तेन आत्मस्व रूपस्य सामान्यतो ज्ञानेऽपि भरन्यासस्य कर्तव्यतापरं तदिति दर्शयंस्तस्यापि फलाविनाभावं सोदाहरण माह - स्तोत्रத்தில் इत्यादिना...

(सा.वि) परसम्बन्धवेदनं ''अहं मद्रक्षणभरो मद्रक्षणफलं तथा। न मम श्रीपतेरेवेत्यात्मानं निक्षिपेद्बुधः'' इत्युक्तत्वादिहापि पूर्वं तथैवोक्तत्वात्। पूर्वोक्तस्यैवेदं निष्कृष्य कथनमात्रमिति व्याच क्षते। नन्वेतावता स्वरूपज्ञानवतो भरन्यासः कर्तव्य इत्युक्तम्। तत्त्वरूपज्ञानाभावेऽपि भरन्यासः कर्तव्य इत्येवं परया वपुरादिषु योऽपि कोऽपि वेति यामुनाचार्य श्रीसूक्त्या विरुध्यत इत्याशङ्कायां विविच्य ज्ञानवतां यथोक्तप्रकारेणानुष्ठेयत्वेऽपि विविच्यात्मस्वरूपज्ञानाशक्तेनापि सामान्यतः कश्चिदा त्मास्तीति ज्ञानमात्रेणापि भरन्यासः कर्तव्य एव। सोऽपि फलाविनाभूत एवेत्यत्र यामुनाचार्य श्री सूक्तेस्तात्पर्यमित्यभिप्रेत्य सदृष्टान्तमाह - स्तोत्रத்திலும் इति...

(सा.सं) तच्छेष भूतानां तेषामेतावन्तं कालं स्वशेषत्वभ्रमविषयाणां तद्भ्रमनिवृत्तिपूर्वकं श्रीपतेरेव शेषत्व भावनं - प्रार्थना नैर्भर्याभ्यां सन्दष्टमेव सदखण्डाङ्गित्वपर्याप्त्यधिकरणमात्मभरार्पणमिति व्यवह्रियते इति कारिकार्थः नन्वेतदधिकारादौ यथावस्थितமான आत्मनिक्षेपमित्यात्मनिक्षेपोङ्गितयोक्तः - स च निक्षेप्तव्यात्मयाथात्म्याध्यवसाय पूर्वक इति हृदयम् - तदा वपुरादिष्विति यामुनाचार्योक्ति विरोध इति शङ्कां तत्तात्पर्योक्त्या परिहरति। स्तोत्रத்தில் इत्यादिना।...

**मू - पद्मयोरहमद्यैव मया समर्पितः''** என்கிறதுக்கு **तात्पर्य**மென்னென்றில். **मुद्रै**யிட்டிருக் கிற **राजा**வின் கிழிச்சீரை ஒரு **हेतु**வாலே தன் கையிலேயிருந்தால் **राजा** கைக்கொள்ளு மெ(ம)ன்று உள்ளிருக்கிற மாணிக்கத்தின் **स्वरूपस्वभाव**ங்களை **विशद**மாகவறியாதே கிழிச் சீரையோடேமீளக் கொடுக்குமாப் போலே **देहाद्यतिरिक्तात्मा**வின் **स्वरूपस्वभाव स्थिति**களை **विशद**மாக **विवेकि**க்கவறியாதார், உள்ளவறிவைக் கொண்டு **आत्म समर्पणं** பண்ணினால் அவ்வளவாலும் **अनादिकालं** பண்ணின **आत्मापहारचौर्य**த்தாலுண்டான **भगवन्निग्रहं शमि**க்கு மென்கிற **शास्त्रार्थ**த்திலே திருவுள்ளம்.

---

(सा.दी) अनुवदिக்கிறார். आत्मस्वरूपத்திலுள்ளவறிவைக் கொண்டு प्रपत्ति பண்ணினாலும் குறையில்லையென்கிற...

---

(सा.स्वा) அல்லாதவனுக்கே இஸ்समर्पणं कर्तव्यமென்று காட்ட வந்ததன்று. किन्तु स्वरूपादिषु विशदज्ञानமில்லாவிட்டாலும் தனக்கப்போதுள்ள ज्ञानमात्रத்தைக் கொண்டு பண்ணின आत्म समर्पणமும் कार्यकरமாமென்று ஒரு शास्त्रं உண்டென்றிவ்வளவே காட்ட வந்ததென்கிற अभिप्रायத்தாலே परिहरिக்கிறார். मुद्रै इत्यादिயால். देहादीत्यादि पदमिन्द्रियमनः प्राणादिसङ्ग्राह कम् । स्वरूपस्थितिகள் - अणुत्व ज्ञानत्वानन्दत्वामलत्वादिகள். स्वभावस्थितिகள். अप्रधान फलित्वात यन्त पारतन्त्र्यतदेकरक्ष्यत्वादिகள். विशदेति - वपुरादिषु என்கிற श्लोकத்தில் पूर्वार्धं स्वरूपस्व भावस्थितिषु विशदविवेकाभाव मात्रपरமென்றதாயிற்று. शास्त्रेति, ''योऽहमस्मि स सन्त्यजे । यस्यास्मि न त मन्तरे मी'त्यादिயாக स्वरूप स्वभावங்களில் वैशद्याभावेऽपि सामान्यतस्तदनुसन्धान पूर्वकமாக शेषत्वानुसन्धानத்தை अनुष्ठेयமாகக் காட்டுகிற शास्त्रங்கள் இங்கு अभिप्रेतங்கள். लोकத் தில் समर्पणीयवस्तुவை यथावस्थितமாகக் காட்டி ஒப்பியாத போதுடையவன் ஒப்புக் கொள்ளக் காணாமையாலிங்குமப்படியாகாதோவென்று शङ्किயாமைக்காக मुद्रै इत्यादि दृष्टा न्तोक्तिः । लोकத்திலும் मुद्रैயிட்டிருக்கிற विषयத்தில் அந்த नियमங் காணாமையால் उक्तशङ्काव काशமில்லையென்று கருத்து. இப்படி विशद...

---

(सा.प्र) கிழிச்சீரை, रत्नभरिताभस्त्रिका । கைக்கொள்ளுமன்று, स्वीकारवेलायाम् । ननु ''तमेवंविद्वान्...

---

(सा.वि) मुद्रैயிட்டுக் கிடக்கிற, राजमुद्रां निवेश्यस्थापिता । ராஜாவின் राज्ञः கிழிச்சீரை, रत्नभरिताभस्त्रिका । தன் கையிலேயிருந்தால், केनचिद्धेतुना स्वहस्तेस्थिता चेत् । இந்த राजा கைக்கொள்ளுமென்று, अयं राजा स्वीकुर्यादिति । உள்ளிருக்கிற, अन्तस्स्थितस्य । माणिक्यத்தின், माणिक्यस्य । அறியாதே, अज्ञात्वैव - கிழிச்சீரையோடு, भस्त्रिकया सह - மீள, पुनः । கொடுக் குமாப் போலே, यथा समर्पयति तथा । विवेकिக்க அறியாத்தாலும், विवेक्तुमज्ञानेऽपि । உள்ள வறிவைக் கொண்டே, உள்ள विद्यमानम् । அறிவை ज्ञानम् । கொண்டே...

---

(सा.सं) वपुरादिषु स्वरूपतः जडत्वाजडत्वादिगुणतश्च कश्चित्स्याम् । आत्मस्वरूपतत्प्रकारादिपरिज्ञाने मम शक्तिर्नास्ति प्रमाणसिद्धाहमर्थस्य सारभूते तच्छेषत्वे मम निर्बन्धः - शास्त्रेषु त्वच्छेषत्वेन प्रसिद्धस्सन् योऽहमिति भासमानस्सोऽद्यैव मया समर्पित इति समर्पणेऽप्यनाद्यात्मापहारचौर्यागतो भगवन्निग्रहश्शान्तो भवतीत्येव तत्तात्पर्यमिति सोदाहरणं दर्शयति - मुद्रै इति - हेतुவாலே, चौर्यादिना - आत्मनस्स्वरूपं ज्ञानत्वादि । स्वभावः, ज्ञानानन्दाद...

(सा.दी) இத்தனையே श्लोकतात्पर्यம் स्वकीयत्वस्वकर्तृत्वानु सन्धानपूर्वक परस्वत्वापादनமாகிற समर्पणத்தில் तात्पर्यமில்லையென்று கருத்து. समर्पणं विवक्षितமன்றாகில் மேல் श्लोकத்தில் समर्पणத்தை...

(सा.स्वा) विवेकपूर्वकமாதல் உள்ள அறிவைக் கொண்டாதல் समर्पणं பண்ணுகை शास्त्रीय மாகில் समर्पणं तत्त्वविदां न कर्तव्यமென்ற अनुशयमुखத்தாலே காட்டுகிற उत्तर श्लोकं विरोधि யாதோ? என்னவருளிச்...

(सा.प्र) अमृत इह भवति। नान्यः पन्था अपनाय विद्यते। नाहं वेदैर्न तपसा। भक्त्यात्वनन्यया शक्यः। क्लेशानां च क्षयकरं योगादन्यं न विद्यते ''इत्यादि श्रुतिस्मृति निषेधात्। शठकोपैश्च'' என தாவி தந்தொழிந்தேன் ''इत्यत्र भरन्यासानुष्ठाने निषिद्धानुष्ठान इव अनुशयितमितिपूर्वाचार्यैर्व्याख्यातत्वा द्यामुनाचार्यैश्च ''वपुरादिषु'' इत्यत्र कृतस्यात्मसमर्पणस्य ''मम नाथे'' इत्यनेनानुशयितत्वाल्लोका-चार्यैश्च "அடவிலே கொடுக்கில் अनुपायமாம். அடவுகெடக் கொடுக்கில் களவு வெளிப் படும்" इत्यत्र सम्यक्ज्ञानपूर्वक समर्पणे परकीयस्य तस्मै दानवदुपायत्वं न स्यात्। शास्त्रोक्तातिक्रमेण स्वीयतयाध्यवस्य समर्पणे आत्मापहारचौर्यं स्पष्टं स्यादित्युक्तत्वाच्च भक्तियोगव्यतिरिक्त मोक्षोपाया-सिद्धेर्भरन्यासे मोक्षश्रवणं ''अङ्गेषु फलश्रुतिरर्थवाद'' इति न्यायादङ्गप्रपत्तिविषयमित्यत्र ''नान्यः पन्थाः। नाहं वेदैः। योगादन्यं न विद्यते'' इत्यादि निषेधानां ''मुमुक्षुर्वै शरणमहं प्रपद्ये। न्यास इत्याहुः'' इत्यारभ्य ''ओमित्यात्मानं युञ्जीत। ब्रह्मणो महिमानमाप्नोति। ग्रसेत्संहारसमये जगच्च बदराण्डवत्। लीलया यस्तु भगवांस्तं गच्छ शरणं हरिम्। शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिताः। तेऽपि मृत्युमति- क्रम्य यान्ति तद्वैष्णवं पदम्। अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षिपेत्। मां प्रपन्नो विमुच्यते। मामेकं शरणं व्रज। गच्छध्वमेनं शरणम्। यद्येनकामकामेन न साध्यं साधनान्तरैः। तेन तेनाप्य तेतत्तन्यासेनैव'' इत्यादिभिर्भक्तिव्यतिरेकेणैव मोक्षसाधनतया विहित भरन्यासव्यतिरिक्त विषयत्वा दन्यथा दहरादि विद्यास्वेक विद्यापरिशेष प्रसङ्गात्। எனதாவி इत्यस्य व्याख्याने भ्रान्ति समयத்தில் समर्पिக்கவும் வேணும் इत्यस्यात्म समर्पणं பண்ணாவிடில் सर्वमोक्षं प्रसङ्गिக்கும் इति पूर्ववाक्याविरोधाय विविच्य स्वरूपज्ञानाभावेऽपि ''दुर्लभो मानुषो देहः देहिनां क्षणभङ्गुर'' इत्युक्त प्रकारेण शरीरस्यानित्यत्वादात्म समर्पणस्य कर्तव्यताज्ञानानन्तरक्षण एवतदनुष्ठेयत्व बोधन परत्वस्या वश्य वक्तव्यत्वात्...

(सा.वि) ग्रहीत्वैव। विद्यमानज्ञान मात्रेण। அவ்வளவாலும், तद्रीत्यापि। नन्वात्म समर्पणं नोपपद्यते। लोकाचार्यैस्संयक् ज्ञानपूर्वकं समर्पणे परकीयस्य परस्मै दानवदुपायत्वं न स्यात्। शास्त्रातिक्रमेण स्वीय तयाध्यवस्य समर्पणेत्वात्मापहारचौर्यं स्पष्टं स्यादित्युक्तत्वादत एव मम नाथेति श्लोके यामुनाचार्यैः ''अथवा किं नु समर्पयामि ते'' इति कृते समर्पणेऽनुशयः कृत इत्याशङ्क्य भरन्यासस्य स्वरूप फलत्याग विशिष्टस्य विधिबल प्राप्तत्वेन पूर्वमेवोक्तत्वाल्लोका चार्योक्तेः भरन्यासा प्राधान्यज्ञापनपूर्वकं भगवतः प्राधान्येनोपायत्व ज्ञापनपरत्वा...

(सा.सं) यो गुणाः स्थितिः, नित्यता। ननु मम नाथेत्यादिना यामुनाचार्यैस्स्वकृतसमर्पणं प्रतिपश्चात्...

**मू - இதற்கு மேல் ''मम नाथ यदस्ति'' என்கிற श्लोकத்தில் समर्पणத்தைப் பற்ற अनुशयं பண்ணிற்றும் स्वरूपादिविवेकமன்றிக்கே समर्पिக்கப் புக்காலும் தன்னுடைய द्रव्यத்தை राजाவுக்கு उपहारமாகக் கொடுப்பாரைப் போலே என்னது என்கிற अभिमानத்தோடே समर्पिக்கில் आत्मापहारचौर्यமடியற்றதாகாதென்கைக்காக அத்தனை —**

---

(सा.दी) ப்பற்ற अनुशयिக்கக் கூடுமோவென்னவருளிச் செய்கிறார். இதுக்கு மேல் मम नाथेत्यादिயால். இவ்விரண்டு...

---

(सा.स्वा) செய்கிறார். இதுக்கு மேல் इत्यादि. மற்ற विवेकமில்லாதே समर्पिத்தால் அது कार्यकर மானாலும் அவனதை அவனுக்கு समर्पिக்கிறேன் என்கிற विवेकமில்லாதே ஸமர்ப்பித்தால் அது कार्यकरமாகாதென்றிவ்வளவிலே तत्परं அத்தனைப் போக்கி அந்த श्लोकं समर्पणं तत्त्वविदां न कर्तव्यமென்கிற अर्थத்திலே तत्परமன்று என்றபடி. अपहृत द्रव्यத்தை द्रव्यस्वामिக்கு यथाकथञ्चित्समर्पिத்தாலும் चौर्यं போனதன்றோவென்று शङ्कि யாமைக்காக அடியத்ததாகாது इत्युक्तिः - पूर्वमपि न मदीयमिदமென்று தெளியாதபோது पूर्वமிது मदीयமாயிருந்ததென்கிற बुद्धि समर्पणात् पश्चादप्यनुवर्तिக்கத் தக்கதாகையால் चौर्यं समूलமாகப்போனதன்று என்றபடி. पूर्वमपि न ममेदமென்றிப்படி தன்னோடு सम्बन्धத்தையறுத்தாலன்றோ चौर्यமடியத் தாமென்று கருத்து. இப் श्लोकத்துக்கு இப்படியே तात्पर्यங் கொள்ள வேணுமென்று निर्बन्धமுண்டோ? समर्पणं तत्त्वविदां न कर्तव्यமென்று காட்டுகையிலே तात्पर्यமாகலாதோ? என்னவருளிச்...

---

(सा.प्र) தெளிந்தால் கொடுத்தோமென்று இருக்கக் கடவனல்லன்'' इत्यस्य ''मम नाथे'' त्यस्य च विशिष्य स्वरूपज्ञाने तदभावे च अनुष्ठीयमानभरन्यासे स्वाधीन कर्तृत्व स्वार्थ कर्तृत्व रूपाहङ्कार ममकार राहित्यज्ञापन परत्वाल्लोकाचार्योक्तेश्च भरन्यासा प्राधान्यज्ञापनपूर्वकं भगवतः प्राधान्येनोपाय त्वज्ञापन परत्वाच्च भक्तियोगवद्भरन्यासस्यापि साक्षात्सर्वपाप निवर्तकत्वभगवत्प्रसादनत्वमस्त्येवेति नार्थवादतेत्यभिप्रेत्याह । இதுக்கு மேல் इति. एवं च स्वस्वरूपं संयक्ज्ञात्वा भरन्यासः कार्यः । तथा ज्ञातुमशक्यत्वेऽपि लब्ध मात्रेणापि ज्ञानेनाहङ्कारममकारत्याग...

---

(सा.वि) त्तदीय द्रव्यस्य तस्मै समर्पणेऽप्युपायत्वस्य अपहृतद्रव्यप्रत्यर्पणादौ दर्शितत्वात् । मम नाथेत्य त्रानुशयस्य स्वाधीनकर्तृत्वस्वार्थ कर्तृत्वरूपाहङ्कार ममकार राहित्यज्ञापन परत्वेन विरोधाभावात्स्वरूप फलविशिष्ट भरसमर्पण मुपपद्यत एवेत्यभिप्रेत्याह - இதுக்கு மேல் इति । अनुशयं பண்ணித்தும், अनुशयकरणमपि । என்னதென்றிருக்கிற अभिमानத்தோடே, मदीय इति स्थिताभिमानेन ममता त्यागाभावे सतीति भावः । அடியற்றதாகாது, चौर्यं समूलं न विनश्यति । என்னது...

---

(सा.सं) अनुशयकरणादात्म समर्पणं शास्त्रार्थतया नानुष्ठेयमिति शङ्कामपि तत्तात्पर्योक्त्या परिहरति - இதுக்கு மேல் इत्यादिना - अनुशयः, शास्त्रीये अज्ञकृत्यत्व भावनं न । किन्त्वशास्त्रीये अस्वारस्य-मेव । स्वीयमिति समर्पणयोग्यमस्तिचेल्लोकरीत्या समर्पणं स्यात् । न च तथा - इह तथाविध समर्पणेनात्मापहार चौर्यानुन्मूलनात् । किन्त्विहसमर्पणं तवैव नियतस्वमिति तस्मान्न लोकरीत्या समर्पणमिति मन्वीथा इति तात्पर्यम् - श्लोकद्वयेनाप्यनुष्ठेय शरीरे शिक्षितमर्थमाह...

**मू** - அல்லது **शास्त्रचोदित**மாய்த் தாம் **अनुष्ठित्त समर्पण**த்தை **अज्ञकृत्य**மாக்கினபடியன்று - ஆக இரண்டு **श्लोक**த்தாலும் **यथावस्थित स्वरूपादि विवेक**மில்லையேயாகிலும், **नमः** என்று **स्वसम्बन्ध** மறுக்கையே **"अह मपि तवैवास्मि हि भरः"** என்னும்படி **भरसमर्पण प्रधान**மான **शास्त्रार्थ**த்தில் **सार**மென்றதாயிற்று.

(सा.दी) श्लोकத்தாலும் फलित्त अर्थத்தைக் காட்டுகிறார். ஆக इति । शास्त्रार्थं शेषशेषि भाव सम्बन्धानुसन्धानम् - அது இத்दशैயில் भरसमर्पण प्रधानமாயிருக்கும். இவ்अर्थத்தில் सम्मति காட்டுகிறார். अहमपि तवैवास्मि हि भरः என்று. शेषत्वानु सन्धान विशिष्टस्वरक्षाभर समर्पणத்தை द्वयத்தில் अनुसन्धिக்கும்...

(सा.स्वा) செய்கிறார். அல்லது इत्यादि. அப்படியாகில் तत्त्ववित्துக்கே समर्पणத்தை विधिக் கிற शास्त्रங்களும் पूर्वश्लोकத்திலே मया समर्पितः என்று இஸ்समर्पणத்தை तत्त्वविदग्रेसरரான தாம் अनुष्ठिக்கையும் विरोधिக்குமென்று கருத்து. இந்த श्लोकங்கள் तत्त्ववित्துக்கு समर्पणं न कर्तव्यமென்றும் तदितरस्यैव कर्तव्यமென்றும் சொல்ல வந்ததன்றிக்கே भवदुक्तरीत्यासमर्पणத் திலேकिञ्चिद्विशेषमात्रं சொல்ல வந்ததாகில் समर्पणानुबन्धिகளான ज्ञातव्यविशेषங்கள் अनेकங் களிருக்கவித்தை मात्रமிங்கு विशेषिத்துச் சொல்லுகைக்கு प्रयोजनமுண்டோ? किञ्च இந்த श्लोकங்களிலே भरसमर्पणத்தைச் சொல்லாதே स्वरूप समर्पणमात्रं சொல்லுகையாலே இவ் வளவே प्रपत्ति स्वरूपமென்று निष्कृष्टமாக நிற்க, भरसमर्पणத்தையும்கூட अङ्गिயாக கீழ்ச் சொன்னது सम्प्रप्रदायविरुद्धமாகாதோ? வென்னவருளிச் செய்கிறார். ஆக இரண்டு इत्यादि. ஆக வென்றது இஶ்श्लोकங்களிரண்டுக்கும் त्वदुक्त प्रकारமாகவன்றிக்கே अस्मदुक्त प्रकार மாகவே तात्पर्यं युक्तமாக நிற்க என்றபடி. सारमिति । सारत्वख्यापनமித்தையிங்கு विशेषिத்துச் சொன்னதுக்கு प्रयोजनமென்று கருத்து. स्वसम्बन्धமறுக்கையே என்கிறவிடத்திலே अवधारणத் தால் समर्पणத்தில் ज्ञातव्यங்களாகவுள்ள மற்ற विशेषங்களிப்படி सारங்களன்றென்றதாகிறது. மற்ற विशेषங்களிப்படி सारங்களன்றென்னுமிடம் पूर्वश्लोकத்திலே विवक्षित மென்று ज्ञापिக் கைக் காக यथावस्थितेत्यादिயாலே அந்த श्लोकத்தின் तात्पर्यार्थத்தை अनुवदिத் தது. अहमपीत्यादि - இந்த श्लोकद्वयத்திலே भरसमर्पणं कण्ठोक्तமல்லாவிட்டாலும் மேலே भरसमर्पणத்தை ஆள வந்தார் தாமே कण्ठरवेण அருளிச்செய்கையால் இங்கு सम्प्रदाय विरोधचोद्यத்துக்கும் अवकाश...

(सा.प्र) पूर्वकं भरन्यासः कार्य इत्युक्तं भवति । एवंभूतस्य साङ्गभरन्यासस्य द्वये प्रतिपादकभागं...

(सा.वि) க்காகவத்தனை एतदर्थमेव । அல்லது, एवं तात्पर्यं विना । अज्ञकृत्यமாக்கினபடியன்று, पूर्वसमर्पणमज्ञानेन कृतवानस्मीत्यर्थ एवेत्यस्य तात्पर्यं न भवतीत्यर्थः । शास्त्रचोदितமாய் इत्यनेन विहितार्थे मीमांसा शास्त्रयुग्मश्रमविमलमनसस्संशयो न जायत इति सूचितम् - தாம் अनुष्ठित्त इत्यनेन कृतेऽनुशयश्चेत्पूर्वमप्येवं विदुषः करणमेव न स्यात् । न हि पूर्वश्लोकोक्तिदशायामज्ञानं उत्तरश्लोकोक्ति दशायां ज्ञानमिति सुधीभिर्वक्तुं शक्यमिति सूचितम् । तस्माद्यथोक्तमेव तात्पर्यमिति भावः - श्लोकद्वये फलितमर्थमाह - இரண்டு इति । शास्त्रार्थத்தில், शेषशेषिभाव सम्बन्धानुसन्धाने शेषशेषिभावानु सन्धानगर्भ भरन्यासासरूप प्रपत्ति शास्त्रार्थे । स्वसम्बन्धनिवृत्तिस्सार...

(सा.सं) ஆக इति - அறுக்கை इति - स्वरूपभरफलेषु स्वाम्यरूप सम्बन्ध भ्रमपरिहरणमेवेत्यर्थः । शास्त्रार्थத்தில் इति । न हि शास्त्र विहितेऽनुशय उपपद्यत इति भावः । अयमङ्ग्यंशो मन्त्रे क्वानुसन्धेय ...

**मू - இப்படி शेषत्वानुसन्धानविशिष्टமான स्वरक्षाभर समर्पणं द्वयத்தில் उपायपरமான पूर्वखण्डத்தில் महाविश्वास पूर्वक गोप्तृत्ववरण गर्भமான —**

(सा.दी) स्थलத்தைக் காட்டுகிறார். இப்படி इत्यादि - शरणं प्रपद्ये என்கிற स्थलத்திலென்றபடி..

(सा.स्वा) மில்லையென்று கருத்து. இப்படி இஸ்समर्पणमङ्गिயாகில் उपायं द्वयத்தில் पूर्वखण्डத் திலே अनुसन्धेयம் என்று अर्थपञ्चकाधिकारத்தில் சொன்னது கூடாதொழியாதோ? समर्पणத் துக்கு अनुगुणமான चतुर्थिயும், स्वसम्बन्धத்தையறுக்கிற नमश्शब्दமும் उत्तरखण्डத்திலிருக்கை யாலே அங்கேயென்றோவிது अनुसन्धेयமாகத் தக்கது - पूर्वखण्डத்தில் क्रियापदத்தில் अनुसन्धेय மானால் महाविश्वासादिகளங்கு अनुसन्धेयங்களாகாதொழியாதோ? என்னவருளிச் செய்கி றார். இப்படி शेषत्वेत्यादि - இப்படியென்றது, भरन्यास प्रधानं प्रपत्ति शास्त्रार्थமென்று கீழ்ச் சொன்ன रीत्या என்றபடி. शेषत्वानु सन्धानेति सामान्योक्त्या फलस्यापि भगवच्छेषत्वानुसन्धानसिद्धेः फलसमर्पणमप्युक्तं भवति । विशिष्टமானவென்கிற सिद्धवदनुवादத்தாலே मुमुक्षुவுக்கு भरन्यासमात्म समर्पणத்தை விட்டுப் பிரியாததாயேயிருக்குமென்றிப்படி अविना भावं ज्ञापितமாகையா லத்தை अनुसन्धिக்கிறவிடத்திலேயிதுவுங் கூட வருமென்றதாகிறது. उपायपरमिति । उत्तर खण्डத்தில் चतुर्थ्यादिகளிருந்தாலும் அது फलपरமத்தனைபோக்கி उपायपरமல்லாமையால் उपायपरமான पूर्वखण्डத்திலே தானேயித்தை अनुसन्धिக்கை उचितமென்று கருத்து. महाविश्वास पूर्वक गोप्तृत्ववरणगर्भமென்றது हेतुगर्भविशेषणम् । भरन्यास अपेक्षकமான महाविश्वास पूर्वक गोप्तृत्ववरणமிங்கு தோற்றுகையால் तदाक्षेप्यமான भरन्यासமும் अत्रैवानु सन्धेयமாக வேணு மென்று கருத்து. अकिञ्चनனானவன் रक्षण समर्थனை महाविश्वासपूर्वकं தனக்கு रक्षकனாக வரிப் பது स्वेन समर्प्यमाणभरस्वीकरणार्थமாகையாலே அத்தாலே அது आक्षेप्यமாமிறே. गोप्तृत्ववरणं सर्वाधिकारि साधारणமாகையாலே तावन्मात्रं भरन्यासस्याक्षेपकமாக மாட்டாதென்கிற கருத் தாலே महाविश्वासपूर्वक...

(सा.प्र) दर्शयति । இப்படி शेषत्वेत्यादिना । नन्वेवमानुकूल्य सङ्कल्पादीनामङ्गानामङ्गिनो...

(सा.वि) आवश्यक इति तात्पर्यमिति भावः । शेषत्वानुसन्धानेति - ननु पूर्वं भरन्यास प्रधानமான शेषत्वानुसन्धानमित्युक्तम् । इह तु शेषत्वानुसन्धान विशिष्टமான स्वरक्षाभरसमर्पणमित्युच्यते । तत्कि मत्र विशेष्यमिति चेत् - पूर्वमपि भरन्यास प्रधानமான इत्युक्त्या भरन्यासस्यैव विशेष्यत्वमिति व्यञ्ज नाच्छेषत्वानु सन्धानस्यावश्यकत्वद्योतनाय तत्र तथोक्तिः - विश्वासपूर्वेति...

(सा.सं) इत्यत्राह இப்படி इत्यादि - महाविश्वास पूर्वकेति । विश्वासफल भूता याच्ना अर्थतः प्रमाणतश्च कर्तव्यतया सिद्धा । सा च गोप्तृत्ववरणगर्भा - एवं च गोप्तृत्ववरण गर्भयाच्नाफलको महाविश्वासः । प्रकृताधिकार्यपेक्षितबुद्धि विशेषत्वाच्छरण शब्दोपश्लिष्टज्ञान सामान्यवाचि क्रिया पदमुख्यार्थो यथा तथा समर्पणानामपि तथात्वात्तन्मुख्यार्थतैव प्रकृतादि कार्यपेक्षित बुद्धि विशेषत्वेन क्रोडीकृत्य समर्पणानां विश्वासस्य एकदैव क्रियापदेनाभिधानात् ।...

**मू - शरणशब्दोपश्लिष्ट क्रिया पदத்திலே சேர்த்து अनुसन्धिக்கை प्राप्तम्**

(सा.स्वा) त्वोक्तिः। महाविश्वासमुत्तरदशैயிலுங்கூட अनुवर्तिப்பதாகையால் तावन्मात्रமும் भरन्या साक्षेपकமாகமாட்டாதென்று கருத்து. शरण शब्देति। भरन्यासव्यञ्जकமான शरण शब्दं இங்கிருக்கையாலுமித்தை இங்கே अनुसन्धिக்கை उचितமென்று கருத்து. சேர்த்து என்றது महाविश्वासादिகளோடே சேர்த்தென்றபடி. இத்தையும் காட்டியிங்கு अनुसन्धिக்கையாகை யால் அவை இங்கு अनुसन्धेयங்களாகத் தட்டில்லையென்று கருத்து. இப்படி महाविश्वासादिக ளோடே சேர்த்து अनुसन्धेयமாகச் சொன்னது கூடுமோ? मन्त्रं सकृदेवोच्चार्यமாகிலன்றோ அந்த निर्बन्धं வேண்டுவது. இவற்றின் अनुष्ठानं क्रमिकமாகையாலே मन्त्रத்திலிவற்றின் अनुसन्धान மும் क्रमिकமாக வேண்டுகையாலே मन्त्रத்துக்கு आवृत्तिயே न्याय्यम्...

(सा.प्र) भरन्यासस्य प्रत्येकं तन्मन्त्रांशप्रतिपाद्यतयावगन्तव्यत्वे क्रमेणैव तत्सिद्धिरिति यथावगत्यनुष्ठाने चानेककालानुष्ठेयत्वापातात्। प्रपत्त्यध्याये ''भगवन् हितमाख्यातमात्मानं पततामधः। त्वत्प्रापकं महत्कर्मकारूण्य विवशातना। अधीता बहवोमन्त्राश्श्रीमदष्टाक्षरादिकाः। एभिः कर्मभिरीजानस्तान्मन्त्रान्सततं जपन्। त्वामाप्नोत्येव पुरुषः पुरुषं पुरुषोत्तम।एतान्यालोच्यमानानि कर्माणि करुणाकर। दुर्विज्ञेयस्वरूपाणि दुष्कराणि विभागशः। मन्त्रांश्चैकैकशस्तावज्ञप्यमानस्य माधव। उक्तेनैव तु मार्गेण गच्छत्यायुरपक्षयम्। तस्मात्सकृत्कृतेनैव कर्मणा येन मानवः। सकृज्जप्तेन मन्त्रेण कृतकृत्यस्सुखी भवेत्। तं ब्रूहि भगवन्मन्त्रं दयार्द्रहृदयोह्यसि'' इति प्रश्नोत्तरे ''सत्य मुक्तमशक्यानि कर्माणि कमलासन। मन्त्राणां च यथाशास्त्रमनुष्ठानं न शक्यते। विद्यते येन तत्कर्म कृतमात्रेण कर्मणा। मामाप्नोति नरो ब्रह्मन्ममात्मा च भविष्यति'' इत्यत्रोक्तात्यल्पकालानुष्ठेयतया विशेषो न स्यात्। ''सकृदेव प्रपन्नस्य कृत्यं नैवान्यदिष्यते। सकृदेव हि शास्त्रार्थः कृतोऽयं तारयेन्नरम्'' इत्याद्युक्तं सकृत्वं च न घटेत। युगपद्विधाना भावेन द्वयविहिताङ्गिनस्सकृत्व प्राप्तावपि प्रयाजादिष्वेकादश प्रयाजान्य यतीत्यादि प्राप्तासकृत्त्ववत्। ''न खल्वेवं वर्तयन्यावदायुषम्'' इत्यवगताङ्गासकृत्वस्य अनपोदितत्वादित्यत्र पदार्थावगतिवेलायां प्रत्येकं पदार्थानामवगमेऽपि खादिरैश्शुष्कैः काष्ठैस्समपरिमाणे भाण्डे पायसं शाल्योदनं समर्थः पाचकः पचे...

(सा.वि) विश्वासे गोप्तृत्ववरणं च शब्दतोऽर्थतश्च प्रतिपादयति क्रियापद इत्यर्थः...

(सा.सं) नविरम्य व्यापार प्रसक्तिरपीत्यभिप्रेत्य சேர்ந்து अनुसन्धिக்க प्राप्तमित्युक्तम्। यद्वा, वाक्यार्थज्ञान रूपाविधेयाध्यव सायसद्भावेऽपि विधेयज्ञान संपादनाय प्रार्थनैயருவச் செல்ல வேண் டும். इत्युक्त्या प्रार्थना यथा शरण शब्दोपश्लिष्ट क्रिया पदार्थतयाकार्या, न तां विना भगवत उपायत्वसिद्धिरिति तथा निक्षेपोऽपि द्वयार्थः कार्यः। तथा हि सत्यामप्युपायत्व प्रार्थनायां परस्यैव स्वमात्मानं शास्त्रविहितेन समर्पणेन परस्य यदि नस्वमिति मनुते तदा परस्वत्वबुद्ध्या स्वहस्त विनिहित द्रव्यकवति तव महानयं ज्ञातदशायामपि तत्समर्पणविधुरश्चोर इति तं प्रति...

मू - இப்படி இவையாறும் (இவையனைத்தும்) இம்मन्त्रத்தில் —

(सा.दी) இவையாறும் इत्यादि ।। अङ्गाङ्गिகளான षडर्थமும்...

(सा.स्वा) அன்றோ? ''सकृज्ज्ञप्तेन मन्त्रेण कृतकृत्यस्सुखी भवेत् । सकृदेव हि शास्त्रार्थः कृतोऽयं तारयेत्'' इत्यादिகளிலேயிந்த शास्त्रार्थं मन्त्रस्य सकृदुच्चारणपूर्वकं सकृदेव कर्तव्यமென்று विधिக்கையாலே இவையெல்லாம் एक बुद्ध्यारूढமாக வேண்டுகையால் சேர்த்து अनुसन्धिக்க வேணுமென்னில், ''स्योनन्ते सदनं करोमि'' என்கிற मन्त्रத்தில் போலேயிங்கு தனித்தனியே अनुसन्धेय पदार्थங்கள் अनेकங்களாயிருக்கையாலே मन्त्रभेदமாதல் एकमन्त्रत्व निर्बन्धे मन्त्रத்துக்கு आवृत्तिயாதல் வர வேண்டாவோ? किञ्च இவ் आनुकूल्य सङ्कल्पादिகளில் पूर्वाधिकारोक्तरीत्या ஒன்று औचित्यத்தாலும்'' ஒன்று शब्द शक्तिயாலும், ஒன்று अर्थ सामर्थ्यத்தாலுமென்றிப்படி तत्तन्निबन्धनங்களையிட்டு தனித்தனியே अनुसन्धेयங்களாயிருக்க இவத்தை एक बुद्ध्यारूढமாக்குகைதான் शक्यமோ? ஆகையாலிங்கு सकृत्वं சொல்லுகிற शास्त्रं अन्यपरமென்று வேண்டுகையாலிந்த शास्त्रार्थं सकृत्कर्तव्यமென்கைதான் उपपन्नமோ? என்ன उत्तरமருளிச் செய்கிறார். இப்படியிவையாறும் इत्यादि वाक्यद्वयத்தாலே...

(सा.प्र) दित्यादि लौकिक वाक्यार्थवद्वेदेऽपि ''यदाग्नेयोष्टाकपालः समिधोयजति'' इत्यादिभिर्विमर्शदशायामाग्नेयादीनां प्रयाजादीनां च प्रत्येकावगमेऽपि वाक्यार्थज्ञानवेलायां ''दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत'' इत्येकाधिकार वाक्येन प्रयाजाद्यङ्ग विशिष्ट दर्शपूर्ण मासाद्यङ्गिवच्च । भगवत्सन्निधौ त्वच्छेषभूतस्स्वाधीन कर्तृत्व भोक्तृत्व स्वार्थकर्तृत्व भोक्तृत्व भ्रमरहितः फलान्तरविरक्तोऽकिञ्चनोऽनुकूलः प्रातिकूल्य रहितः रक्षिष्यतीत्यध्यवस्यन् गोपायिताभवेति प्रार्थयन् अहं मद्रक्षणभरं त्वयि निक्षिपामीत्येवमनुसन्धानरूपार्थस्य द्वयेन विधानसिद्धेरङ्गानामङ्गिनश्च युगपद्विधान संभवात् । ''तद्वयं सकृदुच्चारः संसारविमोचनं भवति । द्वयात्परतरो मन्त्रो नास्ति सर्वप्रदो नृणाम् । यस्योच्चारणमात्रेण परांसिद्धिमवाप्नुयात् । सकृदेव हि शास्त्रार्थः'' इत्यादिभिर्बोध्यमानं सकृत्वमङ्गेष्वङ्गिन्यपि चान्वेति इत्यङ्गेष्वपि सकृत्वं सिद्ध्यतीति दर्शयन् साङ्गभरन्यासस्यात्यल्पकालसाध्यत्वं सदृष्टान्तं बोधयता ''प्रणवोधनुः शरोह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेन वेद्धव्यं शरवत् तन्मयो भवेत्'' इति वाक्येनाप्यर्थात् सकृत्वमल्पकाल साध्यत्वं च बोध्यत इत्यभिप्रेत्याह । இவையனைத்தும் इत्यादिना ।...

(सा.वि) இவ்வாறும் अङ्गिनासह षडर्थाः- तत्तन्मन्त्रांशप्रतिपाद्य क्रमेऽवस्थितानेकाङ्गसाध्य...

(सा.सं) स नोपायो भवति । तथैवस्वस्मिन् स्वरक्षाभर निर्वाहकत्वाहङ्कारनिवृत्तिकार्यस्वात्मरक्षाभरसमर्पण विधुरस्य न भरस्वीकर्ता भवतीति स नोपायस्स्यात् एवं रक्षाफल स्वामित्वाहं कारनिवृत्तिकार्य तत्समर्पणविधुरस्य तत एव साहङ्कारस्य भरस्वीकर्ता नाप्युपायश्च भवतीति प्रकृताधिकार्यपेक्षित बुद्धिविशेषत्वात् विमर्शदशायां क्रमेण சேர்த்து अनुसन्धिக்க प्राप्तमित्युक्तम् - एवं विशकलितवेषेण तत्तत्पदैः पृथक्पृथगनुसन्धाने कथं साङ्गस्य संसर्गबोधरूप एकबुद्ध्यारोह इत्यत्राह - இவையாறும் इति - उपायत्व प्रार्थना पूर्वक स्वनिर्भरत्व शिरस्कनिक्षेपत्रय...

**मू - विमर्श दशै**யில் தனித்தனியே **अनुसन्धि**த்தாலும் **वाक्यार्थ प्रपत्ति दशै**யில் அல்லாத **वाक्यार्थ**ங்கள் போலே **साङ्ग**மான **प्रधानं एकबुद्ध्यारूढ**மாம். ஆகையாலே **यथाशास्त्रं साङ्ग प्रधानानुष्ठानं सकृत्कर्तव्य**மாயிற்று.

---

(सा.दी) विमर्श दशैயில், पदार्थानुसन्धान दशैயில். अतस्साङ्गமான प्रधानத்தினுடைய अनुष्ठानं यथा शास्त्रं सकृत्कर्तव्यமென்கிறார். ஆகையால், इति । ஆகையால், साङ्गस्याङ्गिनः एकबुद्ध्यारूढत्व संभवात् என்கை. இவ்आत्मभरसमर्पणं क्षणकृत्यமாகையால் सकृत्कर्तव्यமென்று श्रुत्यभिप्रेत...

---

(सा.स्वा) இப்படியென்றது पूर्वाधिकारத்திலுமிவ் अधिकारத்திலும் उक्तरीत्या என்றபடி. एकपेटिकैயாகையாலிங்கு पूर्वाधिकारத்தையும் கூட்டி இப்படியென்று निर्देशिக்கை उपपन्नम् । இங்கு विमर्श दशैயாவது आनुकूल्यसङ्कल्पादीनां मन्त्रத்தில் यथार्हं तत्तदंशங்களாலே बोध्यत्व प्रकारத்தை विचारिக்கிற दशै. இனி वाक्यार्थ प्रतिपत्ति दशैயாவது; तत्तदंशबोधितानामर्थानां यथायोग्यं प्रधानोप सर्जनतयान्वयमुखेन महावाक्यार्थ बोधोत्पत्तिदशै । तथा च तन्निबन्धनங்களையிட்டு தனித் தனியே अनुसन्धेयமாகச் சொன்னது विमर्शदशानुसन्धान मात्रத்தைப் பற்றச் சொன்னதாகை யாலே वाक्यार्थ प्रतिपत्ति दशैயிலே एकबुद्ध्यारूढமாகத் தட்டில்லையென்று கருத்து. அல்லாத वाक्यार्थम्, इतरवाक्यार्थम् । அதாவது. लोकத்தில் पञ्चावयववाक्यार्थादिகளும் वेदத்தில் अङ्गवाक्य सहित प्रधान वाक्यार्थமும் - साङ्गமான प्रधानमिति साभिप्रायनिर्देशः । "स्योनन्ते" इत्यादिகளில் अर्थங்கள், अन्योन्य प्रधानोपसर्जन भावेनान्वयिக்கை योग्यங்களல்லாமையாலேயங்கு मन्त्रभेदा दिகள் வந்தாலும் இவ்விடத்தில் அங்ஙனன்றிக்கே. अङ्गाङ्गिबोधकप्रमाणமிருக்கையாலே प्रधानोपसर्जनभावेनान्वयं கூடுகையாலே एकवाक्यत्वंलभिக்கையாலே एकबुद्ध्यारूढமாகலா மென்று கருத்து. यथा शास्त्रमिति । இவையாறுக்கும் இம்मन्त्रத்தில் एकबुद्ध्यारूढत्वं संभविக்கை யாலே सकृत्वं சொல்கிற शास्त्रத்தை யழிக்க வொண்ணாதென்று கருத்து. இவைகளுடைய अनुष्ठानार्थம் இம்मन्त्रத்தால் வர வேண்டிய बुद्धि एकैயென்னக் கூடுமோ? अनुष्ठेयपदार्थங்கள் बहुக்களாகையால்...

---

(सा.प्र) இவையனைத்தும், एतत्सर्वम् । भरसमर्पण प्रधानமான इति, भरन्यासस्य प्राधान्येन द्वये प्रतिपाद्यत्व...

---

(सा.वि) प्रपदनस्य कथं क्षणकृत्यत्वमित्यत आह - विमर्श दशैயிலே इति । தனித் தனியே प्रत्येकं वाक्यार्थ प्रपत्ति दशैயில் इति - அல்லாத वाक्यार्थங்கள் போலே, तद्भिन्न वाक्यार्थवत् । एकबुद्ध्या रूढமாம், षडर्था एकबुद्ध्या रूढाभवन्ति - तत्तत्पदार्थस्मरणजनित संस्कार बलाद्वाक्यार्थ प्रतिपत्ति न्यायेन तावत्पदार्थविशिष्टैक बुद्धिरूप भरन्यासः क्षणसाध्यस्सकृत्कृतश्च भवतीति...

---

(सा.सं) मङ्गित्वेन क्रोडीकृत्यैकम्, आनुकूल्यसङ्कल्पादीन्यङ्गानि पञ्चेत्यभिप्रेत्य இவையாறும் इत्युक्तिः அல்லாத इति - प्रयाजादि वाक्यैक वाक्यज्योतिष्टोमादिवाक्यार्थवदित्यर्थः - एवमेक बुद्ध्या रोहफलं साङ्गस्य "सकृदेव हि शास्त्रार्थः" इति न्यायात् सकृत्कर्तव्यत्वमित्याह - ஆகையால் इति - साङ्गप्रधानस्य एक बुद्ध्यारोहलाभादित्यर्थः एवमनेकानामङ्गानामङ्गिनां च क्षणमात्रात्...

**मू - अनेकव्यापार साध्य**மான **धानुष्क**னுடைய **लक्ष्यवेधार्थ**மான **बाणमोक्षं क्षणकृत्य**மாகிறாப் போலே இவ்**आत्मरक्षाभर समर्पण**மிருக்கும்படியென்று **श्रुतिसिद्धम्।**

---

(सा.दी) மென்கிறார். अनेकव्यापारेत्यादिயால். लक्ष्यवेधार्थமான बाणमोक्षं क्षणकृत्यं - पूर्वं பண்ணின अनेकशिक्षैயெல்லாமிதின் परिकरங்கள். இங்கும் भरसमर्पणं क्षणकृत्यं । तदर्थं पूर्वं परामर्शादिகள். श्रुतिயாவது ''प्रणवो धनुश्शरो ह्यात्मा'' என்னுமது. प्रपत्ति मन्त्रங்களில்...

---

(सा.स्वा) बहुकाल साध्यமான साङ्ग प्रधानानुष्ठान पर्यन्तं क्षणकालवर्तिயான இந்த बुद्धि अनुवर्तिக்க மாட்டாமையாலேயிவ்अनुष्ठानத்துக்கு उपकारकமாகாதொழியாதோ? बहुக்களான இவை अत्यल्प कालத்திலே अनुष्ठिக்கத்தான் शक्यமோ? என்னவருளிச் செய்கிறார். अनेकेत्यादिயால் धानुष्कன் इत्यादि - இங்கு श्रुतिயாவது ''प्रणवो धनुश्शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते - अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्'' என்கிற श्रुति - लक्ष्यवेधार्थमित्यनेन शैघ्र्यहेतुभूतं चित्तस्यात्यन्तैकाग्र्यं विवक्षितम् - क्षणेति - இந்த श्रुतिயில் प्रणवத்தை धनुஸ்ஸாகவும், आत्माவை शरமாகவும், ब्रह्मத்தை இலக்காகவும், आत्मसमर्पणத்தை अत्यन्तावधानसहितलक्ष्यवेधமாகவும், निरूपिக்கிற விதுக்கு இந்த आत्म समर्पणத்தில் अनुष्ठेयव्यापारங்கள் बहुக்களாயிருந்தாலும் अभ्यासपाटव முடையார்க்கு இது धानुष्कबाणमोक्षं போலே अत्यल्पकालकृत्यமாமென்று ज्ञापिக்கையிலே तात्पर्यமென்று கருத்து. இத்தாலிது अत्यल्पकालकृत्यமாம்படி अभ्यासपाटवமும் अवश्यं संपादिக்க வேணுமென்றதாயிற்று. ஆனாலும், द्वयத்தில் शब्दतः प्रतिपन्नமாகிற महाविश्वासமே प्रपत्ति யாகலாகாதோ? पूर्वர்களும் ''प्रपत्तिर्विश्वासः'' என்றும் ''उपाय इति विश्वासो द्वयार्थश शरणागतिः'' என்றும் निष्कर्षिக்கவில்லையோ? माताவைப் போலே स्वत एव भरं சுமக்கிற வவன் திறத்தில் स्तनन्धयप्रजातुल्यரான நாம் भरसमर्पणं பண்ணுகை...

---

(सा.प्र) मुक्तम् । ''अप्रार्थितो न गोपायेत् । तदेकोपायता याच्ञा प्रपत्तिः'' इत्यादिभिर्विश्वासस्य गोप्तृत्ववरणस्य च प्राधान्यावगमात्तस्यैव प्राधान्येन प्रतिपाद्यत्वे किं नियामक..

---

(सा.वि) समुदायार्थः । क्षणकृत्यत्वे दृष्टान्तमाह - अनेकव्यापारेति । भरसमर्पणமிருக்கும்படி, भर समर्पणस्थितिप्रकारः । बाणमोक्षणं क्षणकृत्यமாகிறாப் போலே इत्यन्वयः । लक्ष्यवेधार्थं बाणमोक्षणं क्षणकृत्यं, पूर्वशिक्षाप्रकारस्तत्परिकरः । तद्वत्तत्तत् पदार्थविमर्शः पूर्वं तत्परिकरः । वाक्यार्थानुसन्धानं तु क्षणकृत्यमिति भावः । बाणमोक्षदृष्टान्तेन क्षणकर्तव्यत्वं श्रुत्यैवोक्तमित्याह - श्रुतीति । ''प्रणवोधनुश्शरोह्यात्मा'' इत्यादि श्रुतिः । ''सकृदेव हि शास्त्रार्थः - सकृदेव प्रपन्नाय'' इति स्मृतेः श्रुति मूलत्वात्तत्रापि दृष्टान्तान्वयान्नानुप...

---

(सा.स) निर्वृत्य संभवात्कथं न्यासस्य क्षणकालसाध्यत्वमिति भवद्व्यवहार इत्यत्राह अनेकेति ''प्रणवो धनुश्शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते - अप्रमत्तेन वेद्धव्यंशरवत्तन्मयो भवेत् - ओमित्यात्मानं युञ्जीत । ओमित्यनेनद्वय रूपिणा'' इत्याद्यभिप्रेत्य श्रुति सिद्धमित्युक्तम् । श्रुत्यादावात्मनिक्षेप एव प्रधानतयोक्तः, न भरनिक्षेप इति कथं भवद्भिर्भरन्यास प्राधान्यमुच्य ते...

**मू - இப்भरसमर्पणமே प्रपत्ति मन्त्रங்களில் प्रधानமாக अनुसन्धेयமென்னுமிடத்தை ''अनेनैवतु मन्त्रेण स्वात्मानं मयि निक्षिपेत्। मयि निक्षिप्त कर्तव्यः कृतकृत्यो भविष्यति'' என்று सात्यकि तन्त्रத்திலே भरस्वीकारं பண்ணுகிற शरण्यன் தானே தெளிய வருளிச் செய்தான்.**

(सा.दी) भरसमर्पणமே प्रधानतया अनुसन्धेयமென்னுமதில் प्रमाणं காட்டுகிறார். இப்भर समर्पणமே इत्यादि। निक्षिपेदिति। निक्षेपः कर्तव्यतया विहितः। मयीति। निक्षिप्त स्वरक्षणभर इत्यर्थः। இத்தால் निक्षेपத்துக்கே...

(सा.स्वा) தான் उचितமோ? ஆன பின்பு இங்கு शब्दतः प्रतिपन्नமல்லாத भरसमर्पणத்தையும் சேர்த்து अनुसन्धेयமாகச் சொன்னது கூடுமோ? வென்னவருளிச் செய்கிறார். இப்भर समर्पणமே इत्यादि - இங்கு अवधारणத்தாலே महाविश्वासं व्यवच्छेदिக்கப்படுகிறது. महाविश्वासं शब्दतः प्रतिपन्नமாயிருந்தாலும் मन्त्रத்தை भरसमर्पणத்திலே विनियोगिக்கிற प्रमाणबलத்தாலே இங்கு भरसमर्पणமே प्रधानமாக अनुसन्धेयமென்று கருத்து. प्रपत्ति मन्त्रங்களில் इति - ''अनेनैव तु मन्त्रेण'' என்று मन्त्र विशेषத்தைச் சொன்னது प्रपत्ति मन्त्रங்களெல்லாத்துக்கும் उपलक्षण மென்று கருத்து. निक्षिप्त कर्तव्यः, निक्षिप्त भर इत्यर्थः भरस्वीकारमित्यादि - अकिञ्चनன் திறத்தில் भरलेशத்தையும் ஏறிட सहिயாதே அவையெல்லாத்தையும் தானே சுமக்கும் स्वभावனான அவன் தானே भरसमर्पणं பண்ணாதவன் कृतकृत्यனல்லனென்றிப்படி யருளிச் செய்கையால் पूर्वர்கள் वाक्यं तदनुरोधेन नेयமென்று கருத்து. தெளியவென்றது. माताவைப் போலேயிருக் கிறவிவன் திறத்தில் நாம் भरसमर्पणं வேண்டுகை. उचितமன்றென்றிப் புடைகளிலே பிறக் கும் கலக்கங்களற என்றபடி. இப்படி இவ்उपायத்தில் अङ्गस्वरूपमङ्गि स्वरूपமெல்லாம் निरूपितமானாலும் ''प्रधानविधिवाक्यं खल्वङ्गवाक्यसमन्वितम्'' इत्याद्युक्त प्रक्रियैயாலே साङ्ग प्रधान विषयமான प्रयोग विधि वाक्यத்தைக் கொண்டு வர வேண்டின साङ्गानुष्ठानமின்னபடி யென்று निष्कर्षिக்கக் கூடுமோ? प्रयोगविधिवाक्यमेकமாகில் अहिर्बुध्न्योक्तமான अङ्गान्तरமும், अङ्गिயில் स्वरूपफलसमर्पणांशமும் मुमुक्षु அல்லாதார்க்கும் अनुष्ठेयமாக प्रसङ्गिயாதோ? भिन्न भिन्नமாகில் मुमुक्षुவுக்கு अङ्गित्रयமிருக்கையாலே तत्तत्प्रयोग विधिवाक्यங்களாலவற்றின் अनुष्ठानத்தில் मन्त्रத்துக்கு आवृत्ति प्रसङ्गिக்கையால் द्वयस्य...

(सा.प्र) मित्यत्राह। இப் भरसमर्पणமே इति। कर्तव्यभूतरक्षण भर निक्षेपस्य कृतकृत्यत्वापादकत्वो क्तेः रक्षा भरन्यासस्य फलान्तरार्थ प्रपदनेऽनुगतत्वाच्च प्राधान्यमिति भावः। फलसङ्ग कर्तृत्व त्यागस्य निवृत्ति धर्ममात्र साधारणतया भरन्यासस्यापि तद्वैशिष्ट्यं तेषां निबन्धनमप्याह...

(सा.वि) पत्तिरिति ध्येयम् - प्रपत्ति मन्त्राणां भरसमर्पणमेव प्रधान प्रतिपाद्यमित्यत्र प्रमाणमाह - இப்भरसमर्पणமே इति - निक्षिपेदिति रक्षाभरनिक्षेप एव कर्तव्यतया विहितः। अन्यथा ''मयि निक्षिप्त कर्तव्यः'' इत्यनुवादायोगात्। शेषत्व ज्ञान मात्रस्य प्रमाणतन्त्रस्य कर्तव्यत्वासिद्धेः तदनुवादा...

(सा.सं) इत्यत्राह। இப்भरसमर्पणமே इति। सकिञ्चनात्मनिक्षेपे ''मयि निक्षिप्त कर्तव्य'' इत्युत्त-राधयोगात्तथोक्तिमतो भरस्वीकर्तुः शरण्यस्याकिञ्चने भरन्यास प्राधान्य मेवाभिप्रेत मित्यर्थः। अथ कर्तृत्वादि त्यागं गुरूपरम्परोपसत्तिं च विना यावदङ्ग सहिताङ्ग्यनुष्ठानमपि न...

**मू - இதில் साङ्गानुष्ठानமாயற்றது, कर्तृत्वत्याग, ममतात्याग, फलत्याग, फलोपायत्वत्याग पूर्वकமான आनुकूल्यसङ्कल्पाद्यर्थानु सन्धानத்தோடே गुरुपरम्परोपसत्तिपूर्वक**

(सा.दी) प्राधान्यமறியப்பட்டது. இதின் साङ्गानुष्ठानप्रकारத்தைக் காட்டுகிறார். இதில் साङ्गानुष्ठानமாயிற்று. इत्यादि । स्वप्रधानकर्तृत्व त्यागं - क्रियमाणं मदीयमित्येवं रूपममतात्यागः । एवं त्यागत्रयपूर्वकமான समर्पणமென்று अन्वयम् । आनुकूल्येत्यादि । अनुष्ठेय प्रकाशक मन्त्रकरणकமான अङ्गाङ्ग्यनु सन्धानத்தோடே கூட...

(सा.स्वा) सकृदुच्चारणத்தை विधिக்கிற शास्त्रं विरोधिயாதோவென்ன मुमुक्षुக்களுக்கு इतरரில் காட்டில் प्रयोगविधिवाक्यं भिन्नமென்றும் स्वरूपफलनिक्षेपங்கள் अङ्गि शरीरान्तर्गतங்களாகை யாலே தனித்தனியே अङ्गिகளல்லாமையால் இந்த मुमुक्षुக்களெல்லார்க்கும் प्रयोगविधि एकமென்றும் सूचिப்பியா நின்று கொண்டு मुमुक्षुக்களுக்கு प्रयोगविधि लभ्यமான साङ्गानुष्ठानத்தை निष्कर्षिக்கிறார். இதில் इत्यादिயால். இதிலென்றது मुमुक्षुக்களுக்குச் சொன்ன இவ்अङ्गि विषयத்திலென்றபடி. ஆய்த்தது. தீர்ந்தது. तत्तदङ्ग विधि वाक्यங்களோடே एकवाक्यतापन्नप्रधान विधिवाक्यமாகிற प्रयोगविधि वाक्यத்தாலே निष्कृष्टமானதென்றபடி. कर्तृत्वत्यागादिகள் सर्वनिवृत्ति धर्म साधारणங்களாகையால் आनुकूल्य सङ्कल्पादिகளுக்கும்கூட अङ्गங்களென்று காட்டுகைக்காக तत्पूर्वक त्वोक्तिः । अत्रादिशब्देन इतराङ्गचतुष्टयं गृह्यते । இங்கு अर्थानुसन्धानமாவது, अर्थस्मरण पूर्वकानुष्ठानम् । तथाच अर्थानुसन्धानத்தோடே என்றது आनुकूल्य सङ्कल्पादिरूप मन्त्रार्थस्मरण पूर्वकतदनुष्ठानத்தோடே யென்றதாயிற்று. இதுக்கு भरसमर्पणं பண்ணுகையென்கிறத்தோடே अन्वयம். तथाच இவ்आनुकूल्य सङ्कल्पादिகள் भरन्यासத்துக்கே उपकारकங்களென்றதாயிற்று. இத்தால் स्वरूप फल निक्षेपங்களைப் பற்ற उपकारकங்களாக மாட்டாமையால் இவற்றுக்கு विधि वैयर्थ्यமென்று முன்பு பண்ணியிருந்த चोद्यமும் परिहृतम् । भरन्या सोपकारकत्वमात्रेणापि யிவற்றின் विधि सार्थकமிறே । இங்கு द्वयवचनத்தை सात्विकत्याग निर्देशात्पश्चादानुकूल्य सङ्कल्पादिनिर्देशात्पूर्वமே निर्देशिக்க வேண்டியிருக்க ततोऽपि पश्चान्निर्देशिத்தது मन्त्रमङ्ग्यनुष्ठानத்துக்கு अत्यन्तावश्यकमिति ज्ञापनार्थम् । गुरुपरम्परेति । उपसत्तिः, उपसदनम् । அதாவது प्रणाम ध्यानादिகள் । चरम श्लोकाधिकारத்தில் தாம் निष्कर्षिக்கப்...

(सा.प्र) இதில் साङ्गानुष्ठानमित्यादिना । "त्यक्त्वा कर्मफलासङ्गम् । यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः" इत्यादिषु प्रतिपन्नः फलत्यागो मोक्षव्यतिरिक्तफलनैराश्यम् । अहिर्बुध्न्यसंहितोक्तस्तु अङ्ग्यनुप्रविष्टः प्रपदनफलमपि भगवत एवेत्यनुसन्धानात्मक इति भावः ।...

(सा.वि) सम्भवादिति भावः । साङ्गानुष्ठानप्रकारं दर्शयति - இதில் इति । स्वरूप फलन्यास गर्भமான आत्मरक्षाभरसमर्पणं பண்ணுகை साङ्गानुष्ठानமாய்த்தது. साङ्गानुष्ठानं भवतीत्यन्वयो बोध्यः । अयमत्र साङ्गानुष्ठान प्रकारः - आचार्यानुग्रह पूर्वकं गुरुपरम्परा मनुसन्धाय श्रीप्रपत्ति...

(सा.सं) पुष्कलानुष्ठानमिति तत्साहित्यमपि पुष्कलानुष्ठान शरीरत्वेन निष्कर्षयति । இதில் इति ।...

**मू - द्वयवचन मुखत्ताले स्वरूपफलन्यासगर्भमान आत्मरक्षा भरसमर्पणं** பண்ணுகை.

(सा.स्वा) புகுகிறபடியேயிந்த उपसत्ति, प्रपत्तिக்கு उपकारकமாகையாலே இதுவும் प्रयोगविधि विषयமென்ற கருத்தாலே आनुकूल्य सङ्कल्पादिகளைப் போலே இத்தையுமிங்கே சேர்த்தது. तथा च இத்தை द्वयवचनात्पूर्वமாக निर्देशित्तது द्वयोच्चारणात् पूर्वமே இது अनुष्ठेय மென்று ज्ञापिக்கைக்காகவத்தனை போக்கி இதுக்கு द्वयवचनमात्राङ्गत्वज्ञापनार्थமன்றென்று கண்டு கொள்வது. இங்கு वचनं उच्चारणम् । द्वयवचनத்தாலே யென்று निर्देशिக்கலாயிருக்க இத்தை मुखமாக निर्देशित्तविத்தாலே मुखान्तरமுமுண்டென்று ज्ञापितமாகையால் मन्त्रान्तरयुक्त மாகவும், मन्त्ररहितமாகவும், अधिकारिभेदेन निक्षेपरक्षोक्तरीत्या சில प्रपत्ति प्रयोगங்களுண் டென்று सूचितமாகிறது. स्वरूपेत्यादि । आत्मनिक्षेपமானது शेषत्वानुसन्धान विशेषமென்றும், ''रक्ष्यस्यात्म समर्पणम् । रक्षकैकार्थ्यभावनम्'' என்றும் முன்பு स्वरूपन्यासத்தை विशेष्यமாக निर्देशित्तது. ''स्वात्मानं मयि निक्षिपेत् । ओमित्यामानंयुञ्जीत'' इत्यादिகளிலே தோற்றுகிற शाब्द प्राधान्यத்தைப் பற்றச் சொன்னபடி. இங்கு स्वरूप फलन्यास गर्भமான आत्मरक्षाभरसमर्पण மென்று भरन्यासத்தை विशेष्यமாக निर्देशित्तது இதுக்குள்ள आर्थ प्राधान्यத்தைம், द्वयத்தி லிதுக்குத் தோற்றுகிற शाब्द प्राधान्यத்தையும் பற்றச் சொன்னபடி. இத்தால் भरन्यासं मुमुक्षु வுக்கு अङ्गियாம்போது स्वरूप फलन्यासங்கள் तत्सन्निवेशरूपங்களாயிருக்குமத்தனை...

(सा.वि) कृत्वा अखिल हेय प्रत्यनीकेत्याद्युक्तरीत्या भगवति रक्षणोपयुक्त स्वामित्व, सौशील्य, वात्सल्य, सौलभ्य सर्वज्ञत्व, सर्वशक्तित्व, सहजकारुणिकत्व, सत्यसङ्कल्पत्व, परमोदारत्वादि कल्याण गुणगणान्नारायण शब्देऽनुसन्धाय, श्रीमच्छब्दे श्रीवैशिष्ट्यं चानुसन्धाय श्रीमच्छब्द नारायण शब्दाभ्यां अर्थ सामर्थ्यलब्धे आनुकूल्यसङ्कल्प प्रातिकूल्य वर्जन सङ्कल्पौ च इत: प्रभृत्यनुकूलोऽस्मि प्राति कूल्यान्निवृत्तोऽस्मीति कृत्वा ''अहमस्म्यपराधानामालयोऽकिञ्चनो गति:'' इति स्वाकिञ्चन्यमनु सन्धाय, स्वशेषत्वाद्यनुसन्धाय, अनागतानन्तकाल समीक्षयाप्यदृष्ट सन्तारोपायोनन्यगतिरहं हे श्रीम-न्नारायण! त्वच्छेषभूतं मां त्वद्दत्तबुद्ध्या त्वच्चरणारविन्दयोस्समर्पितवानस्मि - अहं न मम । श्रीमन्नारा-यण तव चरणौ शरणं प्रपद्ये - उपायत्वेनाध्यवस्यामि त्वमेवोपायस्थाने तिष्ठन् मत्कार्यं साधय, इत: पश्चादस्मद्यतन निरपेक्षो भवानेव रक्षतु, तत्र भरस्तवैव, नमम, ततस्तदंशे निर्भरोऽहमस्मि, श्रीमते नारायणाय तुभ्यमेव, सर्वदेश, सर्वकाल, सर्वावस्थोचित, सर्वविधकैङ्कर्याणि कुर्वन् भवेयम्, न मम तत्र प्रधान फलित्वं, अस्मिन् समर्पणेऽप्यहं निरपेक्षकर्ता न भवामि, स्वार्थं च कर्ता न भवामि, प्रधा-नोपायश्च भवानेवेति भगवत्सन्निधौ द्वयमन्त्र तत्तत्पदप्रतिपाद्यार्थानां तत्तत्पदस्थाने परामर्शसहितं विशिष्टमध्यवसानम् । यद्वा पूर्ववच्छ्रीमच्छब्देन पुरुषकारवैशिष्ट्यं नारायणशब्देन गुणवैशिष्ट्यं चानु-सन्धायानुकूल्य सङ्कल्प प्रातिकूल्यवर्जन सङ्कल्पौ च तत एवानुसन्धाय ''चरणौ शरणं प्रपद्ये'' इत्यत्र...

(सा.सं) अकिञ्चन मुमुक्षु कर्तव्यतयोक्त भरन्यसन इत्यर्थ: । ननु कर्तृत्वादित्यागानां...

**मू - இக் कर्तृत्वत्यागத்துக்கு निबन्धनं,** தன் **कर्तृत्व**மும்அவனடியாக வந்ததென்று தனக்கு **यावदात्मभावि**யான **भगवदेकपारतन्त्य**த்தை யறிகை

(सा.दी) தன் कर्तृत्वम्, प्रपत्तिकर्तृत्वम् ।...

(सा.स्वा) போக்கி पृथगङ्गங்களன்றென்றதாயிற்று. कर्मத்தை अनुष्ठिक्கிறவனுக்கு कर्तृत्वத்தை उपादेयமாக न्यायवित्துக்கள் சொல்லியிருக்க अनुष्ठानदशैயில் அதற்கு त्यागं பண்ணக் கூடுமோ? இங்கு त्यागமாவது, स्वरूपेण त्यागமன்றிக்கேயிந்த कर्तृत्वं தன்னுடைய தன்றென் கிற अनुसन्धानमात्ररूपமாகையாலது கூடுமென்னில் अनुष्ठिक्கிறவனுக்கு कर्तृत्वं தன்னுடைய தாக स्वानुभवसिद्धமாயிருக்க இது தன்னதன்றென்கைக்குத்தான் निबन्धनமெது? என்ன வருளிச் செய்கிறார். இக் कर्तृत्वेत्यादि । தன் कर्तृत्वமும் इत्यादि । தனக்கு कर्तृत्वமிருந்தாலும் அந்த कर्तृत्वशक्तिயையிவன் स्वार्थமாகயிவனுக்குக் கொடுத்து வைக்கையாலும் कर्तृत्वोषयुक्त மாக करणकलेबरादिகளையும் கொடுக்கையாலும் प्रवृत्ति समयத்தில் स्वसङ्कल्पेन ज्ञानचिकीर्षा प्रयत्नोत्पादन मुखेन प्रेरकனாகையாலும், இளந்தலை சுமக்கும் அவனுக்கு प्रबलன் பெருந் தலை சுமக்குமாப் போலே அவன்கூட प्रवृत्तिக்கிறவனாய்க் கொண்டு सहकरिக்கையாலும், தன் कर्तृत्वமவனடி...

(सा.वि) कार्पण्य महाविश्वास गोप्तृत्ववरणान्यनुसन्धाय, श्रीमते नारायणायेति पूर्वोक्त श्रीविशिष्ट नारायणोद्देशेन अहमिति पदमध्याहृत्य रक्ष्यत्वेन स्वरूप समर्पणानुसन्धानं, नम इति स्वसम्बन्ध निवृत्त्यनुसन्धानं च, अत्र "अहमद्यैव मया समर्पित: अहमपि तवैवास्मिहि भर:" इति मद्रक्षणभर फलयोस्समर्पणस्य तात्पर्य सिद्धत्वात् न मम इति त्रितयेऽपि स्वसम्बन्धनिवृत्तिर्बोध्या । इहापि निरपेक्ष कर्तृत्वादि निषेधोऽनुसन्धेय: - अत्र पक्षे द्वय पूर्वखण्डमङ्गपरम्, उत्तरखण्डमङ्गिपरम् । पूर्वस्मिन्पक्षे पूर्वखण्डमङ्गाङ्गिपरम् । उत्तरखण्डं फलपरमिति बोध्यम् । अथोक्ति प्रकार उच्यते - भगवत्सन्निधौ आचार्योपदिष्टरीत्या पुरुषकार प्रपत्त्यनन्तरं पुरुषकार सम्बन्धगुणवैशिष्ट्यान्यनुसन्धाय, स्वामिन्नित: प्रभृत्यनुकूलोऽस्मि, प्रातिकूल्यान्निवृत्तोऽस्मि, त्वमेव रक्षिष्यतीति विश्वसिमि । "अहमस्म्य पराधाना मालयो किञ्चनो गति:" कृपणोऽहं - त्वं मम गोपायिता भव । इदमात्मात्मीयं सर्वं तवैव, न मम, एतद्रक्षणभरं त्वयि न्यस्यामि, अत्र नममान्वय:, त्वमेवोपायान्तर स्थानापन्नो भूत्वा तत्कार्यं साधय, तदंशे निर्भरोऽहमस्मि" रक्षाफलस्वाम्यमपि शेषिणस्तवैव, न मम, अस्मिन् साङ्गप्रपदने कर्तृत्वमपि न मम, इदं प्रपदनं भवद्वशीकरणमात्रम्, न फलं प्रत्यव्यवहितोपायोऽपीत्याचार्योच्चारित समुदाय ज्ञान पूर्वक वाक्योच्चारणम् । आचार्य निष्ठातु, आचार्यकृत प्रपत्तिरेवेति तत्राहमिति स्थाने अयमिति निर्देश एव विशेष: । आत्मात्मीयमित्यत्र अन्तर्गतत्वं वा । அவனடியாக வந்ததென்று, भगवन्मूलकतया प्राप्त मिति । यावदात्मभाविயான पारतन्त्यத்தையறிகை, पारतन्त्यज्ञानं स्वस्य भगवदधीनकर्तृत्वं याव दात्मभावीति ।...

(सा.सं) किं निबन्धनम्? येन तत्पूर्वकतापि स्यादित्यत्राह । இக்कर्तृत्वत्यागத்துக்கு इत्यादिना । भगवदेकपारतन्त्यं भगवत्सङ्कल्पव्यतिरेके प्रयत्नचलनाद्यनाश्रयत्वम् । एतस्मिन् ज्ञाते स्वकर्तृपरै...

**मू - ममतात्यागத்துக்கும் फलत्यागத்துக்கும் निबन्धनम्, आत्मात्मीयங்களுடைய स्वरूपानु बन्धि भगवदेक शेषत्वज्ञानम्**

---

(सा.स्वा) யாகவே வந்ததென்றபடி. लोकத்தில் போலே पारतन्त्र्यं कादाचित्कமாதல் अनेकप्रति सम्बन्धिकமாதலாகில் कर्तृत्वமவனடியாக வந்ததாகாதொழியுமென்கிற अभिप्रायத்தாலே யிங்கு यावदात्मभावि शब्दமும் एकशब्दமும் प्रयोगिத்தது. अनुष्ठिக்கிறவனுக்கு कर्मமும் उपादेय மாயிருக்கவதின் सम्बन्धत्यागं பண்ணக் கூடுமோ? मुमुक्षुவுக்கு इतरफलங்கள் स्वरूपेण त्यक्तங் களானாலும் मोक्षरूपफलத்திலே अप्रधानமாகவாகிலும் अन्वयं கொள்ள வேண்டியிருக்க, அதுக்குத்தான் त्यागं பண்ணக் கூடுமோ? இங்கு त्यागமாவது-தனக்கிவை शेषமன்றென்கிற अनुसन्धानमात्ररूपமாகையாலே அது கூடுமென்னில்-தனக்கிவை शेषங்களாக तत्तदुपायविधि वाक्यसिद्धங்களாயிருக்க தனக்கு शेषமன்றென்கைக்குத் தான் निबन्धनமேதென்னவருளிச் செய்கிறார். ममतेत्यादि । आत्मात्मीयमिति । आत्मात्मीयस्य कृत्स्नस्य भगवदेकशेषत्वे तदन्तर्गतयो-रूपायफलयोरपि तदेक शेषत्व मवर्जनीयमिति भावः । आत्मनस्तदेकशेषत्वे आत्मीयानांतदेकशेषत्वं कैमुत्यसिद्धमिति ज्ञापनार्थमत्रात्म ग्रहणम् । स्वरूपानुबन्धीति । निरूपाधिकं स्वरूपाविनाभूतं चेत्यर्थः । भगवच्छेषत्वमस्य शेषत्वं போலே सोपाधिकமாதல், कादाचित्कமாதலாகிலிங்கு निबन्धनமாக மாட்டாதென்கிற अभिप्रायத்தாலே स्वरूपानुबन्धीत्युक्तिः । भगवदेकेति । இஃशेषत्वमनेक प्रतिसम्बन्धिकமானாலும் निबन्धनமாக மாட்டாதென்கிற अभिप्रायத்தாலே एकशब्दं प्रयोगिத்தது. भगवद्व्ययतिरिक्त कृत्स्नव्यवच्छेदकமான एकशब्दத்துக்கிங்கு स्वव्यवच्छेदे विशिष्य तात्पर्यम् । भगवदर्थं भगवदिच्छोपाधिकமாக उपायतत्फलங்கள் தனக்கு शेषங்களாயிருந்தாலுமிவை அவ னொருவனுக்கே निरूपाधिकशेषமென்றறிகை தனக்கு शेषமன்றென்கைக்கு निबन्धनமென்று கருத்து. अनुष्ठिக்கிறவனுக்கு कर्मத்தில் फलोपायत्व...

---

(सा.प्र) आत्मात्मीयங்களுடைய इत्यादि । चेतनस्य स्वतो भगवच्छेष त्वाच्छेषभूतस्य शेष्यतिशयैक प्रयोजनतया तद्ज्ञानस्य स्वरूपानुबन्धि भगवत्कैङ्कर्यरूप पुरुषार्थज्ञापनद्वारा इतरपुरुषार्थत्याग निबन्धनत्वमित्यर्थः । नन्वेवं तर्हि ''त्वमेवोपाय भूतो मे । அதுவும் அவனதின்னருளே'' इत्தால் व्रज என்கிற स्वीकारத்தில் उपायभावनै । பிறகு इत्यादि विरुद्धं स्यादित्यत्र तेषां भरन्यासे साक्षादु पायत्व बुद्धेस्त्याज्यत्व बोधन परत्वान्न विरोध इत्यभिप्रेत्य उपायत्व...

---

(सा.वि) एतादृश पारतन्त्र्यज्ञानं स्वाधीनकर्तृत्वबुद्धित्यागस्यमूलमित्यर्थः ।...

---

(सा.सं) कायत्तत्वज्ञानात्कर्तृत्वत्यागस्सिद्ध्यतीति भावः । मदीयफल साधनत्वान्मदीयमिदं कर्मेति रूपा ममता । तत्त्यागस्य स्वस्मिन् प्रधानफलित्वत्यागरूपफलत्यागस्य च निबन्धनमाह - आत्मात्मीयங் களுடைய इति । अत्र आत्मीय शब्दस्स्वकर्तृकव्यापारपरस्स्वभोगपरश्च । तयोर्भगवदेकशेषत्वं, भगवतैव स्वातिशयायैव सत्तादिभिरूपादेयैक स्वरूपत्वम् । अत एव ''न वारे पत्युः कामायपतिः प्रियो भवति । आत्मनस्तु कामाय सर्वं प्रियं भवति'' इति श्रूयते । एतस्मिन् ज्ञाते...

**मू - फलोपायत्वत्याग**த்துக்கு **निबन्धनं, शरण्य प्रसादन**மானவிவனுடைய **अनुष्ठानं प्रधानफल**த்துக்கு **व्यवहितकारण**மாகையும், **अचेतन**மாகையாலே **फलप्रदानसङ्कल्पाश्रय**மல்லாமையும், **ईश्वर**ன் **फलोपाय**(மென்கிறது)மாகிறது **सहजसौहार्द**த்தாலே **करण कलेबर प्रदानं** தொடங்கி **द्वयोच्चारण पर्यन्त**மாக —

(सा.दी) फलोपायत्वेत्यादि । प्रपत्ताविति शेषः । ईश्वरன் इत्यादि । ईश्वरன், स्वतन्त्र प्रपत्ति निष्ठன்...

(सा.स्वा) ज्ञान मावश्यकமாயிருக்க அத்தை त्यागं பண்ணக் கூடுமோ? प्रधान फलத்துக்கு ईश्वरனே उपायமாகையாலே அத்தைப் பற்ற இவை उपायமன்றென்கிற अनुसन्धानமிங்கு उपायत्वत्यागமாகையாலிது கூடுமென்னில் प्रधान फलத்தைப் பற்றவேயித்தை उपायமாக शास्त्र विधिया நிற்கவத்தைப் பற்ற उपायமன்றென்கைக்குத்தான் निबन्धनமெது? उपायत्वेन शास्त्रोक्त மான कर्मத்தை उपायமன்றென்றால் ईश्वरனும் उपायமாகாதொழியானோ? என்னவருளிச் செய்கிறார். फलेत्यादि - प्रसादनमिति । हेतुगर्भ विशेषणम् - प्रधानफलमनवच्छिन्नकैङ्कर्य पर्यन्त परिपूर्णानुभवम् - एतज्जनकமான प्रसादमात्रத்துக்கு कारणமாகையாலிவ் अनुष्ठानं व्यवहितकारण மென்று கருத்து. இத்தாலிதுக்கு प्रधान फलத்தைப் பற்ற उपायत्वं சொல்லுகிற शास्त्रத்துக்கு மிவ்வளவே तात्पर्यமென்றதாயிற்று. ईश्वरस्य तु प्रधानफलं प्रत्यव्यवहितकारणत्वात् सङ्कल्पाश्रय त्वाच्च विशिष्योपायत्वमिति भावः - व्यवहितकारणत्वத்தை யிட்டு இத்தை उपायமன்றென்றால் ईश्वरன் उपायமாகாதொழியானோ?தாயம் போலே स्वतः प्राप्तமாய் प्रतिबद्धமாயிருந்த फलं प्रतिबन्धं निवृत्तமாம்போது स्वत एव வரத் தக்கதாகையாலே இதில் ईश्वरसङ्कल्पमनपेक्षित மாகையால் उपायप्रदान सङ्कल्पமேயிவனுக்கு फलप्रदान सङ्कल्पமென்று கொள்ள வேண்டுகை யால் प्रधान फलத்துக்கு இவனும் व्यवहितकारणமத்தனையன்றோ? ஆனபின்பு ईश्वरன் विशिष्योपायமாகிறதெத்தாலே? என்னவருளிச் செய்கிறார். ईश्वरன் इत्यादि...

(सा.प्र) बुद्धेस्त्याज्यत्वे निबन्धनमाह - फलोपायत्वत्यागத்துக்கு इति । ''उपायं वृणुलक्ष्मीशं । तदेकोपायता याच्ना । त्वमेवोपायभूत'' इत्यत्रोक्तस्य भगवत्युपायत्व ग्रहस्य निबन्धनमाह - ईश्वरன் फलोपायமென்கிற इति । नन्वीश्वर सहज सौहार्दस्य तन्मूल यादृच्छिकादेश्च भक्त...

(सा.वि) प्रसादनं, प्रसादजनकम् । இவனுடைய अनुष्ठानम्, एतत्प्रपदनानुष्ठानस्य । व्यवहितकारण மாகையும், व्यवहितकारणत्वमपि । अचेतनமாகையாலே फलप्रदान सङ्कल्पाश्रयமல்லாமையும், अचेतन तया फलप्रदान सङ्कल्पाश्रयत्वाभावाच्च । फलोपायत्वत्यागनिबन्धनमित्यन्वयः । कर्तृत्व त्याग प्रकारश्चाचार्यैः ''स्वामी स्वशेषं स्ववशम्'' इत्यनेनानुष्ठितः - ननु सर्वोपायानामपि भगवत्येव...

(सा.सं) स्वव्यापारे ममता स्वस्मिन् प्रधानफलिता च विलयमुपयातीति भावः । फलोपायत्वेति । फलं प्रत्यव्यवहित कारणस्य फलप्रदान सङ्कल्पाश्रयस्य च हि फलोपायत्वम् । स्वानुष्ठानं च शरण्य प्रसादन मात्रत्वान्न फलोपायमिति तस्मिन् फलोपायत्वमपि त्याज्यमभूदिति भावः । ईश्वरस्य फलोपायत्व प्रकार परिशीलने स्वानुष्ठाने लेशतोऽपि न फलोपायत्वाभिमान प्रसक्तिरित्याह । ईश्वरன் इत्यादिना । सहजसौहार्देनैव करण कलेबरादि प्रदेऽतिकल्याणेषु कर्मसुरूचि जनन तदनुष्ठापन...

